उद्धृत्य[1] घोरायुधवृन्दवृष्टिमनुष्ठिता[2]मोघशरव्ययेन ।
स राक्षसेभ्योऽम्बरगोचरेभ्यस्त्रातस्त्वयैकेन मखो महर्षेः ॥ ५९ ॥

तं कालकल्पं कियता श्रमेण तथाऽवधीर्मार्गरुधं विराधम् ।
आसन्मुहूर्ताः कति च[3] घ्नतस्ते सैन्यं जनस्थानपतेः खरस्य ॥ ६० ॥

आसीत्क्षुर[4]प्रस्य कियान्विलम्बः क्रूरेषु तेषु त्रिशिरश्शिरस्सु ।
कतीषवो दूषणदेहयात्रानिवारणार्थं च रणे विसृष्टाः[5] ॥ ६१ ॥

कस्यावलम्बादकरोत्परासुं मारीचमुच्चावचमायमार्यैः[6] ।
ज्ञाता च दिक् संज्ञपितस्त्वयैव क्षपाचराणामधिपश्च सोऽपि ॥ ६२ ॥

इत्यप्रपञ्चोदितकारणानि मिथस्तयोस्तथ्यगुणग्रहाणि ।
नेदुः स्तुवाना इव सूनृतानि खगाः कुलायेषु कृतैकमत्याः ॥ ६३ ॥

आरोप्य सन्ध्यां दिशि वज्रपाणेः पर्यस्य चन्द्रं ककुभि प्रतीच्याम् ।
उत्सङ्गितोडुप्रकरा खगानाँमादाय निद्रां रजनी जगाम ॥ ६४ ॥

कविश्च जीवश्च सुतश्च भूमेः स दक्षिणाशातिलको मुनिश्च ।
आसन्नसूर्यांशुभयद्रुतस्य क्षणं ररक्षुर्भगणस्य पृष्ठम् ॥ ६५ ॥

दिग्दर्शयामास मुखं सरागं न यावदैन्द्री गणिकेव मत्ता ।
तावद्द्विजेशोऽङ्कमियाय सिन्धोः सन्ध्यासुराशीकरसेकशङ्की ॥ ६६ ॥

विसर्जितोडुः क्षणमिन्दुरासीदासीदुपान्तेष्वपि नान्धकारम् ।
भृशं दिशीन्द्रस्य रराज सन्ध्याँ सिन्दूरिणीव ग्रहराजमुद्रा ॥ ६७ ॥

उच्चैतुमुच्चैरुडुकुड्मलानि व्याकुर्वती रागमतिप्रगाढम् ।
शाखामिवालम्ब्य दिशं मघोनः सन्ध्या वियद्भूरुहमारुरोह ॥ ६८ ॥

[11]शेषोडुपुष्पस्तबकोच्चयाय सञ्जातरागातिशयेव सन्ध्या ।
अभ्युच्चकैः[12] पूर्वमहीध्रमूर्ध्नि स्थित्वा वियद्भूरुहमारुरोह ॥ ६९ ॥ ( तदेवेदम् )

विसृज्य पाण्डुच्छदनौघतुल्यं तारागणं व्योमतरुस्तदानीम् ।
बभार सन्ध्यारुचिमञ्जरीणां जालानि बालाधरकोमलानि ॥ ७० ॥

---

१. Bc द्धृत्य २. A ष्टीर ३. A नि । ४. A अभू ५. Bc सृ । ६. र्यैवर्यः । ७. Bc जना ८. A गुरुस्त्व काव्यश्च ९. Bc खस्य १०. A सन्ध्याविरासीद्दिशि वज्रपाणेः ११. C omits this Sloka १२. A दिक्शाखया.

उत्सारितैवाभ्रकरेणुकुम्भाज्जम्भारियुग्याधिकृतै[1]र्मरुद्भिः ।
ततान सन्ध्येति समुल्लसन्ती नभोऽङ्गणं रङ्गविकारधूलिः ॥ ७१ ॥

संवित्तयस्तत्त्वविगाहशुभ्राः सांसारिके राग इवाधिरूढे ।
शनैश्शनैर्म्लानरुचो ममज्जुस्ताराः प्रसर्पत्यरुणे चिरेण[2] ॥ ७२ ॥

कैः शिक्षिता वर्तयितुं तदासीदुन्मीलितं[3] तूलिकयेव चित्रम् ।
तरङ्गवत्तुङ्गशरद्घनालीविसंस्थुले व्योमनि बालसन्ध्या ॥ ७३ ॥

प्रत्युप्तमात्रं दिशि देवभर्तुरभ्यक्तखण्डाभ्रतरङ्गमालम् ।
बभौ विसर्पत्पयसीव तैलं नभस्तले बालपतङ्गतेजः ॥ ७४ ॥

प्रसक्तिनिर्व्यूढ[5]सुधामयूखं खमुष्ण[6]रश्मावपि रक्तिमूहे ।
भरं प्रतीच्छन्ति महोदयानां पात्राणि पर्यायवशंवदानि[7] ॥ ७५ ॥

तापिञ्छकल्पः ककुभि प्रतीच्यामाच्छादयामास मृगो मृगाङ्कम् ।
दूराधिरूढं जनमापदीव प्रकाशमानोऽतिशयादवर्णः ॥ ७६ ॥

प्रदीप्तसन्ध्याग्नि नदद्द्विजौघं निरंशुकध्वस्तपराङ्मुखेन्दु ।
वियद्विलुप्तोडुकुलं तदाऽभूच्चक्रान्तराक्रान्तपुरोपमेयम् ॥ ७७ ॥

मिथः कृतालोकमहोत्सवानां कृतारवः सारसदम्पतीनाम् ।
न बालभानोः किरणादभैषीन्नदीषु नीहारमयोऽन्धकारः ॥ ७८ ॥

ततार सन्तीर्य हिमान्धकारं तता रसन्ती सरितः खगाली ।
रक्तारविन्दस्य रजोभिरार्द्रैरक्ता रविं वारिणि वीक्षमाणा ॥ ७९ ॥

स्मरव्ययक्रान्तवलत्पुलिन्दीसर्वाङ्गसंवाहकलाविदग्धः ।
विलम्ब्य कोशेषु कुशेशयानां ससार कासारतरङ्गवातः ॥ ८० ॥

अतीत्य शैत्यं[10] तटवालुकानां कोष्णासु सस्नुर्मुनयो नदीषु ।
अपामपर्यन्त च नैर्झरीणां कुटा गिरिग्रामकुटुम्बिनीभिः ॥ ८१ ॥

जातप्रकाशासु बहिःस्थलीषु प्रकामचारोत्सवजागरूकः ।
इभो[11] भुवि प्रस्खलदग्रहस्तः सस्मार शैलोदरकुञ्जशय्याम् ॥ ८२ ॥

---

१. A चार । २. Ac भरेण । ३. Bc दनाकुलं । ४. A त्य । ५. A तिंनिर्गू ६. A खे प्रचण्ड ७. Bc नाम्. ८. A रक्षुश ९. B विय । १०. B शीतं । ११. Bc तो ।

समेत्य जृम्भानुपदं स्वयूथ्यैः मिथः क्षणं लीढतुषारलेपाः[1] ।
प्रतस्थिरे दिग्वलयं विलोक्य यथायथं कच्छभुवः कुरङ्गाः ॥ ८३ ॥

[2]अदृश्यताराच्चरलैः स्थलीषु वनचेराणां पृतना कुरङ्गैः ।
पपौ रवेः सञ्ज्वलितोग्रभासं भुजङ्गमौघः श्रितनाकुरन्ध्रैः ॥ ८४ ॥

स्थलं कुरङ्गीनयनैरनिद्रैरुन्मुक्तमुद्रैर्जलजैर्जलं च ।
विलोलतारैस्तरलद्विरेफैरुवाह भेदं न मिथस्तदानीम् ॥ ८५ ॥

जृम्भाभराद्दूरविसङ्ग[3]तानां मुद्राविलम्बेन दलावलीनाम् ।
निर्विश्य निश्शेषमलिः परागमगादबद्धः कुमुदाकरेभ्यः ॥ ८६ ॥

विवेश गर्तं गतमुत्तमोहिरुच्चैः पदं सन्ततमुत्तमो हि ।
आसीन्महः सम्पदि तुङ्गतायां नभो न कैश्चिद्वदितुं गतायाम् ॥ ८७ ॥

नैस्सङ्ग्यमालम्ब्यत कैरवेषु यैः शान्तिमद्भिः शनकै रवेषु ।
सौजन्यमम्भोजगृहे समेतैश्चिराद्विरेफैर्जगृहे समे तैः ॥ ८८ ॥

रेजेऽरविन्दैररविन्दवन्धोः सन्दर्शने दर्शितहर्षवेगैः ।
विधोर्विषेहे विरहः कथंचिन्निद्रावलम्बात्कुमुदाकरेण ॥ ८९ ॥

ऊहे जलैराहितकोपरागः क्षोभादलीनां नलिनीपरागः ।
व्यसर्जयद्द्यां विवृतापरागः शशी चिरादध्युषितापरागः ॥ ९० ॥

यथा विलुप्तोडुकदम्बकायां बालार्कपादैर्दिवि दीप्यते स्म ।
तथैव सुप्ताखिलकैरवायां रक्तारविन्दैरभितः सरस्याम् ॥ ९१ ॥

मुखेन भाति स्म सहस्रपत्रं मित्रोदयालोकविकस्वरेण ।
मञ्जुस्वनानामलिमार्गणानां स्वयंग्रहायेव विमुद्रकोशम् ॥ ९२ ॥

श्लथेन केचिद्विविशुर्मुखेन तलेन केचिद्दलसंहतीनाम्[4] ।
मधूत्सुकानां मधुपव्रजानामब्जेषु न द्वारविनिश्चयोऽभूत् ॥ ९३ ॥

लुलोठ धूलीषु पपौ मधूनि पक्ष्माणि लीढानि[5] पुनर्लिलेह ।
आगन्तवे स्तोकमपि द्विरेफः स्थितो ददौ नान्तरमब्जमध्ये[6] ॥ ९४ ॥

---

१. A श्चाः । २. C omits this sloka । ३. A ङ्ग । ४. A संहत्य । ५. C घ्राणि । ६. Bc कोशे ।

भेजे विनिद्रां नलिनीं न कूलान्न शीलयामास नवांकभासम् ।
[1]प्रियां प्रतीयाय तथैव मूढां खगः स्वबोधागमसाभ्यसूयः ॥ ९५ ॥

बहूनसौ पत्त्ररथस्तपस्वी चकार चाटूनुपकण्ठलीनः ।
दृशं प्रमीलापगमात्कषायामुन्मीलयामास चिरेण चक्री ॥ ९६ ॥

पारं तुषारक्षणसान्धकारमपि स्मरार्तित्वरितः पतत्री ।
श्रुतप्रियाह्वानरवः प्रतस्थे सीमन्तयन्नम्भ्जवनं विनिद्रम् ॥ ९७ ॥

जगाम भञ्जन्कमलानि कोकः कोकीपरिष्वङ्गमनोरथोत्कः ।
साऽप्युत्सुका तत्क्षणमाजगाम विलोकयन्ती वनमुत्पलानाम् ॥ ९८ ॥

कुर्वाणयोः सरसि पद्मवनावनद्धे भिन्नाध्वनोर्वितथमेव गतागतानि ।
संवादिदिक्पतितयोः पततोः कथंचित् द्वन्द्वं चिराद्धटितमर्धपथे बभूव ॥ ९९ ॥

व्यस्मर्यतामृतमरीचिकराभितापः प्रातः पतत्रिमिथुनैस्तपनं विलोक्य ।
जात्यैव शीतलमथोष्णमलं न किञ्चित् चित्रा गतिर्जगति जन्तुदशावशेन ॥ १०० ॥

कर्तव्यनिर्णयविरूढमनःप्रसादशंसिस्मितेन मुखचन्द्रमसा विराजन् ।
रामः प्रभातपवनाहितवीचिकम्पां पम्पामियाय सरसीं सह लक्ष्मणेन ॥ १०१ ॥

पार्श्वस्थावरजससंभ्रमोपनीतप्रत्यग्रस्फुटितविलोहितारविन्दः ।
सुस्नातः कृतविधिरञ्जसोपतस्थे काकुत्स्थः कनकरसावदातमर्कम् ॥ १०२ ॥

तौ दीर्घं विधिवदुपास्य पूर्वसन्ध्यां पूष्णीषत्प्रकटितरश्मिबर्बरीके ।
आसातां रहितमहीरुहोपकण्ठावुद्रेलैस्तिमितजटावनौ वनान्ते ॥ १०३ ॥

इत्यभिनन्दकविकृतौ रामचरिते महाकाव्ये मन्त्रविनिश्चयपूर्वकप्रातस्सन्ध्यावर्णनो-
नाम तृतीयः सर्गः समाप्तः ॥

---

१ C omits this line and B reads this line 'तथैव चक्राह्वयुवा जुघूर्णे दीर्घप्रियामोहमहोर्मिभीतः' here २ B मथवो ३ Bc भव. ४. B बुल्दुद्ध A दुद्रेष्ट ।

अयं रवेः सूनुरयं सदागतेरयं च पौत्रः शतयज्वनोऽङ्गदः ।
मनोरथस्तानिति मे समीपयत्यपत्यभावोपनतान्दिवौकसः ॥ २३ ॥

न तेऽथवा विस्मृतसर्वसंस्तवाः समागमिष्यन्ति मनोरथो वृथा ।
गृहाण काश्चिद्दिशमग्रतः पुनः विचेतुमेतां जगतीं यतेवहि ॥ २४ ॥

न किञ्चिदस्याप्यथवा फलं विधेरवीक्षमाणा पतिदेवरावुभौ ।
नृशंसरक्षःपरिपाटितर्जिता न वर्तते नूनमसौ तपस्विनी ॥ २५ ॥

ध्रुवं द्विषद्वाग्विषवेगविह्वला मुधैव कालं हरतोरिहावयोः ।
गता दिवं दिग्धहतेव शंवरी निराशमाशावलयं विलोक्य सा ॥ २६ ॥

अंसशयं तामगृहीतसान्त्वनां धुतोपजापामुपभोगनिःस्पृहाम् ।
कदर्थयन्मर्मसु मत्परायणाममारयन्निष्करुणो निशाचरः ॥ २७ ॥

अगादतिक्रम्य दिनानि जानकी परं न रामः कठिनो विदीर्यते ।
कयाऽऽशयाऽऽश्वासनया च कस्य वा कृशोदरी कालमियन्तमस्त्यसौ ॥ २८ ॥

कथं वैताध्यक्षसरोपदेशितामपश्यदुत्रस्तकुरङ्गलोचना ।
विशीर्णवन्दीजनपञ्जराश्रितामरातिकाराभवनाधिवासिताम् ॥ २९ ॥

किमेष्यतीस्याः सदृशं निकेतयोरिहाहृता यद्भुवि दण्डकावने ।
इतोऽपि यस्याक्षमया विधे पुनस्त्वयाऽतिदूरं गमिता तपस्विनी ॥ ३० ॥

अभूदभिज्ञा तव तत्र लक्ष्मण स्फुटं न मे वाष्पभरात्तदीक्षितम् ।
सपारिहार्यं पतदाक्षमम्बराद्दुकूलरत्नं प्लवगाधिपेन यत् ॥ ३१ ॥

पुनः पुनर्वत्स कथं स पृच्छ्यतां सुहृत्तमस्तस्य च तेऽनुयायिनः ।
इतो भवद्भिर्गगने कियच्चिरं श्रुतः स नारीपरिदेवितध्वनिः ॥ ३२ ॥

ध्रुवं तदैव क्वचिदुद्विलापया तयाऽनवाप्तत्रिदशानुकम्पया ।
महीमभिप्रेक्ष्य दुरात्मनो रथादनाथया पातितमात्मनो वपुः ॥ ३३ ॥

किमम्बरे किं भुवि किं पयोनिधौ किमद्रिमूर्ध्नि क्वचिदुच्छ्रिताश्मनि ।
न वेद्मि कुत्र प्रतिपात्य सा तनुं निजास्पदं कारणमानुषी गता ॥ ३४ ॥

१. B रव । २. B ग्धहतेव शर्वरी. ३. C श्च ४. C नी ५. B मेक्ष ६. B द्भुताप ७. A यमया. विधेः ८. B द.

क्रियच्चिरं त्यक्ष्यति मानुषी न सा नभःस्थलाक्रान्तिभयोत्प्लुतानसून् ।
असह्यगाढग्रहरोधवेदनाविराविणी रावणबाहुपञ्जरे ॥ ३५ ॥

विचेष्टमानात्कुचमण्डलान्तिके पतत्रिमात्राच्चासाति स्म या तथा ।
कथं जगत्कम्पकरस्य रक्षसः सहेत संवादमियन्तमद्य सा ॥ ३६ ॥

यया न येषामनुषङ्गपातिनी कथा सिताऽप्यस्य भुजामामृष्यत ।
शठेन तस्याः कथमद्य कल्पितास्त एव दैवेन सहाधिवासिनः ॥ ३७ ॥

क्षणं प्रिये मन्युरयं निवार्यतां निहत्य निश्शेषमिदं द्विषत्कुलम् ।
अयं विलुम्पामि विलोचनाम्भसः पथः समस्तानपि ते कपोलयोः ॥ ३८ ॥

गिरिः सुनिर्वर्णित एष माल्यवान् निविश्यतां मानिनि सानुनि क्वचित् ।
इमामपूर्वोज्ज्वलमाल्यमण्डलीनिवेशरम्यां कवरीं करोमि ते ॥ ३९ ॥

निषीद मूर्ध्ना भुजमूर्ध्नि मामके करोऽयमुष्णं विनिवारयिष्यति ।
अयं निदाघः कणवान्कपोलयोः तमालपत्रं तव तन्वि लुम्पति ॥ ४० ॥

तनूदका मार्गनदीयमग्रतः प्रसीद लीलालसमेव यास्यति ।
जडत्वसंभावनया मनाक् पुनः तवेदमभ्युन्नमयामि नूपुरम् ॥ ४१ ॥

इदं घनश्यामतृणोलपाचितं नदीतटप्लक्षतलं तलोदरि ।
इतो निषीद श्लथयामि ते शनैः श्रमाम्बुसन्दष्टमिदं स्तनांशुकम् ॥ ४२ ॥

विशेषकस्थानमयं विशेषवान् मनश्शिलापङ्कलवोऽधिरोहतु ।
व्रजन्तु बालाग्रनिबन्धसत्क्रियाममूनि पम्पावनचम्पकानि च ॥ ४३ ॥

असौ परिक्लेशसहो न ते करः किमात्मनोत्तंसयसीदमुत्पलम् ।
ममैष पाणिः स्तनयोस्तवानयोः नवाब्जधूलिं विनिकीर्य धावति ॥ ४४ ॥

वतंसकाब्जात्किमलिर्न वारितो हृतो न किञ्जल्ककणः किमीक्षणात् ।
किमुद्धृतं न श्लथमंशुकं मया यदेष रुद्धस्मितचन्द्रिकोऽधरः ॥ ४५ ॥

इदं लतावेश्म विविक्तमत्र ते करोमि पादौ यदि तन्वि ताम्यसि ।
रुणत्सि किं प्राणसमेषु योषितां रहस्यशस्तां गुणगौरि गौरवम् ॥ ४६ ॥

१. Bc स । २. B पीय । ३. A होपसीद ४. A मिदं ५. B पङ्कजा ६. B स्वा । C शुचा ।

कथं न सीतामुषितोऽस्मि लक्ष्मण क्षपाचरः पश्य पुलस्त्यपांसनः[1] ।
अयं ममाविद्धविलोलभूषणान्गृहान्गृहीत्वा गगनेन धावति[2] ॥ ४७ ॥

धनुर्धनुर्ज्योम्नि कथं न किञ्चन व्यलीकमेवाद्य[3] मयेदमीक्षितम् ।
हतोऽस्मि हा वत्स दवीयसी पुनः कृता हि मोहापगमेन मैथिली ॥ ४८ ॥

स्मितार्द्रबिम्बाधरमुद्रमुन्नसं मनःशिलाबिन्दुविशेषकोज्ज्वलम्[4] ।
प्रदीर्घहंसपत्रमदीर्घसङ्कथं कथं धरिष्ये तदनुस्मरन्मुखम् ॥ ४९ ॥

इति ब्रुवन्नश्रुपृषत्कदम्बकं कदम्बपुष्पप्रतिमं मुमोच सः ।
ररक्ष धैर्यं न विरूढवेदनो घनाग्निमालः शिखरीव काननम् ॥ ५० ॥

न लक्ष्मणोऽपीक्षितरामवैशसः शशाक रोद्धुं रयमश्रुणस्तदा ।
बभूवतुर्भिन्नघनावनोदरौ नभोनभस्याविव तौ समागतौ ॥ ५१ ॥

गुणा न यूयं नियतिर्गरीयसी यदेष देवश्चिरमश्रुभाजनम् ।
प्रसीद कैकेयि मनोरथाधिकं विलोकयार्यस्य दशाविपर्ययम् ॥ ५२ ॥

सहाश्रु मुञ्चन्ननुगच्छसि प्रभुं प्रयासि मृद्नन् विषमाणि नाग्रतः ।
अमूनशक्तोऽपि बिभर्षि लक्ष्मण क्व शिक्षितं क्षुद्रसहायचेष्टितम् ॥ ५३ ॥

समेहि शत्रुघ्न समं सहोदरावहं भवांश्चोभयतः समाहितौ ।
निमग्नमापज्जलधौ रघूद्वहं प्रतूर्णमुद्धर्तुमिमं यतेवहि ॥ ५४ ॥

विमार्गताशास्त्वरया हरीश्वराः सुदूरमुत्सर्पतु वः स्फुटं यशः ।
व्रज प्रतिज्ञाम्बुधिपारमञ्जसा किमार्य सुग्रीव मुधा विलम्बसे ॥ ५५ ॥

गृहाद्विवासो वनवासयातनापराभवोऽयं दयितापहारजः ।
विपज्जलौघैः श्लथसेतुसन्निभः कियद्भिरार्यो न विशीर्यतामयम् ॥ ५६ ॥

सरिद्दरिद्राति शरत्समागमे महासरः शुष्यति घर्मसम्पदि ।
स एति कालो न परं विलुप्यते यदेतदार्यस्य विलोचनोदकम् ॥ ५७ ॥

प्रियस्य सूनोर्न विलोकसे दशामनाकुले कोसलराजनन्दिनि ।
असौ वनेऽस्मिन्बहुकष्टसङ्कटे विवास्य पुत्रं दिवि सुस्थितः पिता ॥ ५८ ॥

१. A मुलः । २. A गच्छ । ३. B व्यतीत । ४. B त्रसं पुनः । C त्तमं पुनः । ५. B बैली ।

न यान्ति रत्नाकरसम्मुखापगा[1]समानवेगाः प्रतिरोद्धुमापदः ।
उदीरयन्तीह विशिष्टमुद्गमं गुणौघसंघ[3]र्षरसोद्धुरा इव ॥ ५९ ॥

इहैव चित्रा गुणबर्हिणः स्फुरन्त्युदीक्ष्यते रन्ध्र[4]मिहैव नाण्वपि ।
इहैव दुर्वारमिदं कथं पुनः महाविपद्व्यालवधूकदम्बकम् ॥ ६० ॥

इतो महत्कष्टमिदं दुनोति मामभी यदार्याकरशष्पलालिताः ।
परीत्य रुन्धन्ति तथैव नौ मुहुः सहागताः पञ्चवटीकुरङ्गकाः ॥ ६१ ॥

न याच्यसे भूरि वलीमुखेश्वर प्रसीद सख्युः प्रथमोपकारिणः ।
सहायभावो निभृतक्षपाचरप्रवृत्तिमात्रोपनयाद्विधीयताम् ॥ ६२ ॥

उपेत्य वा यूयमनन्तरं दिशो दशाननत्रासमपास्य शंसत ।
प्रवृत्तिमिष्टामधिदेवतामुखैः स यातु निद्रामलसो वलीमुखः ॥ ६३ ॥

महाब्धयो यान्ति निदाघतल्लतां व्रजन्ति वल्मीकनिहीनतां नगाः ।
भजन्ति चिन्तामणयश्च लोष्टतां जगत्यभाग्येन जनेन याचिताः ॥ ६४ ॥

अकारणं सत्यमकारणं तपो जगत्त्रयव्यापि यशोऽप्यकारणम् ।
अकारणं रूपमकारणं गुणाः पुराणमेकं नृषु कर्म कारणम् ॥ ६५ ॥

ज्वलन्ति वारीणि तपन्ति रात्रयो रवेर्न कुर्वन्त्यवलोकमंशवः ।
वहन्ति नः कर्मविपाकचोदिताः फलद्रुमा अप्यवकेशिनां व्रतम् ॥ ६६ ॥

इदं जनन्या भरतस्य सूत्रितं भवेद्[6]उत स्वन्तमनर्थनाटकम् ।
दशार्णवं घोरमिमं रघूद्वहस्तरेदथ प्राप्तहरीश्वरप्लवः ॥ ६७ ॥

[7]इतीरितान्तर्गतमन्युमश्रुणः सृजन्तमच्छिन्नरयास्तरङ्गिणीः ।
ददर्श रामोऽनुजसंज्ञमन्तिकाद्दर्पणस्थं प्रतिबिम्बमात्मनः ॥ ६८ ॥

अथोदकक्लिन्नतलेन पाणिना ममार्ज सास्रे नयने कनीयसः ।
जगाद चेदं[9] वचनं स सान्त्वयन्कथंचिदाकुञ्चितवेदनारयः ॥ ६९ ॥

त्वयाऽपि चेल्लक्ष्मण धैर्यमुज्झितं ममावलम्बं बत कः प्रदास्यति ।
प्रसीद निर्वाहय दीनमग्रजं न शोकसिन्धौ तव मज्जनक्षणः ॥ ७० ॥

---

१. A गाः । २. A द्य । ३. A ह । ४. चन्द्र । ५. A दहन्ति चन्द्रि । ६. A द्व । ७. A reads for this line इति स्फुटैरुत्थितबाधमाधिभिः प्लुतोपकण्ठं तटिनीभिरश्रुणः । ८. BC देह । ९ B उवाच चैनं

तथा न तस्या मृगशावचक्षुषः प्रवृत्तिलोपेन ममाधिरेधते ।
घनाश्रुमार्गोपहतानन[1]द्युतेः यथैकबन्धोरवलोकनेन ते ॥ ७१ ॥

अयं ककुप्सु प्रहिणोति यूथपान् प्लवङ्गराजः प्रतिभोपनामिनः[2] ।
प्रसीद निस्संशयमेष नन्दतु प्रजावतीजीवितवार्तया भवान् ॥ ७२ ॥

विभातसन्ध्येव कपीन्द्रवाहिनी भिनत्तु किञ्चित्पुरतो घनं तमः ।
ततस्तवार्काग्रकरैरिवांशुगैः ममावलोकः प्रसभं करिष्यते ॥ ७३ ॥

प्रमृज्यतामश्रु दृशोः प्रदृश्यतामिषोर्विशुद्धिः करयुग्मयोगिनः ।
रयो रुषामद्य चिरं निरुध्यतां[3] सुहृद्विलम्बान्तरितो रणोत्सवः ॥ ७४ ॥

उदीर्णकोपातपमेतदन्तिकाद्विलोक्य बालार्कनिभं तवाननम् ।
विलीयतां रात्रिरिव द्विषामसौ विसर्जिताहङ्कृतिचन्द्रिका चमूः ॥ ७५ ॥

शृणोतु संवर्तकमेघमण्डलीपरस्परास्फालननादमेदुरम् ।
स्ववीर्यगर्भस्तुतिवेगविह्वला तवास्त्रविस्फारमरातिवाहिनी ॥ ७६ ॥

जहीहि बाष्पं[4] विशदोऽस्मि लक्ष्मण क्षणाद्वयस्योऽप्युपयास्यतीव सः ।
निमित्तपुष्पाणि वदन्त्यमूनि नौ मनोरथानामविलम्बितं फलम् ॥ ७७ ॥

स्फुरन्नसव्यस्य ममैष चक्षुषः पुटः स्फुटं दर्शयति प्रियागमम् ।
अयं चिराच्चान्द्रमसेन वर्त्मना वहन्[5]वियोगान्तमिवाह मारुतः ॥ ७८ ॥

दिगङ्गनानां गगनाङ्गणस्य च प्रसादसंवादि यथाऽद्य मे मनः ।
तथाऽवगच्छामि गता इव क्षयं दशाविसंवाददुरन्तवासराः ॥ ७९ ॥

अयं वहत्याहृतपुष्पसौरभो वनानिलः प्राणसमाङ्गशीतलः ।
असौ सुहृत्केलिविवादकोमलः करोति रूढोऽपि न खेदमातपः ॥ ८० ॥

इयं रसत्यग्रे[6] शिवाऽशिवाकृतिर्व्यनक्ति वामेन वयस्यसङ्गमम् ।
ललत्ययं लक्ष्मण दक्षिणेन मे शुभानि शंसन्नृपतः प्रियासखः ॥ ८१ ॥

तताग्रपक्षो मम पक्षसम्पदं चकास्ति चाषः पुरतो वदन्निव ।
अयं च नः सिद्धमिवाभिकाङ्क्षितं क्षमारुहि क्षीरिणि वक्ति वायसः ॥ ८२ ॥

१, C ग्रंप्र । २. A तः ३. B न रुध्यते । ४. B तापं । ५. BC न्न ६. A चिरस्याद्रि । ७. A पदय ।

हरन्त्यमी कुड्मलशालिनो नगाः समृद्धकल्पा इव नो मनोरथाः ।
स्थिताः पुरः स्पष्टममूः फलानतमतानिनीपङ्क्तिनिभाश्च सिद्धयः ॥ ८३ ॥

इति ब्रुवाणस्य गिरं जगद्गुरोरुदारघण्टादिघनप्रभेदभूः ।
ध्वनिर्दवीयानवधानलक्षितश्चकार तारल्यकमन्तरात्मनि[1] ॥ ८४ ॥

विभक्तसामन्तसमूहलाञ्छनस्ततश्चिराच्छेदतरङ्गमूर्च्छितः ।
प्रकृष्टतूर्यत्रिकयोनिरुद्धभौ[2] विजृम्भिताद्रिग्रहगौरवो रवः ॥ ८५ ॥

विविच्यते स्म प्रततप्रतिस्वनः स्वनोऽवनद्धप्रभवः पृथग्विधः ।
ध्वनिर्भृशं व्यक्तिमियाय काम्बवः क्रमेण वेणोरपि शुश्रुवे रवः ॥ ८६ ॥

तिरोऽभवज्जर्जरझल्लरीरवैः[3] महीभृतां निर्झरझात्क्रियारवः ।
वितताने इति पाठः मृगव्रजानां वितान विद्रवं सविभ्रमो डिंडिमडुम्बिडम्बरः[4] ॥ ८७ ॥

प्रवालशङ्खस्तनिते समन्ततः शकुन्तिकोलाहलमस्तमैयत ।
मतङ्गजानामवलेपगर्जितं ममज्ज मन्द्रे मणिजन्मनि ध्वनौ ॥ ८८ ॥

ममौ मयूरीमदनादमांसलो न मर्दलानां ध्वनिरद्रिकुक्षिषु ।
न कुक्कुभौघक्वणितोर्मयः श्रियं हुडुक्कहिक्कालहरीषु लेभिरे ॥ ८९ ॥

सगोमुखक्काणतरङ्गसंहतिश्चिरं निनादोऽनुननाद पाणवः ।
स्थलीषु निर्घुष्टतलासु पार्ष्णिभिश्चकाशिरे केऽपि न पादपाणवः ॥ ९० ॥

चचाल वाचालमहीधरा मही वितेनिरे खं ह्रदपङ्क्[5]रेणवः ।
जहुस्तरूणां भयलोलदृष्टयः करार्धकृष्टं विटपं करेणवः ॥ ९१ ॥

बभुर्ध्वजाः सांशुकरत्नपल्लवाः ककुप्सु कल्पोपपदद्रुचौरवः ।
सहोदभूद्धानुगभस्तिभिन्नया मुखोद्भवो मौलिदृषद्रुचा रवः ॥ ९२ ॥

विविक्तचित्रांशुकचिह्नपालयः प्रकाशवालव्यजनव्रजश्रियः ।
शिखिच्छदच्छत्रकचन्द्रकप्रभावितानचित्राः ककुभश्चकाशिरे ॥ ९३ ॥

समं विशश्राम विमुक्तवीवधा पुरः परिस्कन्दवलीमुखावलिः ।
चिरान्मृदूभावमियाय वाहिनीनिवेशजन्मा तुमुलो मुखारवः ॥ ९४ ॥

---

१ A चेतः मुहुरागतोत्सुकः । २. A यथौ । ३. A नन्वयरजर्झरीरवैः ४. A दीर्णमडुम्ब । ५ C द्रुवा

क्षणं मिथः केलिरयं निवार्यतां निगृह्यतामेष च तूर्यडम्बरः ।
अयं स देवो विनयादुपास्यतामिति श्रुताऽऽसीत्कपिराजघोषणा ॥ ९५ ॥

ततश्च तौ पूर्णमनोरथाविव प्रसस्रतुः प्रस्रवणस्थलीमनु ।
प्लवङ्गराजध्वजिनीविनिश्चयान्मिथः समुद्भूतसभाजनत्वरौ ॥ ९६ ॥

गतस्य तस्याथ सहानुजन्मना नवोलपच्छन्नतलां वनस्थलीम् ।
बभूव सेवादरदूरबन्धुरः पुरो हनूमान्प्रभुकार्यकोविदः ॥ ९७ ॥

गीर्भिः समुल्लसितसंभ्रमगद्गदाभिः
संभाष्य तं विरचिताञ्जलिमाञ्जनेयम् ।
रामः प्रमोदतरलः सुहृदस्तदानी-
मभ्युद्गमाय सहसाऽनुजमादिदेश ॥ ९८ ॥

इत्यभिनन्दकृतौ रामचरिते महाकाव्ये वनस्थलीविभातसश्रीकता-
रामचित्तोत्साहसीतास्मरणवैक्लव्यमन्यूत्पीडितलक्ष्मणाभि-
सान्त्वनशकुनप्राशस्त्यससैन्यसुग्रीवाभिगमवर्णनो नाम
चतुर्थः सर्गः समाप्तः ॥

---

तथा तूर्णं कवेः कस्य निर्गतं जीवतो यशः
हारवर्षप्रसादेन शातानन्देर्यथाऽधुना ॥

नमः श्रीहारवर्षाय येन हालादनन्तरम् ।
स्वकोशः कविकोशानामाविर्भावाय संभृतः ॥

[3] किमिन्दुना चन्दनवारिणापि किं किमब्जकन्दैरभिनन्दवत्सलः ।
विचिन्त्यतामान्तरतापशान्तये स केवलं विक्रमशीलनन्दनः ॥

# अथ पञ्चमः सर्गः ।



अथाञ्जनेयाहितसौष्ठवोऽपि सन्कपिश्चकम्पे स विलोक्य लक्ष्मणम् ।
समागमे धामविशेषशालिनां न साध्वसं रोद्धुमलं महानपि ॥ १ ॥

सगौरवस्नेहरसार्द्रभारतीनिवारितार्न्भ्युपपत्तिचाटुना ।
स तेन लक्ष्मीभरदूरबन्धुरो हरीश्वरः सञ्जघटे महात्मना ॥ २ ॥

ततः प्रतस्थे रघुनाथसन्निधिं सहामुनाऽग्रेसरगान्धर्वीहानिः ।
प्रधानयूथानुगतः प्लवङ्गराट् भयत्रपाहर्षबलात्क्रियाकुलः ॥ ३ ॥

ननाम सौमित्रिनिषिद्धसाध्वसः स रामभद्राय सहानुयायिभिः ।
असौ समानीतसमस्तबान्धवस्तवार्गतो दास इति ब्रुवन्पुरः ॥ ४ ॥

अयं महाराज न राजते क्रमस्तवेत्यवस्थोचितया सपर्यया ।
पुरः प्रतीपेष चिरादुपस्थितं प्रियातिथिर्दाशरथिः सुहृत्तमम् ॥ ५ ॥

कृतानतीनुत्तमयूथपानसौ गृहीतनाम्नः पवमानसूनुना ।
ददर्श हर्षाश्रुजडेन चक्षुषा मनुष्यदेहान्तरितो जनार्दनः ॥ ६ ॥

नवाम्बुवाहच्छविरग्रतोनमत्पिशङ्गशाखामृगसिंहसंहतिः ।
पुरःस्फुरद्बालपतङ्गदीधितिरुवाह शोभामुदयाचलस्य सः ॥ ७ ॥

ततस्ततस्ते परिणाहशालिनीः शिलाः शिलाभेदचयोत्तरच्छदाः ।
रघुप्रवीरत्रिपताकदेशिताः समं समध्यासत यूथपोत्तमाः ॥ ८ ॥

१. A reads this only. २. B reads this only. ३. C reads this only. ४ A त्य ।
५. A मार्ग ६ ५ A ग्र । ७ BC प्राध्वनयं । ८ B शाब ।

स्मितेन वाचाऽभिनयैरभिज्ञया दृशाऽनुरूपासनदेशनेन च ।
झगित्यनैषीद्बहुमानपात्रतां पृथक् पृथग्यूथपतीन्जगत्पतिः ॥ ९ ॥

अहं सुदृष्टो मम दत्तमासनं ममापि नामात्तमहं सभाजितः ।
इति प्रसादाज्जहृषुर्जगद्गुरोः प्लवङ्गवेषस्थगिता दिवौकसः ॥ १० ॥

अथोपविष्टेषु कपिष्वनुक्रमात्पराक्रमाकूतविशेषशंसिषु ।
समृद्धसामग्र्यमनोरथश्चिरादुवाच सुग्रीवमुदीक्ष्य राघवः ॥ ११ ॥

सखे महाराज दिवाकरात्मज त्यज त्रपामुन्नमयाननाम्बुजम् ।
ध्रुवं न सुप्तोऽसि निशीथिनीमपि प्लवङ्गयोधानियतः समाहरन् ॥ १२ ॥

बलोदयेनैव महर्धिनाऽमुना ककुप्सु सौराज्यमुदीरितं तव ।
अनेन सर्वाङ्गसमर्पणेन च न्यवेदि सौहार्दमपि स्फुटं मयि ॥ १३ ॥

न संशयः सच्चरिते तवास्ति नः परीक्षितोऽसि प्रथमे समागमे ।
भवादृशानां नच धीविपर्ययस्तथापि हार्दादनुयोगमर्हसि ॥ १४ ॥

अवेक्ष्य कच्चिन्निजमण्डलं भवान् प्रकामसंप्राप्तशमः समागतः ।
कृताऽथ गूढस्पशचक्षुषा भृशं त्वयाऽरिमध्यस्थसुहृद्विचारणा ॥ १५ ॥

प्रतिष्ठिता श्रीर्विपुलेयमद्य ते वृतोऽसि मौलैर्यदुपेत्य यूथपैः ।
विशेषितस्वामिगुणेन वालिनि त्वया कृताः कच्चिदमी निरुत्सुकाः ॥ १६ ॥

अलम्भि कच्चिद्युवराजसत्क्रियामसौ परित्याजितभीतिरङ्गदः ।
तथैव तिष्ठत्यधिकाहितादरो मते चतुर्णामथ पूर्वमन्त्रिणाम् ॥ १७ ॥

शृणोषि कच्चिद्वचनं विपश्चितामथोद्धतानां नुतिभिर्न तुष्यसि ।
प्रवर्तसे कर्मसु चोदनावशात्प्रभुस्तवेच्छारभसो न कुत्रचित् ॥ १८ ॥

असौ विशेषात्परिबृंहितो वृषः सुरक्षितेयं क्षरतीहितानि गौः ।
प्रसाधयन्काननगोचरव्रजानुपैषि कच्चिज्जगदेकगोपताम् ॥ १९ ॥

पुरस्कृतप्राज्ञकुलीनदेशकः कुलोचितैर्गच्छसि कच्चिदध्वभिः ।
न कच्चिदाच्छिन्नविवेकरश्मिभिर्दुरिन्द्रियाश्वैर्विषमेषु पात्यसे ॥ २० ॥

समेतनानाविधसूक्ष्ममूलभूर्भवद्रुमोऽयं बहुभेदजालकः ।
विविच्य कच्चिद्दुरितालिदुर्गमं त्वया त्रिवर्गप्रसवं विचीयते ॥ २१ ॥

---

१. A न्त । २. A द्ध । ३. B तुधी । ४. Bc णात् । ५. A ये । ६. A त्य ७. Ac प्रपर्व ।

सुनीतिमित्रं तव कच्चिदाहतं द्विषां न षण्णामपि कच्चिदाश्रयः ।
समाप्य कच्चित्प्रचुरश्रमान्विधीन्विगाहसेऽच्छाप्सुपभोगवाहिनीम् ॥ २२ ॥

विशन्ति कच्चिन्निभृतं विभूतयो भवन्तमम्भोनिधिमापगा इव ।
त्वदेकतुङ्गात्मभवत्युमागुरोस्त्रिमार्गगास्रोत इवामलं यशः ॥ २३ ॥

उपेत्य कच्चित्तृषितान्प्रतीच्छसि प्रयच्छसीच्छाधिकमर्थिवत्सलः ।
समृद्धसस्यासु निरुद्धसंप्लवः प्रजासु गृह्णासि बलिं विलम्बवान् ॥ २४ ॥

प्रमाणमुस्तं[1] जननी न वासितः फलं महत्क्षेत्रकृतो न रक्षितुः ।
न मृग्यते कच्चिदनागसः छलं[2] कणो गुणस्याथ विविच्य गृह्यते ॥ २५ ॥

गुरुस्तदात्वात्तव कच्चिदायतिः स्वकारणादै[3]र्घति मित्रकारणम् ।
त्वराभभीष्टां दिशति प्रतिश्रुतं श्रुतं सुदृष्टादपि चौ[4]तिरिच्यते ॥ २६ ॥

हृतोऽसि कच्चिद्विधिभिर्न केलिभिः गुणैर्गतो दीप्तिमलं न भूषणैः ।
स्तु[5]तः प्रतिद्वन्द्विकुलै[6]र्न बन्दिभिर्द्विपोपनीतः प्रभुतां न सम्पदा ॥ २७ ॥

तवावरोधः ककु[7]भः प्रसाधिताः परिच्छदः कच्चिदनुत्तरं तरः ।
श्रुतं सुहृद्वित्तमनित्वरं[8] यशः पराक्रमः शास्त्रमहङ्कृतिश्चमूः ॥ २८ ॥

बली विलुम्पत्यबलं न कुत्रचिन्न पुत्र इत्युच्चलितो विषह्यते ।
समेत्य कच्चिद्वनदेवतागणैः त्वमीक्षसेऽक्षान्मृगपक्षिणामपि ॥ २९ ॥

स्वपन्ति कच्चिद्गृहिणो निरर्गलाश्चरन्त्यरण्ये रुरवो निरीतयः ।
न जातु निर्भर्त्सितदीर्घजीवितः सुताय दत्ते जनको जलाञ्जलिम् ॥ ३० ॥

क्रमोचिताचारकुठारखण्डितप्ररूढपापक्षुपमूलपर्वसु ।
प्रसह्य कच्चिज्जगदद्य पालितं त्वयैकनेत्रा कृतकालवर्त्मसु ॥ ३१ ॥

परं प्रसूनस्य हिनस्ति सौरभं न मारुतः कम्पयति प्रताननीः ।
वनानलः शुष्कपलाशलेलिहो न कच्चिदाश्लिष्यति बालपल्लवान् ॥ ३२ ॥

त[9]तस्ततस्तावदसौ न पित्सति श्लथोऽपि कच्चिद्गिरिनिम्नगातटः ।
न यावदस्य स्खलदोघसन्निधौ सुखप्रसुप्ता पृषती विबुध्यते ॥ ३३ ॥

---

१. C D नजनी न वासवः । २. A दिवागसः खलः । ३. A र्है B र्थै । ४ Bc वा । ५. A नतः । ६. A भटैः । ७. A भिः । ८. A नुत्त ९. Bc य ।

करोति कच्चिन्न वृथा जलव्ययं वृपा कृपिं पालयति प्रजामिव ।
चलन्त्यनुत्खाय कुलायपादपानथापगाः पर्वतपीडिता अपि ॥ ३४ ॥

रुणद्धि कच्चित्क्रमसुप्ररोहिते स्वसीम्नि शाखी वलमानमातपम् ।
पतत्रिणः स्तोकजलस्य कारणात्किरत्यकालेपि वलाहकः कणान् ॥ ३५ ॥

न जात्वहिः सन्निहितानिलाशनो विपव्यलीकाद्विलगर्भमुज्झति ।
सटासु कच्चिच्चटुलस्य मृष्यते करोपमर्दं कलभस्य केसरी ॥ ३६ ॥

अभीतिविश्वासबलाद्विलम्बितं वनान्तरे कच्चिदुपेत्य[१] वत्सला ।
मुहूर्तनिक्षिप्तनिजस्तनन्धयया धिनोति खिन्नं पृपतार्भकं वृकी ॥ ३७ ॥

समं विभक्तो विनयः सुबुद्धिषु क्रमात्तिरश्चामपि संस्क्रियाऽऽहिता ।
गतेन कच्चित्प्रसुतामनुत्तमां त्वयाऽनुशिष्टा जरठाः कुठा अपि ॥ ३८ ॥

शिलाः कठोराः कुटिलास्तरङ्गिणीः समीरणं चातिचलं विलोकयन् ।
विकत्थितुं बह्ववशेपलज्जितो जगद्विनीयापि न कच्चिदीशिषे ॥ ३९ ॥

तवानुगैरेभिरुदग्रविग्रहैर्विजीयते कोटिशिरोधरोऽप्यरिः ।
दशास्यमात्रे[२] कृतभीरुविद्रवे किमद्भुतं रक्षसि तस्करे पुनः ॥ ४० ॥

विजित्य जम्भप्रभृतीन्महासुरान्पुरन्दरेणानुमता महीमनु ।
अमी विभान्ति स्फुरितोदितर्द्धयः सुरप्रवीरा इव तेऽनुयायिनः ॥ ४१ ॥

रसेन कच्चित्त्वरसे[३]ऽथ नः कृते कृतस्य निष्कासमुताभिलष्यसि ।
न कार्यमस्माकमवत्सलोऽसि चेदभिन्नभावस्य वयं सखे( ? )तव ॥ ४२ ॥

यथा तथाऽस्मासु विचेष्टतां भवान्मनो न भावान्तरमेति नस्त्वयि ।
न धित्स[४]ति क्षेममर्पणेन[५] तु प्रतिश्रुते वस्तुनि विघ्नयोजना ॥ ४३ ॥

इहास्व वा सम्प्रति गच्छ वा गृहानहं न कामं प्रतिकूलकृत्तव ।
दशाननास्रक्तृपितैः पतिष्यते ककुप्सु वत्सस्य ममास्य चाशुगैः ॥ ४४ ॥

इति प्रसादद्रवसूक्तिवर्षिणो ववर्ष तस्योपरि पुष्पतोयदः ।
त्वरामभीक्ष्णं च रराण रोपयन्वनौकसां चेतसि देवदुन्दुभिः ॥ ४५ ॥

[६]अगर्जवर्षैः पिदधे खमम्बुदैरकम्पतानन्दभरादिवावनिः ।
विशुश्रुवेऽन्तर्हितसिद्धसङ्घजं जयेति जीवेति च वीप्सितं वचः ॥ ४६ ॥

१. B दप । २. B ना । C D त्रा क्ष । ३. A द्वि । ४. A गच्छ । ५ A पु । ६ A ज ।

ततः प्रफुल्लस्थलपद्मिनीनिभा सभोपतस्थे सहसा वनौकसाम् ।
तमीरितश्लाघ्यरुचिं नरेश्वरं ग्रहेश्वरं यातमिवाभिरामताम् ॥ ४७ ॥

जगाद भावं वचसैवं जाम्बवानुवाह हर्षं पुलकेन केसरी ।
ततान तारस्तरलोऽतिसंभ्रमं ननाम तूष्णीमथ वालिनन्दनः ॥ ४८ ॥

विलम्बदोषान्निजभर्तुराननं[3] विलज्जमानोऽनिलसूनुरैक्षत ।
निशम्य तत्पूर्वमगर्वमूर्जितं ननन्दतुः सूनृतमश्विनन्दनौ ॥ ४९ ॥

सुवाक्सुधासारसमीरवीजिताः सुषेणमिश्राः श्रममध्वजं जहुः ।
सुखप्रमीलामुकुलीकृतेक्षणः क्षणं समाधिस्थ इवाभवन्नलः ॥ ५० ॥

शशाक रोद्धुं रभसो न संमदं मदादिवाघूर्णत गन्धमादनः ।
व्यकत्थत व्यक्तरदाग्रचन्द्रिकानिरुद्धनिष्कांशुचयोऽथ चन्दनः ॥ ५१ ॥

प्रतिक्रियारम्भरसोच्चकन्धरो रराज रम्भः कपिराजसंसदि ।
धुताञ्चितास्फोटितवालधिर्वलन्वभौ बहुव्याकृतराभसो रभः ॥ ५२ ॥

विचक्रमेऽर्थं क्रमवेगविक्रियाविकाशदत्तारिदरो दरीमुखः ।
तदावलेपस्मितकान्तिनिर्गमाददर्शि[7] संज्ञासदृशं न दुर्मुखः ॥ ५३ ॥

विदर्शितोत्प्रासलवे सुहृत्तमे किमुत्तरं संप्रति मन्थरस्य ते ।
इतीव जल्पन्वलितारुणेक्षणो रुषं रुमण्वानवहत् कपीश्वरे ॥ ५४ ॥

वचोमनःकायनिवेदितत्वरा परीत्य रामं शुशुभेऽथ सा सभा ।
दिनावलोकक्रमभिन्नकुड्मला सरोजिनी पादगतेव पर्वतम् ॥ ५५ ॥

अथेक्षितर्क्षेन्द्रसमीरनन्दनो हरीश्वरः प्रत्यवदन्नरेश्वरम् ।
निषेधयन्नुद्वलयेन पाणिना मुहूर्तमुद्योगपरिप्लुतान्कपीन् ॥ ५६ ॥

न जातु जानन्त्यनुरोधशीलिनो भवादृशा वक्तुमसूनृतं वचः ।
यदेष दासोऽहमपि प्रमादवान्वयस्यसंभावनया सभाजितः ॥ ५७ ॥

निराशिषा निर्निलयेन मेदिनीमिमामटित्वा निभृतेन कुत्रचित् ।
तव प्रसादादनिमित्तसुप्रभोरिदं मयाप्तं पदमात्मनश्चिरात् ॥ ५८ ॥

---

१. A जा । २. B C चानन्तरमेव । ३. B निलिः C नलिः । ४. B C न । ५. B C मै । ६. B C वि । ७. A ददर्श B द्वदर्शि । ८. A व्याहानिजा । ९ B वेश । १० D पा ।

तदैव कालीकरणाय सन्ततेरकीर्तिभूतिर्महती मयार्जिता ।
इहाचले वर्षभयाद्विहाय वां गतो यदैवा[1]हमधित्वरः पुरीम् ॥ ५९ ॥

इतः कृतघ्ने मयि मन्दिरं गते गतेऽतिभूमिं विरहेऽतिदारुणे ।
वने विनोदान्तरवर्जिते गताः कथं नु देवस्य नभस्यवासराः ॥ ६० ॥

तथा चतुर्मा .कदर्थनावशादतिप्ररूढं तव तानवं तनौ ।
यथा निसर्गाद्गुरयापि सम्प्रति त्विषा तिरोधातुमिदं न शक्यते ॥ ६१ ॥

प्रमत्तमात्मंभरिमप्रतिष्ठितं धिगस्तु मां शत्रुमिमं सुहृन्मुखम् ।
निमित्तमाधेरधिकस्य तेऽधुना यदेष जा[2]तोऽहमतीतसङ्गरः ॥ ६२ ॥

न बोधितः स्यामुपसृत्य चेदहं हनूमता जाम्बवता च बन्धुना ।
तवैष मूलं महिमप्रमीलितस्ततः किमद्यापि भवेयमागतः ॥ ६३ ॥

प्रसीद तेजः प्रतिहन्यते न मे नमन्ति मां पक्षिसरीसृपा अपि ।
निपातितः शत्रुरुपाश्रिताः श्रियस्त्वयैव नीता मम दूरमीतयः ॥ ६४ ॥

रुचेयमा[3]राजति यावती रवेरहं महीमद्य भुनज्मि तावतीम् ।
तथा समुत्तीर्णसपत्नतोयधेर्ममाधुनाऽमी क इवाम्बुराशयः ॥ ६५ ॥

यथातथाऽहं विहरामि निर्वृतो विमुक्तचिन्ताः सचिवाः स्वपन्त्यमी ।
ममास्पदे रुद्धसमस्तचामरं तवैव जागर्ति जगत्पतेर्महः ॥ ६६ ॥

प्रसीद कम्पः क्वचिदस्ति नाद्य मे भवत्पदा[4]नुग्रहनिर्धुतापदः ।
समादिशादेशकरो[5]ऽहमागतः स मृग्यतां दिक्षु विदिक्षु राक्षसः ॥ ६७ ॥

अमी विविच्य प्रवरा वनौकसो मयोपनीता नवखण्डवासिनः ।
गताध्वनामारविरश्मिगोचराद्विचिन्तयैषामुपयोगसत्क्रियाम् ॥ ६८ ॥

अमी च दुग्धोदतटान्तवासिनः सुधा[6]ब्धिवेलानिलयैः सहागताः ।
प्रतीक्षमाणा नियमं तवासते यथाभिकामप्रसराः प्लवङ्गमाः ॥ ६९ ॥

अयं कुशद्वीपचरः प्लवङ्गराट् निरङ्कुशः शङ्कुसहस्रनायकः ।
दशाननान्ताय मयोपमन्त्रितः पुरस्तवाज्ञाबहुमानमर्हति ॥ ७० ॥

१. BC मां यदैवयातो । २. A या । ३. B ह्या C ढ्या । ४. BC त्कृपा । ५. B शप्रेषकरोय ।
६ AB रा ।

समेतसङ्ख्यातिगशाकशाल्मलीनिवासिनानाविधयूथपाधिपैः[1] ।
असौ तवात्युच्चशिराः सुदुष्करं निदेशमाशंसति पुष्करेश्वरः ॥ ७१ ॥

अमी तवाज्ञावनमालभारिणः शिरोभिरभ्यर्चितुमुच्चशेखरैः ।
निशीथनक्षत्रसमानसङ्ख्यया समागताः प्लक्षसदोवलीमुखाः ॥ ७२ ॥

असावुपद्वीपसदामनीकिनी वनौकसां माति न मेदिनीतले ।
अमुष्य चास्ताचलमेखलापतेः पताकिनीनां गगनेऽपि नान्तरम् ॥ ७३ ॥

कियन्नभः क्ष्मा कियती पयोधयः शिलोच्चया वा कलनास्पदं न नः ।
अमी इतीवोद्धतसङ्कथा मिथो वदन्त्यनीचैरुदयाचलौकसः ॥ ७४ ॥

कुटीयमल्पा शतपत्रसद्मनः सहेत सम्पातमितस्ततो न मे ।
इतीव सम्पातिरयं विचिन्तयन् महाबलो दिग्वलयं विलोकते ॥ ७५ ॥

अयं वयस्यः पनसोऽभ्यसूयति प्रतीक्षितत्वन्नियमाय मे मुहुः ।
अयं च रुद्धोऽपि धुनोति पन्नदः शिरश्चलत्[3]केसरभारभासुरम् ॥ ७६ ॥

पतङ्गसंभावनयाऽयमुन्मुखः पतङ्गवीथीमृषभो जिगीषति ।
अनास्थयैवायमधो विलोकते शरावकल्पां शरभो वसुन्धराम् ॥ ७७ ॥

अयं गवः पुङ्गवलोलवालधिः सलीलमुद्वृत्य गवाक्षमीक्षते ।
त्वया मया च द्वितयेन धूरियं न दुर्वहा भर्तुरिति ब्रुवन्निव ॥ ७८ ॥

असौ जिगीषारभसं प्रमोदवान् पताकिनीनां कुमुदोऽनुमोदते ।
अयं विशेषोपनतत्वरोत्सुको न विक्रियां गूहति गन्धमादनः ॥ ७९ ॥

अमूनुमासंभ्रमसंस्मृतेरिव स्मरारिशैलाभिजनानगर्जतः[5] ।
हसन्त्यमी वृद्धनिवारिता अपि स्मृतार्यसन्ध्याविधयः किशोरकाः ॥ ८० ॥

मुखेन मे प्रार्थयते गरीयसीमयं धुरं दम्य इवोन्मदोऽङ्गदः ।
अयं च किञ्चिद्दलिताञ्चिताननः स्मितेन शंसत्यवलेपमानिलिः ॥ ८१ ॥

विचित्रविक्रान्तिविकुञ्चितत्रिकास्त्रिकालविद्भ्रूवलिरुद्धलोचनः[6] ।
युवेव जातोत्कलिकः स्वविष्टरादुदेति हृष्यन्नयमार्य जाम्बवान् ॥ ८२ ॥

१. A गः । २. A नका । ३. BC स्फुर । ४. B थाव । ५. B नुगार्जिनः । ६. A त्रिविक्रमकान्तिनि ।

सखीन् समाहर्तुमिमानितो मया पुरीप्रवेशोऽनुमतस्त्वयोदितः ।
शठोऽप्युपेक्षेत तथा किमन्यथा दिनानि मेघोदयदारुणानि ते ॥ ८३ ॥

प्रसीद सौम्यानन पद्मपद्मशः प्रयान्त्यमी दिग्विजयाय यूथपाः ।
निसर्गलोलाः कपयो न जातुचित्स्वचित्तसंवेगविधारणक्षमाः ॥ ८४ ॥

दृष्टां शृणोषि हरिभिस्तरसाऽद्य सीतां चिन्तामिमामतिगुर्वी सहसा त्यसीताम् ।
कीर्तिं श्रियं च न चिरात्पुनरेकपीनां साहायकेन तनुषे समरे कपीनाम् ॥ ८५ ॥

कालो मयाऽनघशरत्पदवीरसेन क्षिप्तः समेतवनगोचरवीरसेनः ।
प्राप्ताः प्लवङ्गपतयः सुतरां त्वरन्ते शाधि प्रसीद किममी जनयन्त्वरन्ते ॥ ८६ ॥

इति तं वदन्तमवदत्प्रियं प्रभुः पथिजं त्यजन्तु कपयः परिश्रमम् ।
भृशमेत एव सुधियः सुखोर्चिताः परतः प्रमाणमिह कामकेलयः ॥ ८७ ॥

कटकं निवेश्य कटकेऽथ भूभृतः कतिभिश्चिदानिलिमुखैः सुहृत्तमैः ।
सहितश्चिरात्परिचचार चाटुभिः शिखरस्थितं हरिपतिर्जगत्पतिम् ॥ ८८ ॥

अव्याजतां च विनयं च कृतज्ञतां च दाक्ष्यं च धाम च धियं च तथाऽभिवीक्ष्य ।
तं संमुखेऽपि सहसोत्पुलकाङ्गयष्टिः तुष्टाव तुष्टितरलस्तिलको रघूणाम् ॥ ८९ ॥

चिन्ताकुलेऽपि हृदि सप्रणयोपचारः सार्द्रद्युतिर्वपुषि कष्टदशाकृशेऽपि ।
धन्योऽयमस्मदधिपः सुहृदेष यस्येत्येकैकशस्तमनिशं कपयोऽभिदध्युः ॥ ९० ॥

निकटनिजविधिभ्यां सोऽनुमेने तदानीमवनिपतिसुताभ्यामादरेणाह्निकाय ।
स्वनिलयगतमात्रः सुप्रतीपागमाभिः कपिपतिरुपदाभिस्तावजस्रं सिषेवे ॥ ९१ ॥

अकृतविहगानीकोद्वेगो मृगैः सह सख्यवान् फलकुसुमयोरप्यादानं प्रति स्तिमितादरः ।
रघुतिलकयोरत्यासन्नश्चकार कुतूहलं विनयलिखितः स्कन्धावारः प्लवङ्गपतेरसौ ॥ ९२ ॥

इत्यभिनन्दकृतौ रामचरिते महाकाव्ये रामसुग्रीवसंवादो नाम

पञ्चमः सर्गः समाप्तः ॥

---

१. A वृ । २. A हि B नु । ३. A त्र । ४. A वि । ५. A मभि । ६. A B बलस्य ७. B च ।

श्यामः सितासितनिरायतपक्ष्मलाक्षः
क्षामोदरः कठिनकान्तभुजान्तरालः ।
सर्वाङ्गपल्लवितयौवनलाञ्छनश्रीः
श्रीहारवर्ष इव कुत्र पतिः पृथिव्याः ॥

# अथ षष्ठः सर्गः ।



अथ कृतदिवसस्थितिः कपीशः कपिविनिवेशविलोकनोन्मुखस्य ।
सविनयमुपसर्पणक्षणज्ञश्चरणसमीपमियाय राघवस्य ॥ १ ॥

प्रणयरभसपूजितेन तेन प्रियसुहृदा सह लक्ष्मणानुयातः ।
बलसमुदयमीक्षितुं पुरस्तात्परिसरमुच्चशिलं जगाम रामः ॥ २ ॥

अथ सदृशविलासदीप्तशोभं कपिकटकं विकटं तमीक्षमाणः ।
अरमत समकालमुक्तनिद्रं कमलवनं शरदीव राजहंसः ॥ ३ ॥

इति च विवृतविस्मयाय तस्मै तरणिसुतः श्रुतविक्रमावदानान् ।
अकथयदवलोकनानुयुक्तः पृथगभिधामभिधाय वानरेन्द्रान् ॥ ४ ॥

अयमतिबहुदीप्तसंविधानः शतवलिरुत्तरवेदितन्त्रपालः ।
दशदशशतकोटियूथपेशः त्रिदशपतिप्रतिमः प्लवङ्गवीरः ॥ ५ ॥

कतिपयगणगोचरानुदीचः चरति चमत्कृतकिन्नरोपगीतः ।
अयमलघुपराक्रमः प्रदेशानवनिभृतस्त्रिपुरारिपूजितस्य ॥ ६ ॥

अयमुपनतिरुद्धरुद्रकोपः कपिपतिरैलबिलस्य मेदिनीध्रे ।
तरलयति समाधिनिश्चलानामुपकरणानि कुतूहली मुनीनाम् ॥ ७ ॥

भृगुपतिशरवर्त्मनैष तिर्यग्विरचितसूक्ष्मसुदीर्घदेहबन्धः ।
उपहितगुहमत्सरं महीध्रं मणिमिव सूत्रमतीत्य निष्पयाति ॥ ८ ॥

जनयति न भयं हयाननानामधिगतकिंपुरुषेश्वरोपहारः ।
हरिरयमधिरुह्य हेमकूटं हरति मनो हरिवर्षवासिनां च ॥ ९ ॥

१. A पृथुभुजान्तरकान्तिशाली । २. B दिवसकृत । ३. B धृ । ४. A तन्त्रचेद । ५. A नघ
६. A गणानां

अभिपतति सुमेरुचक्रवालं निषधतटादयमेकविक्रमेण ।
कृतकनकजलापगावगाहः फलमभिलष्यति चैष चैत्यजम्ब्वाः[1] ॥ १० ॥

अपि मुहुरमरौघसीमरुद्धः[2] पवनमुखं[3] श्रुतरामणीयकस्य ।
अयमतिरभसप्रवेशहेतोश्चलयति भित्त्यचलानिलाहृतस्य ॥ ११ ॥

तटिदिव तरलस्ततो विराजत्युपरि सुपार्श्वमहावटद्रुमस्य ।
नवमिव जलवाहमंशुमाली नगमथ गच्छति लीलयैव[4] नीलम् ॥ १२ ॥

विधिविरचितरत्नुपायरम्यं रमणकमुच्चमनोरथोऽनुभूय ।
क्षणमुपरि सिताचलस्य पश्यत्ययमुपविश्य हिरण्मयं च वर्षम् ॥ १३ ॥

निजमणिगृहदेहलीसमाख्याजितविपुलायतशृङ्गिशृङ्गमालः[5] ।
विचरति कुरुपूत्तरेषु पश्यन्नयमचलौ शशिकान्तसूर्यकान्तौ ॥ १४ ॥

अधिवसति सकल्पशाखिषण्डां तटभुवमुत्तरसीमसागरस्य ।
मम भवति पुरश्च कार्यकाले स्मृतिसमकालमयं वलीमुखेन्द्रः ॥ १५ ॥

ज्वलदनलविकृष्टहेमगौरस्त्रिजगति विश्रुतविक्रमोऽयमुच्चैः ।
हरिपतिरचलेश्वरस्य मेरोः सदृशशिराः श्वशुरोऽस्ति मे सुषेणः ॥ १६ ॥

अतिलघुपतनैरतिप्रगल्भैरतिविशदप्रतिभैरतिप्रभूतैः ।
अतिविततगुणैर्गणैरिवोग्रः प्लवगभटैरयमावृतो विभाति ॥ १७ ॥

दिशमयमधितिष्ठति प्रतीचीमपर इवापरिशीतलः[6] प्रचेताः ।
स्मृतिशमितमहाधिरोषधीभिः निजकरणीयमुपेत्य पृच्छ्यमानः ॥ १८ ॥

विहसितविरसागदोपयोगो गदमतिरूढमपि प्लवङ्गमोऽयम् ।
गमयति सहसा दृशैव दूरं तिमिरमिव प्रभयाऽरविन्दबन्धुः ॥ १९ ॥

निहितहिमनिजावलोकपिण्डः समितिषु रोपयति क्षणाद्व्रणानि ।
घटयति च पृथक्कृतः प्रतीकैरयमभिमृश्य करोदरेण वीरान् ॥ २० ॥

त्यजति जगति केवलं न संप्रत्यसुरजयी भगवान् गदानुबन्धम् ।
स च परमचिकित्सितोग्रशूलो भुवनगुरुर्भिषजोऽस्य वीक्षितेन ॥ २१ ॥

---

१. B वृक्षात् D चैत्यकालजङ्घाः । २. B C रोधसा । ३. B सुत । ४. A व । ५. B गृहमनु । ६. B C गौरवो ७. A प्रति ।

अयमपि च निवातनिश्चलाब्धिस्तिमितमहाकपियूथपानुयातः ।
श्रुतसविधनिविष्टवृद्धवाक्यो विनयनिधिर्विनतः शिरो धुनोति ॥ २२ ॥

अयमुदयगिरेः शिरोऽधिशेते चरति नदस्य तटेऽरुणोदकस्य ।
अभिपतति च शाल्मलीं मुहुस्तामहिं[1]कुलशत्रुकुलायभूषिताग्राम् ॥ २३ ॥

सितजलमपरं ततोऽब्धिमेष प्लवगपतिः पतति प्रयोजनेन ।
स्थलकमलवनस्थितं नमस्यत्यथ भगवन्तमनन्तमादिदेवम् ॥ २४ ॥

दिशि दशशतनेत्रपालितायामयमखिलानवलोक्य सन्निवेशान् ।
उपनमति हरिर्हरौ हयास्ये[2] भगवति भद्रकदम्बगोचरे च ॥ २५ ॥

विनयचलितवालधिर्विलासस्मितमधुरा[3]ननमण्डलो बलानि ।
अयमपि च किमप्युदञ्चितभ्रूर्वदति विरिञ्चिसुतोऽथ केसरीति ॥ २६ ॥

शरदमलतले नभस्युडूनां ततिमिह यो मतिमानवच्छिनत्ति ।
कलयति स चमूपतेरमुष्य स्फुटमहसामनुजीविनामियत्ताम् ॥ २७ ॥

कुलभवनममुष्य भूभृतोऽष्टौ चरितचरं चतुरब्धिकूलमस्य ।
अभिनववयसा नवाप्यनेन क्षितिशकलानि बलीयसा जितानि ॥ २८ ॥

उपरि चरति[4] गन्धमादनस्य श्रयति सुमेरुममर्त्यसौहृदेन ।
व्रजति कृत[5]कुतूहलः कुलाद्रीनयमितरानपि कार्यगौरवेण ॥ २९ ॥

परिणतिशिथिलोऽपि लङ्घतेऽब्धीनयमधुना मधुना समानवर्णः ।
करबदरनिभामिमामवैति क्षितिमुदितो मुदितो बलीमुखेन्द्रः ॥ ३० ॥

अयमनघनरावतार तारस्तरुणदिवाकरमण्डलोपमास्यः ।
प्रतपति पृतनाशिरोमणीनामुपरि महाद्रि[6]वनौकसामधीशः ॥ ३१ ॥

क्षितिमयमनुशोचाति प्लुतार्धादधिगतसीमशिलोच्चयापरान्ताम् ।
करकलितरविर्विलङ्घितेन्दुर्दिवमभिनन्दति वर्धमानशेषाम् ॥ ३२ ॥

कृतवसतिरयं कपिः कुमार्यामवनिमनार्यजनां न यात्य[7]कार्यः ।
कतिचन मसृणोच्चकूटकोटीन् जनयति केलिगतागतेन शैलान् ॥ ३३ ॥

१. A B लि २. D हयस्थे ३. A विशदा । ४. C D चरति च । ५. C गत । ६. A विपि
७. A नानुशास्य C नां तयान्य ।

अयमुरुविधिभार भारतेऽस्मिन्नखिलविशेषविचक्षणः क्षणेन ।
अनुमलयमुदीक्ष्य सिन्धुवेलां विलसति बिन्दुसरस्तटद्रुमेषु ॥ ३४ ॥

नतनगनिवहस्य पादमुच्चैः श्रयति सदाऽयमुमापितुः पवित्रम् ।
सुरगजदशनौघमार्गनिर्यत्त्रिदशनदीसलिलारवश्रवोत्कः ॥ ३५ ॥

पिबति च नृपचन्द्र चन्द्रभागामुरुपरभाग विगाहते वितस्ताम् ।
विलसति पुलिनेष्वयं शतद्रोर्निवसति रोधसि देव देविकायाः ॥ ३६ ॥

परिचरति नरोपसेवितेति प्लवगवरो बदरीमयं वरेण्याम् ।
अनुसरति सरस्वतीं च पुण्यां प्लवगगुरुः कुरुजङ्गलस्थलीषु ॥ ३७ ॥

अविहितविकृतिर्मरोरतीत्य प्रतिदिनमुष्णतरङ्गिणीरपाराः ।
परमयमवगाहतेऽम्बिकायाः पितुरतिशैत्यदुरासदां हिमानीम् ॥ ३८ ॥

हरिपतिरयमुत्तरापथश्रीपरिमलदोहददूरनिर्गतोऽपि ।
मम सदनमुपैति सोपदानः प्रियतनयापतिगन्धगौरवेण ॥ ३९ ॥

अयमलसविवर्तितैकपाणिः प्रणयिमुखार्पितवीक्षणो गवाक्षः ।
कपिसुभटसमाजमध्यवर्ती वदति किमप्यवलेपदुर्बलास्थः ॥ ४० ॥

पितृपतिपिशिताशपावकानामयमुपदानपरम्पराः प्रतीच्छन् ।
निवसति सविलासमृक्षसार्द्धं शिखरिणि दक्षिणदिग्विहारशीलः ॥ ४१ ॥

अविरतमपरान्तसिन्धुवेलामनुवलमानविलोचनोऽधिशेते ।
अयमनिभृतवाहिनीविमर्दद्रुतमृगराजशतं प्रसह्य सह्यम् ॥ ४२ ॥

विचरति चुलुकोद्धृताम्बुराशेः प्रसभमृषेरयमाश्रमद्रुमेषु ।
प्रतिमलयरुहं हसन् विकृष्य प्रणुदति पाणियुगेन पन्नगौघान् ॥ ४३ ॥

तटशिखरगतस्तटान्तराग्रस्खलितकरालविशालपुच्छदण्डः ।
कुहरं इव रुणद्धि ताम्रपर्णीमयमनिशस्फुटमौक्तिकप्रतानाम् ॥ ४४ ॥

विलसदुभयकुण्डलाश्मदीपस्फुटमुख एष दरीमुखश्चकास्ति ।
सदयहसितमुग्धपार्वतीयप्लवगशिलाजतुसंप्रदानपूरैः ॥ ४५ ॥

---

१. B नित्र । २. BC ण्योपचय ३. A हतविहतिर्गिरे । ४. BC स्यः । ५ A संज्ञे । ६. B जि । ७. A र । ८. A प्रसारां । B कावदातां । ९. हरीश्वर । १०. A B C ग ।

अधिशयितसमस्तविन्ध्यसानुर्वनमनुवेदि विचित्रचित्रलीलः ।
अयममृतमरीचिसंभवायाः कलकलमस्रसु: वारिणः शृणोति ॥ ४६ ॥

अनुसरति खरातपेऽह्नि तापीमयमुभयान्तमहीरुहातपत्राम् ।
तरलयति परिप्लवो विदर्भां पुरमनघाभिकलीलयाऽथ सायम् ॥ ४७ ॥

क्षतशतविषमीकृतोद्भटाक्षिभ्रुवचिबुकोष्ठललाटशङ्खस्कः ।
कपिरकृपणमग्रतः प्रतीष्टप्रतिभटहेतिरयं च दुर्मुखाख्यः ॥ ४८ ॥

निजबलयुवभिर्विलक्ष्यमाणप्रकटजरद्व्रणमण्डलोपशल्यः ।
सुखवलितसकण्टकाङ्गयष्टिस्थिरमधिशेत इवैष मीलिताक्षः ॥ ४९ ॥

गुरुगिरिशिखरौघयुद्धयोग्यो जनितनिकामपरिश्रमोऽधिशेते ।
अयमचलनितम्बभिन्नवेण्णातटविपिनानि वनौकसामधीशः ॥ ५० ॥

दधिमुख इति मातुलो ममायं दधिधवलाननदीधितिप्रतानः ।
कथयति[3] निभृतो रणावदानं किणविषमेण भुजान्तरेण वीरः ॥ ५१ ॥

परिमलभरवाहिवाहिनीकः कुमुद इति प्रमनाः प्लवङ्गमोऽयम् ।
तव नृपतिहिमत्विषः पुरस्ताल्लसति शुचिस्मितकान्तिना मुखेन ॥ ५२ ॥

पिशुनितसविशेषविक्रमोष्मा विरलितवानरवीरवृन्दवादः ।
अनुभवति वनान्तगन्धवाहं प्रियसुहृदेष च गन्धमादनो मे ॥ ५३ ॥

सुरशतनिलयोऽमुना सलीलं कृतपरिवेषविवृत्तिबन्धवेगः ।
प्रवहवशविसंस्थुलाय वेधि स्पृहयति नाम्बुरुहैकबन्धवेऽगः ॥ ५४ ॥

प्रलयघनगभीरकण्ठगर्जो गजनियुतद्रविणो गजाभिधानः ।
प्लवगभटयुवा जवोत्तरत्वादयमुदिताग्रहणः समीरणेऽपि ॥ ५५ ॥

मुहुरनिलविमानशंबरालीललनविसोढविशालपुच्छदण्डः ।
सह दिनपतिना कुतूहलित्वादयमपि देव दिवः प्रयाति पारम् ॥ ५६ ॥

अयमुपचरति प्रसादवर्षैः सदसि वलीमुखवृन्दमिन्द्रजानुः ।
निजबलखुरलीमयं च पश्यत्यपस्खलसंमुखसैनिको रुमण्वान् ॥ ५७ ॥

१. B D भेक । २. A B बिंबत्रेण्यास्त । ३. A परिणत । ४. D र । ५ B C मानपुच्छवेगः । ७

कपिसुभटसमाजदत्तकर्णः किमपि किमप्ययमीक्षिताखिलाशः ।
हरिरिव हरिणोर्जितेन मैन्दः सह वदति द्विविदेन दर्पशाली ॥ ५८ ॥

क्षितिधरमनयोर्महेन्द्रमेकः श्रयति सुविग्रहबन्ध विन्ध्यमन्यः ।
समविभवमिदं समेत्य कार्याद्विचरति वीरयुगं पुनर्जगन्ति ॥ ५९ ॥

मम पनसमुखास्तटीमिमां च प्रकटरुचोऽधिवसन्त्यमी वयस्याः ।
हरति रुचमयं शनैर्विवस्वान् प्रतिरुचि संवलनक्रमीव यस्याः ॥ ६० ॥

नवघनवलयैरिवाञ्जनाद्रिर्बहुलनिशीथ इवान्धकारपुञ्जैः ।
अधिवसति वृतः सनाभियूथैस्तटमिममुल्बणवृक्षमृक्षराजः ॥ ६१ ॥

जलनिधिमधु मेरुबीजकोशं कुलगिरिपत्रमनन्तभोगनालम् ।
इदमवनिसरोरुहं समन्तादलिरिव यो रमते निषेवमाणः ॥ ६२ ॥

विचरति लघुलब्धलोकपारः परमविविक्तविभूतिमद्भुतां यः ।
प्रलयशिखिनि यश्च कोटिकृत्वः स्मरति विलीनमिदं विधातुरण्डम् ॥ ६३ ॥

त्रिदिवपितृवनस्थलीषु पश्यन्नमरपरेतसमाजवैकृतानि ।
सह विचरति शम्भुनाऽनघो यः प्रलयनिशामुखसुप्तकिङ्करेण ॥ ६४ ॥

अपि भृशविवशत्रिकास्त्रिलोकीमसकृदुपैति विलोक्य योऽधुनाऽपि ।
विमृशति पुनरात्मसंपरायं न परकृते कृतविक्रमः कुतोऽपि ॥ ६५ ॥

प्रकटमिव निरीक्षते निगूढं भृशमुपरीव भुवश्चरत्यधोऽपि ।
अनुभवति भवन्निभावुभौ यस्त्रिभुवनशत्रुसमाप्तिकालकालौ ॥ ६६ ॥

भ्रमति रविगभस्तिभिः सहोर्वीं दिवमधिरोहति गाहतेऽहिलोकम् ।
करतलकलिताखिलप्रमेयो न मृगयतेऽधिगमार्थमागमं यः ॥ ६७ ॥

अयमसुकरकर्मविश्वकर्मा कटकमगाधबलो नलोऽधिशेते ।
रमयति सहसाऽवतारितोऽयं दिव इव येन पताकिनीनिवेशः ॥ ६८ ॥

उपरि शिखरिणः पयः प्रतीच्छन्त्यवनिरणोरपि शीर्यते भरेण ।
वितरति चतुरङ्गवाहिनीनां वियदवलम्बनमिच्छयाऽऽशु यस्य ॥ ६९ ॥

न दिवि न भुवि नाग्रतो न पश्चात् क्षणमवभाति विहन्ति सर्वतश्च ।
रचयति किमपीन्द्रजालमुच्चैः समितिषु यश्छलयोधनोदरीणाम् ॥ ७० ॥

१. A कपिश २. B भिसरति चमूचरा । ३. BC अवधि । ४. BC पद्म । ५. BC क्षमो । ६. B निहि
७ B D धिनाम ।

अनुकृतनरलोकलीलनीलो नगतलवर्तिचमूसहस्रपालः ।
इह बहलनवाश्मभेदवल्लीकिसलयशालिनि शाद्वले निविष्टः ॥ ७१ ॥

स्फुरदनघविनीलभासि यस्य स्मितमिदमुज्ज्वलमानने[2] चकास्ति ।
उदयशिखरिणस्तमालषण्डे शशिकिरणोत्थमिवाग्रशृङ्गभाजि ॥ ७२ ॥

घनमलिनमुखांशुजालधूमो विधुतकडारकचार्चि[3]रुच्चकैर्यः ।
ज्वलति रिपुचमूसमित्समिद्धो मृधमखवेदिषु योऽर्थे जातवेदाः ॥ ७३ ॥

सरभसमवसाव्य वृक्षराजीः सृजति महाजिषु यत्र शैलजालम् ।
जगदुपलविभूतिरुद्धकृत्स्नक्षितिगगनादिविभक्तिमीलतीव ॥ ७४ ॥

अमुमनु हनुमानयं निषीदत्यवसितसर्वमहागुणप्रकर्षः ।
इतरतरुकुरङ्गशावसाम्यन्यवहृति[6]केलितिरोहितानुभावः ॥ ७५ ॥

न वदति न विकत्थते न गर्जत्युपनयतीष्टमयं न वष्टि किंचित् ।
विचरति विनयानतश्च शश्वत्कथयति विक्रममात्मनो न चापि[7] ॥ ७६ ॥

अयमरुणफलभ्रमाद्विभाते तपनमभिद्रवति स्म जातमात्रः ।
अपतदथ मरुत्पतेः प्रहारात्प्रथमतलाहतिपातिताभ्रनागः ॥ ७७ ॥

अनुपवनभिया मुहूर्तमात्राद[8]जनि महाशनिविग्रहश्च तेन[9] ।
बिबुधशतसभाजितोऽवतीर्णः क्षितिमयमिन्द्रपुराद्बलीमुखेन्द्रः ॥ ७८ ॥

दधदपि शिशुतामयं जितान्तःकरणतया परिणामवानिवास्ते ।
स्तनकलशमपान्न जातु पीतत्रि[10]दशवरामृतरञ्जनोऽञ्जनायाः ॥ ७९ ॥

विचरति परकारणेन कृत्स्नामयमणिमादिगुणेश्वरस्त्रिलोकीम् ।
क्षणविततमहासमाधितल्पः स्वपिति समानशिराः सदाशिवेन ॥ ८० ॥

अयमुभयमहापथान्तगामी जगति मतः क्रियया धिया च वीरैः[11] ।
कथमपि न भिनत्ति पद्मयोनेः कलै[12]लसमाप्तिच[13]लत्कपालमण्डम् ॥ ८१ ॥

गुणगुणिसमवायसन्धिगामी गमयति वर्त्म दृशोरणूनशेषान् ।
परमयमनघः प्रविश्य दूरं चरति युतानयुतांश्च षट्पदार्थान् ॥ ८२ ॥

अधिसमरमरातिहस्तमुक्ताः शिखरभृतोऽस्तमिह क्षणेन यान्ति ।
जलमुच इव कालनाग्नि[14] रुद्रे निधनसमीरणवेगविप्रकीर्णाः ॥ ८३ ॥

---

१. B D मम बलवर्गं । २. A माननमण्डले । ३. A ब्धि । ४. B ध । ५. B म । ६. A म्यं प्रवहति B म्य व्यवहित । ७. A नः कदापि । ८. B यांशुमान्मुहूर्तो । ९. B स्वनेन । १०. A मातुस्त्रि । ११. B द्वी । १२. A लि । १३. A व १४. C रणाग्नि ।

निपतति निकटे शरः[1] समीरः स्खलति नगेषु मनश्च विप्रियेषु ।
अयमहतगतिः परं त्रिलोक्यां कपिरुपमानतिरस्क्रियानभिज्ञः ॥ ८४ ॥

प्रतिहतिरहितस्य रूपवत्तामुपनयतः किरणस्य नायनस्य ।
अपि निपतति कापि कालमात्रा न हनुमतः पुनरिष्टवस्तुवार्ता[2] ॥ ८५ ॥

घटयति परिशुद्धबुद्धिसूचीनिपुणनिवेशितसूक्ष्मसिद्धिसूत्रः ।
अयमिह रहसि प्रकामगुर्वीं प्लवगवरः परकृत्यचीरकन्थाम् ॥ ८६ ॥

तारायास्तनयोऽयमार्यसदृशस्थामा कुमारोऽङ्गदः
प्रत्यङ्गाभरणाश्मरश्मिपटलीलिप्ताम्बरप्राङ्गणः ।
छायानिर्गमशीतलेऽ[3]हनि गतः पर्यन्तभूमिं गिरे
राचर्यां युव[4]योग्यया विनयते संग्रामकण्डूलताम् ॥ ८७ ॥

कुल्योल्लङ्घनलाघवेन जलधीन् सप्ताप्यतिक्रामति
क्रामत्यंशुमतस्त्विषामविषयप्रान्तावनीध्रस्थलीः ।
लाङ्गूलाग्रविषक्तमेघशकलः स्वर्दीर्घिकापद्मिनी–
किञ्जल्काचितकेसरः परिवहाद्धालोऽयमावर्तते ॥ ८८ ॥

सुग्रीवस्य स्तिमितनयनं पश्यतीक्ष्वाकुनाथे
यूथाध्यक्षानिति नियुतशः पद्मशः शङ्खशश्च ।
तद्व्यापारोचितमिव रविर्वीरमाशूपनेष्य–
न्नापृच्छ्याहः पयसि चरमस्याम्बुराशेर्ममज्ज ॥ ८९ ॥

[6]हृदयमहीपालास्थानप्रणोदसमुद्भवो
भगवति चिरादश्रूत्पातः सरस्वति मृज्यताम् ।
नरपतियुवा पृथ्वीपालो निमज्जति संप्रति
त्वयि परमसौ शेपक्रीडारसे विरसायते ॥

इत्यभिनन्दकृतौ रामचरिते महाकाव्ये सुग्रीववर्णितावदातप्रकृष्टयूथप्रधानवर्णनो
नाम षष्ठः सर्गः समाप्तः ॥

---

१ A स। २ BC र्ताम्। ३. दो। ४ A श्चर्यांयुध। ५ A द्धौ। ६. C D omit this sloka.

ऐते निकामसरसस्य जयन्ति पादाः श्रीहारवर्षयुवराजमहीतलेन्दोः ।
यैर्द्वादशार्ककिरणोत्करदुर्निवारः स्पृष्टोऽभिनन्दकुमुदस्य महाविकासः ॥

ऐते तवैकसुभगस्य जयन्ति पादाः श्रीहारवर्षयुवराजमहीतलेन्दो ।
यान् समतापभुवनेऽपि सदाऽभिसृत्य रात्रौ दिवा च रिपुराजरमा रमन्ते ॥

# अथ सप्तमः सर्गः ।

सह नवार्ककरैरिव यूथपैः कपिरसावपरेद्युरतित्वरः ।
जयसमाप्तिसमीक्षणपीडितो नृपतपस्विवरस्य पुरोऽभवत् ॥ १ ॥

तमहमग्रिकयोद्धुरवानरप्रसरवेगनिरोधसमाकुलम् ।
जय जयादिश किं क्रियतामिति त्वरितवाचमुवाच रघूद्वहः ॥ २ ॥

अयि सुखेन सखे रजनी गता सुखमिदं समुपेतमहर्मुखम् ।
क्षणमितः शृणु केलि[3]सुखोचितान्कपिपतीन्प्रति यत्प्रतिभाति मे ॥ ३ ॥

स्मरति यो न गृहं निजमुन्मनाः त्रसति यश्च न जातु निशाचरात् ।
युधि च यस्य रसोऽस्ति स तिष्ठतु व्रजतु यः परवानिव सीदति ॥ ४

प्रभुतया प्रणयेन च कार्यवान्कमपि न त्वरयामि निरुद्यमम् ।
अभिसरश्च सुहृच्च स मन्मते[4] भवति यः स्वयमापदि संक्रमः ॥ ५ ॥

अवसरोऽस्ति न मे वचनं प्रति प्रतिसदृक् स्वयमेव समाचर ।
उपनतार्थविदः परिपृच्छ वा स्वसचिवान् विनतप्रभृतीनिमान् ॥ ६ ॥

उपदिशत्यधुनैष किमृक्षराट् किमथ वक्ति समीरणनन्दनः ।
स्वरसतः क्व बलं नलनीलयोः शतबलिः किमिवाह महाबलः ॥ ७ ॥

दधिमुखः किमभीप्सति मातुलः कुलगुरुः किमु शास्ति च केसरी ।
स्फुरति चेतसि किं च कपीश्वर श्वशुरयोस्तव तारसुषेणयोः ॥ ८ ॥

क्व रभसः क्रमते रभरम्भयोः किमृषभः सरभश्च विधित्सति ।
अयमथ त्रपयाऽवनतो युवा वहति कीदृशमिङ्गितमङ्गदः ॥ ९ ॥

१. A D omit this sloka २. B D read this sloka ३. B C येन ४. A मे मतो ।

विनयवारितवाग्व्ययविस्तराः स्फुरितसूचितविक्रमसंपदः ।
किमपरेऽपि सुराधिपसन्निभास्तव चमूपतयः प्रतिजानते ॥ १० ॥

कनकपर्वतकूटकुतूहलं व्यपनयन्ति वपुर्गुणसंपदा ।
अकलनीयतया च वदन्त्यमी कलितवारितलानिव तोयधीन् ॥ ११ ॥

असमधामभृतः प्रभवन्त्यमी पृथगपि क्व न कर्मणि दुष्करे ।
समुदितास्तु समस्तमिदं जगद्विजयिनो जनयन्त्यकुतोभयम् ॥ १२ ॥

रणखलाक्रमणोचितमुच्यतां किमिव तत्प्रतिभीतिकरं तरः ।
विहृतिवल्गनवेगमपीह कस्तव सखे विषहेत वनौकसाम् ॥ १३ ॥

त्रिशूलेन न तदिह त्रिशिखेन पिनाकिना न खगराजरथेन रथाङ्गिणा ।
न पविना मरुतामधिपेन च त्वदनुगैर्युधि यत्क्रियते नखैः ॥ १४ ॥

चलति मेरुरपांनिधिरुच्चलत्यवनिरेति समाप्तिमसंशयम् ।
प्रसरति प्रतिरुध्य ककुप्पतीनधिसमीकमनीकभरे तव ॥ १५ ॥

अतिविदूरगतोऽपि गतागतक्षणनिरुद्धनखाशनिदोहदैः ।
हरिभिरेव न चैष[3] न दृश्यते दशमुखो दशदिङ्मुखपातिभिः ॥ १६ ॥

सरभसाश्चलिताश्च नभश्चरैर्नभसि दत्तपथास्तव यूथपाः ।
अधिगतश्च शनैः पतिभिर्दिशां पिशुनितो निलयः पिशिताशिनः ॥ १७ ॥

प्रचरति प्रमना दिशि यत्र यः प्लवगराज स तत्र नियुज्यताम् ।
अनभिगम्यतमाः पुनरुत्कटस्थपुटगर्तगुहागहना भुवः ॥ १८ ॥

किमनिमित्तममी निपतन्ति वा सुवपुषो विषमाणि यतस्ततः ।
न खलु विश्वसिमीक्षितवानपि श्वसिति राजसुतेति सखेऽधुना ॥ १९ ॥

अनुचितामिह कामपि सा भुवं गतघृणेन बलाद्गमिताऽरिणा ।
ध्रुवमगाद्विलयं बलिनोद्धृता वनगजेन बलादिव पद्मिनी ॥ २० ॥

व्रज वलीमुखनाथ यथागतं नियतमद्य न जीवति जानकी ।
विरहिता किरणैः कियतः क्षणानहनि चन्द्रकला न विलीयते ॥ २१ ॥

अपि तुलाग्रवशाद्यदि जीवति प्लवगराज तथा विपिनौकसाम् ।
इयमसाविति पूर्वमवीक्षिता कथमिवाध्यवसानमुपैष्यति ॥ २२ ॥

१. A. क्र । २. B C D नुय । ३. A भिरवैमि । ४. A स्मररसा । ५. D क्रु ।

अयि ममानिशलालनलालसे निवसनव्यवधानविषादिनि ।
कथमतीतमनोरथवर्त्मभिर्विषहसे विषयैरधुनाऽन्तरम् ॥ २३ ॥

सह निकामनिवासमहोत्सवादजनि कौतुकमङ्गलधाम यत् ।
मम तदेव तनूदरि दारुणं वनमभूद्भवतीमधुना विना ॥ २४ ॥

इयमियं दिवि दिक्षु च दृश्यते दिशति वाचमुपेत्य परं न मे ।
नय सखे नयनातिथितामिमामहह केन पथाऽऽशु गता पुनः ॥ २५ ॥

अपहरन्ति न तापमपां कणाः स्पृशति मर्मसु मुर्मुर[1]वन्मरुत् ।
प्लवगराज मम प्रियया विना किमतिकष्टमिव ज्वलितं जगत् ॥ २६ ॥

भ्रमति भूः पततीव नभस्तलं विलयमेति बलाद्वलयं दिशाम् ।
मम पुरस्तमसा च तमोऽपहः प्रसभमेष वयस्य विलुप्यते ॥ २७ ॥

अभिमुखं सुमुखि क्षणमास्व मे [2]चलसि किं बत कोऽत्र विलोकते ।
खरनखव्रणदष्टमिदं शनैः शिथिलयामि तव स्तनबन्धनम् ॥ २८ ॥

क्षणमिह क्षणकोपिनि सुप्यतामुपलवत्युपसिन्धुलतागृहे ।
अयम[3]पैतु विराधवधश्रमः त्वदधि[4]कण्ठतटो[5]ढसुखेन मे ॥ २९ ॥

अलमलं प्लवगेश विशङ्कया तव सुहृन्न खलु प्रलपत्ययम् ।
इयमनुस्मृतिभूः क्षणमाकुलं हृदयमुत्कलिका तु करोति मे ॥ ३० ॥

स्पृश कपीश करेण जडेन मां विमृहि वत्स विगच्छति चेतना ।
दहति मोहविरामविशृङ्खलो जनकराजसुताविरहानलः ॥ ३१ ॥

किमपि निष्करुणस्मरसायकप्रहतिजर्जरिताङ्गकमद्य माम् ।
विधुरयन्ति विधोरपि नूतनव्रणवितीर्णविषा इव रश्मयः ॥ ३२ ॥

धनुरिदं परिगृह्य समार्गणं मयि वधाय विधोः सहसोत्थिते ।
किमिदमार्य तवापरमेतदित्यकरुणो बत मुह्यति लक्ष्मणः ॥ ३३ ॥

जनयति क्रियमाणमसौहृदं प्रियसुहृत्सु निजार्तिनिगूहनम् ।
इति मयाऽऽधिरवाग्विषयोप्ययं त्वयि कपीन्द्र कियानपि कीर्तितः ॥ ३४ ॥

१. A वा । २. A क्षणमास्व च मे पुर ३. B मु । ४ A सुदति ५. B ल्योप.

तदनुरूपमनन्तरमात्मनः कुरु यदिच्छसि पृच्छसि किं सखे ।
उपनयत्यवलोकमहर्दिवं जगति केन तवाभिहितः पिता ॥ ३५ ॥

दिश निशाम्बुजदीनमुखाय मे दिनविभागविभामिव जानकीम् ।
जहि च राक्षसकूटकृतं तमः तपनपुत्र पितुः सदृशं कुरु ॥ ३६ ॥

तदतिशान्तिजडं[1] जगतां प्रभोः प्लवगराड्वचनामृतमानतः ।
पुलकितः श्रवणाञ्जलिना पपौ सह समीपगतैर्वनगोचरैः ॥ ३७ ॥

अथ विजित्य भुजिष्यजनोचितं झटिति साध्वसमीशितुरग्रतः ।
इदमवोचत वीक्ष्य स यूथपानभिजनोर्जितयोः सदृशं वचः ॥ ३८ ॥

रजनयो दिवसाश्च सदा सुखाः सुमुखतां मयि[2] दर्शयति त्वयि ।
अवधिशैलतटीवलयावधिप्रसृतनिश्चलराज्यसुखस्य मे ॥ ३९ ॥

किमपि कोपि न पश्यति पृष्ठतस्तव कृते कपयः पुरतोमुखाः ।
विनयरुद्धमनोरभसानिमान् किमधुना कृपणानिव मन्यसे ॥ ४० ॥

कृतसमस्तनियोगमनागसं गृहगता रमयन्ति समृद्धयः ।
अकृतसुप्रभुसत्कृतिनिष्क्रियानवति न त्रिदिवोऽपि जिगीषतः ॥ ४१ ॥

सरभसादरवेगपुरस्कृताः कृतविदः कपिकुञ्जरयूथपाः ।
अभिलषन्त्यहमग्रिकया तव प्रियशतैः प्रतिपूजयितुं मनः ॥ ४२ ॥

प्रथममद्रिरजोरुणकेसरा मम पतन्तु ककुप्सु वलीमुखाः ।
कनकभक्तिजुषोऽरिवरूथिनीष्वनुपदं तव देव शिलीमुखाः ॥ ४३ ॥

अरुणभिन्नमिवारुणसारथेरुदयिनस्तिमिरौघमभीशवः ।
तव पतन्तु पुरोगहरिद्रुतं द्विपमुदीर्णमहाघमभीशवः ॥ ४४ ॥

यत विचेतुमितो मनसा गताः प्रथममेव दिशः स्वरसादमी ।
तव रहस्यनिदेशनिनीषया परमिहास्मसु वर्ष्मभिरासते ॥ ४५ ॥

प्रहिणु शंसितपूर्वरहःकथः प्रथितमात्मललामसु किंचन ।
सुनिपुणं यदसावभिजानती भजति निश्चयमेषु नृपात्मजा ॥ ४६ ॥

किमपि सन्दिश वस्त्वतिसुन्दरं मनसि यद्विनिवेश्य मनस्विनी ।
अपि कठोरदशाहतिनिस्सहा विषहतेऽरिकुलक्षयवासरान् ॥ ४७ ॥

---

१. B तदिति सान्त्वनम् । २ BC तामिति ।

निगमयेयुरमी च विदूरतो रुचिरदेहरुचिप्रतिहारिताः ।
इयमसौ रघुनाथवधूरिति स्फुटमदृष्टचरीमपि तां बुधाः ॥ ४८ ॥

अतिकृशामपि दीधितिशालिनीमलममी सुधियः परिमार्गितुम् ।
नृपसुतां परितः क्षणदाचरीः कनकधूलिमिवाखुकृता मृदः ॥ ४९ ॥

त्यज विकल्पमनन्तरमेव सा सुकृतिनस्तव गोचरमेष्यति ।
अनुदयाय नहि व्यवधीयते सवितुरस्तगिरेः शिखरैः प्रभा ॥ ५० ॥

यदि स तेषु कलत्रमलिम्लुचश्चरति कुक्षिषु मेरुमहागिरेः ।
यदि सुरैर्विरलप्रहतासु वा शिखरकोटिषु तिष्ठति शृङ्गिणः ॥ ५१ ॥

नगमतीत्य गतो यदि वारिधिं[1] वसति वा वसुधारवने[2] यदि ।
यदि च पादधुवं भयवानगान्मणिमतः शरणं धरणीभृतः ॥ ५२ ॥

निपतितो[3] यदि माल्यवतस्तटीरटति नीलनितम्बतले यदि ।
अधिवसत्यवधिं परिपालयन्यदि सुपार्श्वमहावटकोटरम् ॥ ५३ ॥

विपुलमूर्ध्नि महाजगतीरुहश्चलदलस्य तले यदि सीदति ।
कुसुमितोच्चकदम्बतरुध्वजं भजति वा यदि संप्रति मन्दरम् ॥ ५४ ॥

गजगिरेर्यदि शीलयति स्थलीर्यदि निषीदति किम्पुरुषाचले ।
यदि सुगन्धिनि निर्हृतलाञ्छनो निभृतमस्ति पिशाचशिलोच्चये ॥ ५५ ॥

अधिगतो यदि जम्बुरसापगामुपगतो यदिवेक्षुतटानि[4] च ।
यदि महाह्रदरोधसि तिष्ठति व्यवहितः सुतरां यदि भद्रया ॥ ५६ ॥

यदि विकम्पमधावत कम्पवान् यदि सुकुञ्जनिकुञ्जगृहान् गतः ।
यदि भयद्रुतभूतविलोकितस्तुलितपूर्वमियाय महीधरम् ॥ ५७ ॥

रमणकं निपुणो[5] यदि सेवते यदि जगाम कुरूनथ चोत्तरान् ।
अरुणसूतरुचामपि दुर्गमे नयति वा यदि कालमिलावृते ॥ ५८ ॥

यदि विजित्य जवात्पयसां निधीन् सुरविहारतटीषु निविष्टवान् ।
अतिगतार्कमयूखपथावधिर्यदि तमोघनभूमिषु मोदते ॥ ५९ ॥

यदि जगाम चिरादमरावतीमतिभयाद्यदि गन्धवतीं गतः ।
विकटभोगिभुजार्गलगोपुरां पुरमगादथ भोगवतीं यदि ॥ ६० ॥

१. A B C जारुधिः । २. B च । ३. B न । ४. A वं । ५ BC विफलो ।

यदि विवेश रसातलमन्तिमं यदि गतो नरकं नरकण्टकः ।
विधुतसंमुखधूमचयो यदि क्षयहुताशनरुद्रमुपस्थितः ॥ ६१ ॥

परिगतो यदि तिष्ठति वह्निना भजति मध्यमगाधमपां यदि ।
प्रवहवेगमहापरिघे यदि ग्रहकदम्बकवर्त्मनि वर्तते ॥ ६२ ॥

यदि विदेहपदं प्रतिपन्नवान् यदि गतः परमाणुसमानताम् ।
यदि निर्खातपुरातनपञ्जरो जगति संचरते नवया पुरा ॥ ६३ ॥

यदि निरूढभवद्भयवेपथुः पथि रथस्य रवेरथ सीदति ।
लुठति वा यदि विप्रतिसारवानपगमय्य मृगं मृगलक्ष्मणि ॥ ६४ ॥

क्षणविनीतपवित्रपरिच्छदो यदि पितॄन् कुपितानुपसीदति ।
यदि विपाट्य कवाटपरम्पराः प्रविशति स्म मनुष्यगृहाणि वा ॥ ६५ ॥

उदपतज्जनर्[1]लोकमसौ यदि श्रयति वा यदि सत्यसदां सदः ।
जनितचित्रशिखण्डिचमत्कृतिश्चरति यद्युपरि ध्रुवयोरपि ॥ ६६ ॥

यदि नमस्यति वित्तपमत्रपः श्रयति विश्रवसोऽङ्कमृषेर्यदि ।
यदि सलज्जपुलस्त्यसमर्पितो वसति पीठतले परमेष्ठिनः ॥ ६७ ॥

यदि विभिद्य कुटीपटलं विधेः द्रुतम्[3]युग्मदृशं शरणं गतः ।
तदपि तं विनिगृह्य निवर्तते विष्टतयोगबलोऽनिलनन्दनः ॥ ६८ ॥

किमुदितैर्बहुभिर्बहुविस्मया भुवनमाशु विचित्य समागताः ।
जनकराजसुतादशकण्ठयोः स्फुटमुदन्तममी कथयन्ति ते ॥ ६९ ॥

इति चतुर्दशलोकविपश्चितं प्रचयशिष्टसमस्तमनोगतम्[4] ।
अभिननन्दुरतीन्द्रियरंहसः प्लवगवीरगणाः प्लवगेश्वरम् ॥ ७० ॥

सदसि दाशरथेः स तदा वृतः कपिभिरुच्चशिरोभिरशोभत ।
उदयसानुमतः कटकान्तरे रविरिवाम्बुजकाननमध्यगः ॥ ७१ ॥

अवितथैरथ तैः सुहृदीरितैरुदितदृष्टिरभाषत लक्ष्मणम् ।
जयसि वत्स हतः क्षणदाचरो नृपसुताऽधिगतेति रघूद्वहः ॥ ७२ ॥

कुरु यदाह महाहृदयः सुहृत्त्वरितमार्य विसर्जय वानरान् ।
नयसि दूरमरेः किमकारणं निधनमित्यवदद्भरतानुजः ॥ ७३ ॥

१. B वा । २. D ग्रम । ३. D शत । ४ D ताः ।

समुदिताः कपयश्च नलादयः प्रभुनियोगपुरस्कृतिलालसाः ।
वचसि तस्य सदस्यमनोहरे सरभसाः सहसाऽनुमतिं दधुः ॥ ७४ ॥

रघुपतिः कपिभूपयमात्प्रभृत्यकथयन्मिथिलेन्द्रतनूजया ।
सह यदुक्तमनुष्ठितमीप्सितं जनसमक्षमुपांशु च मुग्धया ॥ ७५ ॥

समदिशत्सदृशं प्रणयस्य यत्प्रणयिनीमनु तां विनयस्य यत् ।
अभिजनस्य नयस्य समुन्नतेर्गतवतोऽतिभुवं विरहस्य च ॥ ७६ ॥

प्रभवति स्म वचोभिरुदारधीः कथयितुं न स दारवपुर्गुणान् ।
मुहुरनुस्मृतिलब्धविनिर्गमैरलमभूत्पुनरुत्कलिकोर्मिभिः ॥ ७७ ॥

परिमलं प्रतिगात्रमकृत्रिमं मधुरमाधिविमर्दसहं महः ।
शिरसि रत्नमयत्नसमुज्ज्वलं विरजसी वसने मलनादपि ॥ ७८ ॥

चरणरागमयावकसंभृतं नयनकालिमभक्तिमकज्जलाम् ।
अधरसस्मितकोमलदीधितिं निजवधूतनुचिह्नमुवाच सः ॥ युगलम् ॥ ७९ ॥

स्मरति किञ्चिदयं न तवाग्रजः कथय लक्ष्मण तां प्रति लक्षणम् ।
हृदयमप्यवशं भ्रमतीव मे विभृहि मामिति संप्रमिमील च ॥ ८० ॥

प्रतिविधूय तमः स्वयमेव तद्विशदतामगमच्च मनागसौ ।
प्रतिदिशं विससर्ज च संभ्रमात् कपिपतिः कपिकुञ्जरयूथपान् ॥ ८१ ॥

रघुपतेः प्रथमं चरणाब्जयोस्तदनुजस्य ततस्तदनन्तरम् ।
रविसुतस्य निपेतुरधीशितुश्चिचलिषातरलास्तरुगोचराः ॥ ८२ ॥

सुमनसस्तव सन्त्वधिपा दिशां ग्रहगणोऽनुगुणः सकलोऽस्तु ते ।
अहृतकालमनाकलितक्रमं निकट एव लभस्व मनीषितम् ॥ ८३ ॥

प्रकटय क्रिययाऽऽशु निजान्तरं तरतु वीर यशस्तव तोयधीन् ।
इति पृथक् प्रतिवानरमादराद्वरमिवाशिषमादिगुरुर्ददौ ॥ ८४ ॥

क्व स गमिष्यति संप्रति पापकृत्कियदिदं त्रिजगद्विजयाय वः ।
क्व खलु मास्यति भाविभवद्यशो मितमिदं कनकाण्डकरण्डकम् ॥ ८५ ॥

द्रुतसमिद्धमनोरथशालिनः सुखमुपेतजगन्नुतिबन्धुराः ।
भृशतरं परिरभ्य सुहृत्प्रियः प्रियमुवाच कपीनिति लक्ष्मणः ॥ युग्मकम् ॥८६॥

अयि समस्तमिदं हृदि रोपितं प्रियसखाः प्रभुरेष यदुक्तवान् ।
स्मरत पृच्छत शेषमनाकुलाश्चलत सिध्यतु यत्र मनोरथः ॥ ८७ ॥

कुरुत मार्गमनर्गलरंहसः कमपि तूर्णमिह व्यसनार्णवे ।
झटिति येन जगत्त्रितयप्रभोरवतरन्त्यरिनक्रभिदः शराः ॥ ८८ ॥

मुकुलितां मिथिलेन्द्रसुताब्जिनीमपि सुदूरगतामधिगच्छतु ।
अरितमश्च भवद्भिरभीशुभिर्नुदतु संप्रति रामदिवाकरः ॥ ८९ ॥

व्रजत साधयतारविगोचरादचिरमेवं समेत निरागसः ।
चरणयोः शिरसा पतितानिति प्लवगराजपतिः प्लवगानशात् ॥ ९० ॥

इति प्रकटसुप्रभुत्रयमहाप्रसादोद्धुरा
मणिध्वनिपुरस्कृतस्वकुलवृद्धयात्राशिषः ।
दिशं दिशमधोक्षजद्रुहिणशम्भुसंप्रेषिताः
सुपर्वसुभटा इव प्लवगयूथपास्ते ययुः ॥ ९१ ॥

इत्यभिनन्दकृतौ रामचरिते महाकाव्ये प्रतिदिशं प्लवङ्गयूथसंप्रेषणो
नाम सप्तमः सर्गः समाप्तः

१. B मत्र । २. D पतिसंशिक्षण ।

पालान्वयाम्बुजवनैकविरोचनाय तस्मै नमोऽस्तु युवराजनरेश्वराय ।
कोटिप्रदानघटितोज्ज्वलकीर्तिमूर्तिः येनामरत्वपदवीं गमितोऽभिनन्दः ॥

किमिन्दुना चन्दनवारिणापि किं किमब्जकन्दैरभिनन्दवत्सलः ।
विचिन्त्यतामान्तरतापशान्तये स केवलं विक्रमशीलनन्दनः ॥

किं[1] शीधुभिर्भवतु फाणितशर्कराद्यैः किं वा सितासहचरैः क्वथितैश्च दुग्धैः ।
दुग्धाब्धिलब्धसुधयापि न किंचिदेव यत्राभिनन्दसुकवेर्विचरन्ति वाचः ॥

नमः श्रीहारवर्षाय येन हालादनन्तरम् ।
स्वकोशः कविकोशानामाविर्भावाय संभृतः ॥

# अथाष्टमः सर्गः ।

युगपच्चलितेषु यूथपेषु क्षणमत्युन्मनसा रघूद्वहेन ।
रुरुधे रहसि प्रदास्यताऽथ स्वमभिज्ञानविशेषमाञ्जनेयः ॥ १ ॥

अचलत्यपि तत्र कार्यसिद्धिं प्रति विश्वासमियाय मैथिलीशः ।
प्रमुखे हि मुहूर्तशीतलानां रुचिरन्यैव[3] करिष्यतामुदेति ॥ २ ॥

विततार च वानरे स तत्र प्रभुरव्याजभुजिष्यभावभाजि ।
दयितामनु दीर्घविप्रयोगज्वरपीडावरणानि वाचिकानि ॥ ३ ॥ सन्देशवाग् वाचिकम्

निजगाद गुणान् पुनः प्रियायाः पुनराकल्पकनिस्सहो मुमोह ।
बुबुधे पुनरात्मनैव धीरः पुनरालोक्य दिशः ससर्ज बाष्पम् ॥ ४ ॥

कृतकृत्यमिवागतं पुरस्तात् परिरेभे रभसा तमीक्षणाभ्याम् ।
अनुयोक्तुमसावियेष वार्तामथ सस्मार समाहितः क्षणेन ॥ ५ ॥

अवदत्पुनरप्यपूर्ववच्च प्रियजायातनुगोचरान्विशेषान् ।
विनयानतिपेशलो हनूमानपि शुश्राव विशेषदत्तकर्णः ॥ ६ ॥

अवगच्छ नवच्छदारुणेन च्युतलाक्षारसभक्तिनापि तां[4] मे ।
अपि हासपराङ्मुखेन दूरं विहसन्तीमधरेण बिम्बशोभाम् ॥ ७ ॥

१ AC omit these two slokas. २ AB omit these two slokas. ३. A र्दै C रस्यै
४. BC ता ।

नयनोदकनिम्नगातिवेगान्मुहुरुत्सारितपाणिपल्लवे च[1] ।
ललिताङ्गुलिमार्गमुद्रयाविष्कृतपत्रावलिविभ्रमां कपोले ॥ ८ ॥

पतदश्रुनदीतरङ्गमार्ष्टिस्फुटपक्ष्मावलिमूलकालिमेन ।
द्वितयेन दृशोश्च दिक्ष्वभीक्ष्णं वितथालोकविलक्षतां गतेन ॥ ९ ॥

पिशिताशिविभीषिकानुबन्धादिव मूर्धाग्रगतेन जीवितेन ।
विषमाकुलमौलिरुद्धभासा मणिरत्नेन च यत्नसूचितेन ॥ १० ॥

स्थिरसान्द्रकषायगन्धगर्भैरपरिच्छेद्यमधुव्रतोपगानैः ।
चिकुरैर्विधुरेऽपि दर्शयद्भिः श्रियमभ्यग्रविलासमज्जनस्य ॥ ११ ॥

अपि पत्रविशेषशोभितानां कुचपृष्ठे च पतन्नखव्रणानाम् ।
अनुलेपविसर्जनोज्ज्वलाभिः किणराजीभिरतीव लज्जमानाम् ॥ १२ ॥

करपल्लवपर्वमूलमूर्छन्मणिमालावलयांशुजालकेन ।
अनवस्थितवेल्लनातिवेगाद्भुजवल्लीयुगलेन चालसेन ॥ १३ ॥

अविलेपनदानसौरभेण स्थिरलावण्यनिगूढतानवेन ।
वपुषा च यथाहिताभिरामस्थितिदुर्लक्ष्यविगाढवेदनेन ॥ अष्टभिः कुलकम् ॥१४॥

इति कान्यपि लक्षणानि पत्न्याः स कथंचिन्मदनाकुलो जगाद ।
अवगन्तुमलं बभूव शेषाण्यथ सामीरणिरिङ्गितोदितानि ॥ १५ ॥

निजदेहपरिच्छदावलोकक्षणमन्दाक्षनिरुद्धसंप्रदित्सः ।
विततार स तत्र सूनृतेन प्रभुरध्यक्षपराश्रये प्रसादम् ॥ १६ ॥

अभिलक्ष्यतमानि तस्य हस्ते निजवस्तुष्वथ कानिचित्तदानीम् ।
स विविच्य विचक्षणः क्षणेन प्रददौ प्रत्ययहेतवे प्रियायाः ॥ १७ ॥

व्यतरत्खरकन्धरास्त्रलिप्तामिषुमुत्तप्तसुवर्णचित्रपुङ्खाम् ।
अनुरक्तिमिवात्मनः सुदीर्घामसुतुल्यामनुदेवदूरनीताम् ॥ १८ ॥

हृदयं स्वमिवानिवार्यमीनध्वजबाणाध्वकृतान्तरालमन्तः ।
विससर्ज विभूषणं च हैमं निजनामाङ्कमनामिकानिविष्टम् ॥ १९ ॥

---

१. A न २. BC प्रतता । ३. B मा । ४. B ल्यु । ५. A B C यत्नविशेषरोपि ६ A तिवेल्लितातिवेगा ।
७. BC जन्या. ८. BC देशः । ९. BC गुरु.

तदनु प्रथमाप्तमप्यदत्त स्नपितं प्रत्यवलोकमश्रुपूरैः ।
मणिनूपुरमुद्धुरार्तिमुक्तश्वसितम्लापित[1]नायकांशुजालम् ॥ २० ॥

कपिराजसमर्पितं च गाढस्वपरिष्वङ्गतरङ्गितं दिदेश ।
अभिकामसुगन्धि सान्द्रसार्द्रस्तनविच्छित्तिकलङ्कमुत्तरीयम् ॥ २१ ॥

स बहूक्तवधूविशेषचिह्नो निजचिह्नानि च कानिचित्प्रदाय ।
उपयुक्तमवोचदाञ्जनेयं प्रचयावर्जितसर्वपूर्ववृत्तः ॥ २२ ॥

इति तामभिलक्ष्य लक्षणौघैरनघामर्पितमद्विशेषचिह्नः ।
वद वीर वितर्कलोलचित्तामिदमग्रे विनयेन संनिपत्य ॥ २३ ॥

नरदेवि निरस्यतां वितर्कः प्लवगः पावनिराख्यया हनूमान् ।
प्रहितः प्रभुसौहृदादहं ते समवस्थाधिगमाय राघवेण ॥ २४ ॥

विपिनात्पिशिताशिना हृतायां त्वयि सुग्रीव इति प्रियस्य तेऽभूत् ।
कपिरात्मसमोऽवलम्बयष्टिर्विरहान्धस्य कबन्धशिष्टसारः ॥ २५ ॥

भुवि सप्तसमुद्रमेखलायामभिषिक्तस्तव हेतुना स तेन ।
विनिहत्य बिडौजसस्तनूजं मनुजेन्द्रस्य सुतेन भानुपुत्रः ॥ २६ ॥

अतिरिक्तबलेन वालिनाऽसौ सहनीयक्रमलङ्घनापराधः ।
रिपुवत्परिभूय राज्यलोभादृढसौभ्रात्रगुणच्छिदाऽपविद्धः ॥ २७ ॥

प्रसभात्तपरिग्रहः स तेन क्रमविच्छिन्नसमस्तराज्यचिह्नः ।
विपिनाद्विपिनं व्रजन्मनस्वी न वियुक्तः सचिवैः परं चतुर्भिः॥ २८ ॥

अकुतोभयमध्युवास दीर्घं गिरिमारात्पतितासुरेन्द्रकायम् ।
रुधिराहतिरुष्टसिद्धशापप्रतिरुद्धारिचमूकमृश्यमूकम् ॥ २९ ॥

हतहेमचमूरुणा मुमूर्षोः पितृमित्राद्वयसः श्रुतान्वयेन ।
धुतयोजनबाहुवैकृतेन प्रभुणा ते[2]समनन्तरं समेतः ॥ ३० ॥

कथमप्यनघे तपस्विना ते नवमेघोदयदारुणान्यहानि ।
निहतारिममुं विसृज्य सद्यः शिखरे माल्यवतोऽतिवाहितानि ॥ ३१ ॥

स पुनः कृतवेदिनोपसेदे शरदि व्यक्तविशेषलाञ्छनायाम् ।
उपनीतसमस्तयूथपेन प्लवगेन्द्रेण दिशां गवेषणाय ॥ ३२ ॥

---

१ D श्यामल । २ D द्रुम ।

प्रहितः प्रयुताधिपः प्रतीचीं प्लवगग्रामशिरोमणिः सुषेणः ।
विनतश्च नतश्च मन्त्रिणौ द्वौ दिशमिन्द्रस्य गतावसङ्ख्यसैन्यैः ॥ ३३ ॥

प्लवगध्वजिनीपतिश्च सीते शतपूर्वो बलिरभ्यगादुदीचीम् ।
प्रभुसूनुरिमां दिशं प्रदिष्टः सह नीलप्रमुखैः प्रधानयोधैः ॥ ३४ ॥

इति विक्रमशालिनः कपीन्द्रानपि संप्रेष्य सहस्रशः ककुप्सु ।
अवि[1]कारिणि कारणं न जाने मयि नाथस्तव यद्विशेषितास्थः ॥ ३५ ॥

विनियुज्य तव प्रवृत्तये मां मुदमुद्दामजवां जगाम रामः ।
हतकल्पममन्यत द्विषं च स्फुटनिर्ज्ञातनिगूढदुर्निवेशम् ॥ ३६ ॥

मयि कृत्स्नमुदीरितं रहस्यं मयि लज्जा सहजोज्झिता च तेन ।
मयि दूरमनुग्रहोऽभि[2]नीतः प्रभुमित्रेण समानदृष्टिनाऽपि ॥ ३७ ॥

क[3]थिताः प्रथितौजसश्च पूर्वे पितुरुक्तश्च मृगव्यतः प्रमादः ।
स्वकथाः कथिताश्च तेन कृत्स्ना मयि सन्देहनिवृत्तये भवत्याः ॥ ३८ ॥

अवधेहि विदेहराजपुत्रि प्लवगस्त्वद्गृहजोऽयमस्म्यमायः ।
कथयामि चिरन्तनीः कथा वः शृणु सन्देशमनन्तरं च[5] भर्तुः ॥ ३९ ॥

अजनिष्ट कुलेऽरविन्दबन्धोः नृपतीन्दुर्बहुदक्षिणो दिलीपः ।
न चकार समग्रमध्वराणां शतमेकेन महेन्द्रसौहृदाद्यः ॥ ४० ॥

परिचर्य वसिष्ठकामधेनुं धनमन्त्यर्णविशुद्धये सुताख्यम् ।
स नृपः सुचिरादथोपलेभे सुरभिक्षोभसमाप्तिसंमुखीनम् ॥ ४१ ॥

युयुधे शतमन्युना सहोच्चैः पितुरश्वं हरताऽश्वमेधिकं यः ।
अवहासधुतोग्रबाणवर्षः कुलिशस्फूर्जथुकोपितः कुमारः ॥ ४२ ॥

मुमुचे नमुचेररिं स यस्मात् कृतशस्त्रात्कृपणोचितेन साम्ना ।
युयुजेऽस्य पिता च तत्प्रसादादविलम्बेन फलेन सप्ततन्तोः ॥ ४३ ॥

प्रवयाः प्रययौ दिवं दिलीपो रघुरुर्वीं नवयौवनः प्रपेदे ।
अतिदानरसादसावयष्ट क्रतुना विश्वजिता जिताखिलारि[6]ः ॥ ४४ ॥

१. C वि. । २. B वि. । ३. B C प्र । ४ D ज । ५ D स्व ६ D रिलोकः ।

मखनिष्ठितकृत्स्नसारकोशः कुशचीरावरणोऽर्थिनेऽन्तिमाय ।
स्मृतभीतनिधीश्वरातिसृष्टं वसु वाञ्छाधिकमाशु यो दिदेश ॥ ४५ ॥

अजयत्क्रमशः शुभाः स भूमीरजहाद्भूमिभुजां पुनर्जिगीषाम् ।
अजनाम्नि सुते निवेशितश्रीरजरं धाम जरागमे जगाम ॥ ४६ ॥

कुलवृद्धवसिष्ठवारिताश्रुः क्षणदूरीकृतमङ्गलोपचारः ।
सुतकृत्यमजः पितुर्वितेने विशदब्रह्मपथोद्धत[1]स्य तस्य ॥ ४७ ॥

स विजित्य चिरेण शोकबाधां विधुतव्युत्थितमण्डलान्तरेशः ।
सचिवार्पितशेषकार्यभारः सह चिक्रीड नवोढयेन्दुमत्या ॥ ४८ ॥

अथ कारणमानुषी नभस्तः पतितेनोरसि नाकपुष्पदाम्ना ।
परिमृष्टपुराकृतप्रमादा पदमात्मीयमियाय सा निमील्य ॥ ४९ ॥

प्रतिबोधमयाच्यताङ्घ्रिपद्मद्वयलग्ना[2]भिरसावासिक्तै[3]काभिः ।
अवहद्विकृतिं न जातु काम्यप्यविपन्नेव जगाम दीर्घनिद्राम् ॥ ५० ॥

विललाप विमुक्तकण्ठमुच्चैर्न वसिष्ठस्य शशाम सान्त्ववादैः ।
सुतशैशवयापिताष्टवर्षः प्रियया खे समियाय सोऽवनीन्द्रः ॥ ५१ ॥

श्वशुरः शिशुरेव तेऽभिषिक्तः सचिवैरश्रुमुखैरजं स्मरद्भिः ।
कुलसेवकवृद्धलालनाभिः स तु सस्मार परेतयोर्न पित्रोः ॥ ५२ ॥

क्षितिमेकरथेन सिन्धुनेमिं स नृपः पङ्क्तिरथो युवा जिगाय ।
न तुतोष पशून्मखेषु निघ्नन्नघोऽन्यॉन्मृगपक्षिणो जघान ॥ ५३ ॥

अथ व्रातमृगं मृगव्यशीलः स नृपः शान्तपुरोगमोऽनुबध्नन् ।
तुरगेण तरङ्गिणीमवापत्तमसां तापसनिर्मितावताराम् ॥ ५४ ॥

निचुलान्तरिते पयस्यथास्याः श्रुतसाडम्बरकुम्भपूरशब्दः ।
स्वनमूलभिदं ससर्ज सद्राॉङ्घ्रिशिखं वारणबृंहितभ्रमेण ॥ ५५ ॥

निशिताशुगदूरभिन्नमर्मा मुनिपुत्रः पितुरुच्चकैरुवाच ।
तमपश्यदुपस्थितस्स वेगादवनीशः पविनेव भिद्यमानः ॥ ५६ ॥

१. B C थाग । २. A भ । ३. B C क्ति । ४ D न्वनयोग्या । ५ D द्राग्वि ।

श्लथबाहुलतोपगूढकुम्भं तमथोद्वृत्तविलोचनं विलोक्य ।
बत हा धिगिति ब्रुवन्व्यरोदीद्विधुरस्तत्र[1] तपस्विनीसमूहः ॥ ५७ ॥

दुरुपक्रमघोरमर्मशल्यं कृतमङ्के[2] कथितागसा नृपेण ।
तनयं तमुपासदच्चिरेण प्रवयाः शूद्रमुनिर्दृशा दरिद्रः ॥ ५८ ॥

समुपस्थितजीवितान्तबाधः सुतभाण्डस्य वधश्रवादकाण्डे ।
व्रज पुत्रशुचाऽवसानमित्थं त्वमपीति क्षितिपं शशाप सोऽन्धः ॥ ५९ ॥

मुनिशापतमोहतः स राजा निजदुश्चेष्टितसंभृतव्यलीकः ।
करणीयसुतागमप्रयत्नः प्रविवेश स्वपुरीं चिरादयोध्याम् ॥ ६० ॥

ऋषिरस्य सुतार्थमृष्यशृङ्गः क्रतुमारब्ध वनाच्छ[3]लोपनीतः ।
अयुनङ्नृपतिर्निगूढचेताश्चरुभागद्वितयेन दारयुग्मम् ॥ ६१ ॥

अथ कोसलकेकयाभिजाते सुमहिष्यौ निजभर्तुराशयज्ञे ।
भगिनीमिव चक्रतुः कृतार्थे करणीमप्यमृतांशभागभाजम् ॥ ६२ ॥

अजनि प्रथमं तवोपयन्ता भरतः प्रादुरभूदनन्तरं च ।
अथ लक्ष्मणमालयं गुणानामनुशत्रुघ्नमसूत मागधी च ॥ ६३ ॥

युयुजे निजकारणानुसारात्प्रथमो दाशरथिः स लक्ष्मणेन ।
भरतोऽपि तथैव कैकयीजः सततं सर्वकनीयसा सिषेवे ॥ ६४ ॥

मुमुदे[4] नृपतिः सुतैश्चतुर्भिः पुरुषार्थैरिव पुष्कलैरुपेतः ।
अभवच्च भयप्रदः परेषां भुजदण्डैरिव सायुधैरुपेन्द्रः ॥ ६५ ॥

निजसंसदि[5] लक्ष्मणद्वितीयं विततात्मक्रतुरक्षणाय रामम् ।
कुशिकात्मभवेन स क्षितीशः कुशहस्तेन तपस्विना ययाचे ॥ ६६ ॥

स भयङ्करताटकान्तकारी सह पार्श्वानुचरेण लक्ष्मणेन ।
कुसृतीरवधूय राक्षसानां मखमक्षुण्णमवर्तयन्महर्षेः ॥ ६७ ॥

प्रददौ पृथुकद्वयाय तस्मै सुसमाप्ते स्वविधौ विधौतपाणिः ।
निजमप्रतिपक्षमस्त्रजालं निहतक्रव्यभुगाधिगाधिसूनुः ॥ ६८ ॥

१. A स्त्रीर C स्तीर । २. A ङ्के । ३. B C द्ब । ४. A शुशुभे ५. C D द्वि.

अथ संभृतसंस्तरेण राज्ञा जनकेनोपनिमन्त्रितः स ताभ्याम् ।
सममेव ययौ कुतूहलिभ्यां मिथिलामुक्तपिनाकिचापकल्पः ॥ ६९ ॥

ददृशेऽनिमिषेण तैर्दशाशामुखसंपातिवनीयकप्रवेशः ।
परिवत्सैलगौतम[2]प्रतीष्टैर्जनकानामधिपस्य यज्ञवाटः ॥ ७० ॥

अयमिन्दुमुखस्तादिन्दुमौलेर्धनुरिच्छत्यवलोकितुं कुमारः ।
इति स क्षितिपस्तपोधनेन स्मितपूर्वं जगदे विधौ समाप्ते ॥ ७१ ॥

निमिजो नृपतिः कुमारभावात् सुकुमारं तमतीव मन्यमानः ।
उपधार्पयति[3] स्म सावहेलः स्खलितक्रूरधनुर्धरं धनुस्तत् ॥ ७२ ॥

स कृतप्रणिधिः कृतप्रणामः कृतबाणासनसंग्रहाधिरोपः ।
जनकेन ससंसदा शशंसे चिरनिर्वर्णितसौष्ठवः कुमारः ॥ ७३ ॥

स ममार्ज गुणं गुणैः समग्रो गुणघातध्वनिना दिशो बिभेद ।
ममृषे न विकर्षणं धनुस्तद्दृढदोर्दण्डपरिष्ठितस्य तस्य ॥ ७४ ॥

जनकः कुशिकात्मजेन जोषं[6] सह संमन्त्र्य समृद्धशुल्कसंस्थः ।
प्रजिघाय पुरोधसं वरार्थी नृपतेः पङ्क्तिरथस्य राजधानीम् ॥ ७५ ॥

निरवर्तयदागतः सुतानां स चतुर्णामपि धर्मविद्विवाहम् ।
हरणातिभरालसैरिभार्श्वैरथ संबन्धिगृहाद्वहान् प्रतस्थे ॥ ७६ ॥

स विसृज्य सुतामगर्भजां त्वां[10] नृपतिर्दत्तनिरायतानुयात्रः ।
क्षणमुन्मनसं व्यनोदयत्स्वं प्रियजामातृचरित्रसंकथाभिः ॥ ७७ ॥

तमपत्यचतुष्टयैकपूज्यं पृथगत्यादरदीर्घरुद्धजन्यम् ।
अपरो नृपतिर्नुनाव गच्छन् परिपप्रच्छ वधूटिकाश्च सख्यम्[11] ॥ ७८ ॥

तमकाण्डमहाप्रचण्डतेजश्चकितप्रेष्ठभटौघदुःखदृष्टः ।
श्रुतचन्द्रकिरीटचापभङ्गो भृगुवीरः स्थिरमत्सरो रुरोध ॥ ७९ ॥

अभवन्नृपतिः पुरोऽर्भकाणामथ सर्वार्पणमन्वशात्सुमन्त्रः ।
कदलीव चिरं चमूश्चकम्पे न विचेलुः प्रमुदः परं कुमाराः ॥ ८० ॥

१. AC षद्व २. A मी ३. BC र । ४. A नृदु । ५. A मालीढ. ६. B तेन । ७. BC मिथःस ।
८ A वा । ९. BC विससर्ज । १० BC जातां । ११. BC ख्यम् ।

अगृहीतनरेश्वरार्घ्यपाद्यः स निदध्यौ कुपितः कुठारपाणिः ।
अवहेलचलन्मुखारविन्दं प्रियमिन्दीवरलोचनं भवत्याः ॥ ८१ ॥

प्रणुदन्मधुपर्कपाणिरूचे नृपमुच्चैर्जमदग्निसंभवोऽग्निः ।
सहसोपरुणद्धि किं भवान्मां भव शिष्यस्तनयं तवाद्य शास्मि ॥ ८२ ॥

सदसि स्फुटवादिनामजैषीज्जनकाधीशसुते स ते पुरोऽपि ।
जितकोपतयैव तीव्रकोपज्वरसंवेगाजितं यतिब्रुवं तम् ॥ ८३ ॥

शिवचापसमीकृतं स विष्णोर्धनुराकृष्य भृगूद्वहोपनीतम् ।
विससर्ज मखार्जितेषु तस्य प्रदरं रक्षितपद्धतिः पदेषु ॥ ८४ ॥

स जगाम यथागतं चिरेण प्रशमं सूनुरुपेत्य रेणुकायाः ।
प्रविवेश पुरीं रघोश्च पौत्रः सह पुत्रैः पुनरात्तजन्मभिस्तैः ॥ ८५ ॥

अत ऊर्ध्वमहं न वेद्मि वृत्तं नृपतेरानिधनादसत्यभीरोः ।
अगुणं व्यवृणोन्न मध्यमायाः स जनन्या बत मय्यपि त्वदीशः ॥ ८६ ॥

प्रययौ वनमात्मना तृतीयस्तृणवत्त्यक्तनिजासनैः कुमारः ।
क्षितिपोऽस्तमियाय तस्य शोकात्फलितोऽन्धस्य तपस्विनः स शापः ॥ ८७ ॥

वयमप्यनुभूतवत्स्मरामः स पदस्थो बत गच्छति स्म रामः ।
सहसैव वनान्तराणि चीरीमुखरक्रूरजरत्तरूणि चीरी ॥ ८८ ॥

अभ्यग्रसैकतविसृष्टरथोऽधिरुह्य नावं निषादपतिनोपहितां गुहेन ।
अभ्युत्सुकामिव समाकुलवीचिभङ्गां गङ्गां विलम्बिपुनरागमनस्ततार ॥ ८९ ॥

लोकानुवर्तनघृणोज्झितचित्रकूटः कूटप्रधानपिशिताशनसद्मानि ।
भेजे तपोधनशताभयसंप्रदानदीक्षाविनोदसुमनाः स महावनानि ॥ ९० ॥

उक्त्वेति पूर्वनिजवृत्तशतानि रामो मायाविशत्रुकपटान्तरशङ्किनीं त्वाम् ।
आह्लोपयुक्तमधुनाऽनुपचारचारुचारित्रशालिनि मयाऽऽनिलिना मुखेन ॥ ९१ ॥

जानासि वीर्यमनघ मम मार्गणानां वत्ससय वेत्सि भुजसारमनुव्रतस्य ।
कालः प्रवृत्त्यनुदयादयमित्यतीतः सीते समापितरिपुर्वद किं करोमि ॥ ९२ ॥

---

१ A प्रखलो । २. B श्रय । ३. A य ४. B त्यु । ५. C प्रत्यु । ६. B क्कटा ७. A भक्त्ये ।

किं दुर्गमर्गलभिदां हरिपुङ्गवानां किं दूरमिन्दुमुखि रामशिलीमुखानाम् ।
दैवं प्रसन्नमिव देवि कुरुष्व रक्षां रक्षांसि कानि कुपितस्य च लक्ष्मणस्य ॥ ९३ ॥

सह्यान्यसह्यविरहे रिपुतर्जितानि तावत्तनूदरि निधाय मनस्समाधौ ।
यावत्प्लवङ्गबलमध्यगयोर्न पश्यस्यत्यूर्जितानि पतिदेवरयोरदूरे ॥ ९४ ॥

इत्यादिकानि सुबहूनि रघूद्वहेन सन्दिश्य मारुतसुतः स्वमनोगतानि ।
पर्युत्सुकेन पुनरुक्तकृतप्रभूतप्रस्थानमङ्गलविधिः स विसृज्यते स्म ॥ ९५ ॥

तमसकृदुपहूतप्राञ्जलिं जीव भूयः स्मृतिमुपदिश येनापैति[1] देव्या वितर्कः ।
प्रणयिनमिति रामः काममुक्त्वाऽऽञ्जनेयं कथमपि विससर्जावर्जितस्तद्गुणौघैः ॥९६॥

अनयदनिलसूनुन्यस्तकार्यातिभारः पुरि विरलभटायां[2] प्रेषितामात्यवृद्धैः[3] ।
विमनसमथ रामं मोदयन् संकथाभिः कतिपयपरिवारो वासरान्वानरेन्द्रः ॥ ९७ ॥

इत्यभिनन्दकृतौ रामचरिते महाकाव्ये हनूमदभिज्ञानार्पणदिलीपा-
न्वयवर्णनो नामाष्टमः सर्गः समाप्तः ॥

१. A न व्येति । २. B गत । ३. A वृन्दः ।

[1]वन्द्यः सुतः स खलु रामपराक्रमस्य येनाद्य रामचरितार्पितसंमदेन ।
सद्यः प्रसादभरदत्तमहाप्रतिष्ठे निष्ठापितः पिशुनवाक्प्रसरोऽभिनन्दे ॥

[2]तथा पूर्वं कवेः कस्य निर्गतं जीवतो यशः ।
हारवर्षप्रसादेन शातानन्देर्यथाऽधुना ॥

[3]किं शीधुभिर्भवतु फाणितशर्कराद्यैः किंवा सितासहचरैः क्वथितैश्च दुग्धैः ।
दुग्धाब्धिलब्धसुधयाऽपि न किंचिदेव यत्राभिनन्दसुकवेर्विचरन्ति वाचः ॥

---

# अथ नवमः सर्गः ।



अथ प्रतीक्षमाणेन सन्देशादानलम्बितः ।
युयुजे युवराजेन मार्गार्धे मार्गवाहनिः ॥ १ ॥

तत्राङ्गदकुमारेण कुमारब्रह्मचारिणे ।
ऋक्षराजद्वितीयेन तेने हनुमतेऽर्हणा ॥ २ ॥

अगात्परिगतस्ताभ्यां कामपि श्रियमङ्गदः ।
नयविक्रमयोर्मध्ये निरत्यय इवोदयः ॥ ३ ॥

तस्थुर्विन्ध्यगिरिप्रस्थे तेऽथ पर्युत्सुकास्त्रयः ।
रामाङ्घ्रिपद्मरजसामामोदस्मरणान्मिथः ॥ ४ ॥

मासावधिप्रवासास्ते निन्युस्तत्रैव तद्दिनम् ।
दूरमुक्तेतरकथाः कथया मैथिलीपतेः ॥ ५ ॥

न सन्तुतोष हनुमान्नाङ्गदो न च जाम्बवान् ।
गुणान् गुणनिधेस्तस्य ब्रुवन्नाकर्णयंस्तुवन् ॥ ६ ॥

ब्रूत हे जाम्बवन्मिश्राः पृष्टस्त्वं मान्य मारुते ।
कोऽयमस्मद्भुवमिमामवतीर्णोऽतिमानुषः ॥ ७ ॥

कुमार कुरु विश्वासमयं स परमः पुमान् ।
विश्वार्थमुत्थितोऽम्भोधेर्गम्भीरागमगोचरः ॥ ८ ॥

अनादिनिधनः श्रीमानयं श्रीवत्सलाञ्छनः ।
पुरुषः पुरुषार्थानां प्रदाता सुप्रसादितः ॥ ९ ॥

---

१. B C D omit this sloka. २. A C omit this sloka ३. A B D omit this sloka. ४. A सो ।

अयं निहन्त्यकुपितः सृजत्ययमनुत्सुकः ।
उदास्ते चायमश्रान्तः स्वपित्ययमतन्द्रितः ॥ १० ॥

अयमभ्यासवैराग्यवेगनिष्पापनिर्मलः ।
स्फुरत्यानन्दकलमः[2] पुण्यभाजां मनःखले ॥ ११ ॥

धावद्भिरयमत्युष्णैः प्राप्यते न क्वचिद्बहिः ।
सद्भिः निर्वापितैस्त्वन्तः समन्तादनुभूयते ॥ १२ ॥

विद्यावासी विलिखितक्षित्यादिवहलत्वचः ।
अयं जगत्तरोः सारः शिष्यतेऽन्तश्चिदत्यणुः ॥ १३ ॥

अयं व्युत्क्रान्तनिस्सारसंसारमृगतृष्णिकैः ।
आनन्दसिन्धुर्विततो वीतरागैर्विगाह्यते ॥ १४ ॥

क्वचिद्बाल इवोल्लीलः क्वचिन्मत्त इवालसः ।
क्वचित्प्रलीनप्रकृतिः प्रकृतिस्थः पुमानयम् ॥ १५ ॥

कालत्रयोर्मिविजयी विक्रान्तभुवनत्रयः ।
अयं त्रयीमयो देवस्त्रैगुण्यगहनातिगः ॥ १६ ॥

असंख्यचरणो दोषमेकमप्यनुदीरयन् ।
जयत्यङ्गैरयं षड्भिर्वेदात्मा पुरुषोऽद्भुतः ॥ १७ ॥

अयं त्राता चतुर्बाहुरयं स्रष्टा चतुर्मुखः ।
अयमेव महादेवः संहर्ता च त्रिलोचनः ॥ १८ ॥

अयं ब्रह्मर्षयः पूर्वे[5] सर्वे सिद्धगणा अयम् ।
अयं विश्वम्भरादीनि भूतानि भुवनप्रभुः ॥ १९ ॥

अजोऽयं जायते योगी जागरूकः स्वपित्ययम् ।
अयं बिभर्ति भगवानरूपो विश्वरूपताम् ॥ २० ॥

अयं स्वपिति मध्येऽब्धि गृहीतचरणः श्रिया ।
दत्तप्रदीर्घावसरो विधूतभरया भुवा ॥ २१ ॥

जयत्यपारे पयसि पर्यङ्कितभुजङ्गमे ।
अस्य विस्रब्धशयितं महाप्रलयपर्वणि ॥ २२ ॥

---

१. A व । २. B C मल । ३. A रुद्ध B C अद्भि ४. B C दित्यणुः । ५ A B सर्वे ।

अस्य नाभीसरसिजे जायतेऽन्तः[1]सदामिव ।
भिन्नः स्वनैर्मधुलिहां ब्रह्मणोऽध्ययनध्वनिः ॥ २३ ॥

प्रतिप्रलयनिद्रान्तमस्य प्रथमसंमुखः ।
नाभीसरोजे भवति स्वयंभूः सौखसुप्तिकः ॥ २४ ॥

मध्येनिद्रमयं लीलामधुरो मधुरोषितः ।
तदसृड्झयमम्भोधिमकरोन्मकरोत्सवम् ॥ २५ ॥

अनेनार्धविबुद्धेन शय्योपान्तं[2]गतस्तुदन् ।
निहत्य नुनुदे दूरं कीटवत्कैटभासुरः ॥ २६ ॥

विभ्रता भासु[3]रमुरो मुरोऽनेन महासुरः ।
क्रूरमुष्टिप्रहरणैः रणोत्कः क्रीडया हतः ॥ २७ ॥

अवग्रहातपेनेव स्थलीपृष्ठे नदा नवाः ।
शुष्यन्ति सद्यः संख्येऽस्य शङ्खध्वानेन दानवाः ॥ २८ ॥

विजयो विक्रमेणेव प्रकाश इव तेजसा ।
प्रज्ञोत्कर्षः श्रुतेनेव सुपर्णेनायमुह्यते ॥ २९ ॥

अमुं विभर्ति पततां पाताऽलमहिलालसः ।
दैत्यानवञ्चयदयं पातालमहिलालसः ॥ ३० ॥

कालनेमितमो घोरमयमुज्ज्वलविक्रमः ।
कालनेमितमो घोरमनुष्णांशुरिवाहरत् ॥ ३१ ॥

क्षणं व्याकृत्य काठिन्यं मरुद्व्यतिकरादयम् ।
मेघोपल इव स्वच्छो गच्छति द्रवतां पुनः ॥ ३२ ॥

आगतामागतां निद्रां मुहुरस्य महोदधौ ।
मुष्णन्त्य[5]नाथा मरुतः प्रत्युत्पन्नमहाभयाः ॥ ३३ ॥

जागर्ति योगनिद्रालुर्यावद्वि[6]वमडम्बरः ।
अयं नियमलोप्तव्यलोकार्तिर्लोकभावनः ॥ ३४ ॥

१. A जयत्यन्तः । २. B C थ्यामध्य । ३. C D तोद्धा । ४. A B मपांसेतुमि । ५ A पुष्ण । B मुख । D मुष्णन्त्यमाप्य । ६ A B C ड्डिम्ब ।

प्रतीष्टक्लेशकल्लोलः क्राम्यतीव क्षणादयम् ।
सासारिकसमापत्तिवर्शेन वशिनां वरः ॥ ३५ ॥

संसरत्येष न परं देवो देवर्षियोनिषु ।
अङ्गीकृतजगत्कार्यस्तिर्यक्त्वमपि गच्छति ॥ ३६ ॥

मग्ना महति मीनेन तिमीनेन जलेऽमुना ।
सदयं पस्पृशे बालशैवालनिचिता त्रयी ॥ ३७ ॥

अनेन कूर्माकृतिना विभ्रतोर्वीमकारणम् ।
जगत्यनर्घ्यतां नीतः प्रपन्नोद्वहनश्रमः ॥ ३८ ॥

अस्यैकार्णवकासारक्रीडाक्रोडस्य मेदिनी ।
दंष्ट्राशिरसि दृष्टाऽऽसीत्कल्हारकलिकोपमा ॥ ३९ ॥

वरेण्यः स हिरण्याक्षः येनातिथ्यमुपेयुषः ।
चक्रेऽस्यादिवराहस्य स्वेन कायकसेरुणा ॥ ४० ॥

बहिः स्फुरत्पीवरदोर्वरदोऽयं विराजते ।
बिभ्राणः स्फुटमुद्वेगामुद्वेगापगमान्महीम् ॥ ४१ ॥

नमोऽस्मै मन्त्रघोषाय घृतपङ्क्तिनिषादिने ।
दक्षिणानुचरीचाटुहृष्टाय क्रतुपोत्रिणे ॥ ४२ ॥

यं दूरमैधयद्वेधाः द्वेधा तमकरोन्नखैः ।
दैत्यं द्रवन्मरुन्मेषमेष मर्त्यमृगाधिपः ॥ ४३ ॥

अनेन स प्रतिहतत्रिपुरारिपरश्वथः ।
नखाग्रच्छेद्यतां नीतो हिरण्यकशिपुद्रुमः ॥ ४४ ॥

आत्तावरजभावेन वैरोचनिभयानतः ।
अनेनोन्नमितो भूयः सुदूरं दिवि देवराट् ॥ ४५ ॥

जयत्यस्य घनश्यामो धर्मनिष्यन्दनिर्झरः ।
दक्षिणः पादशिखरी स स्वर्गशिखरातिगः ॥ ४६ ॥

पाद्यतां प्राप्तमस्येति गौरवाद्वृषभध्वजः ।
वहत्यद्यापि शिरसा वारि ब्रह्मकमण्डलोः ॥ ४७ ॥

१ A स्ते । २. C. omits this sloka

त्रिःसप्तकृत्वः क्षितिपक्षतजाब्धिषु मज्जता ।
जितो जनकशोकाग्निर्जमदग्निसुवाऽमुना ॥ ४८ ॥

राम इत्युज्ज्वलैर्[1]ज्वालाचक्रवालः शिखी शमम् ।
अनीयत गभीरेण सोऽमुना रामवारिणा ॥ ४९ ॥

राजा दशरथो धन्यः सुतो यस्य स्वभूरयम् ।
धन्यः स दशकण्ठोऽपि भिन्नश्चिन्त्येत योऽमुना ॥ ५० ॥

हा स्वर्गममुना शून्यं हा पातालमिमं विना ।
अस्यागमादयं लोको मध्यमः श्रेष्ठतां गतः ॥ ५१ ॥

ध्रुवं विनाऽमुनेदानीमर्धेनार्धेन्दुशेखरः ।
दिवि सीदति शून्यायां धात्रैकसुहृदा धृतः ॥ ५२ ॥

वियोगस्यैकसुभ्रातुः सा नूनमवलम्बते ।
पौलोमीपतिमप्यद्य पौलस्त्यनिकृतेः स्मृतिः ॥ ५३ ॥

दत्तान्तरे स्वे च पुरे शून्यशय्ये[2] च सागरे ।
उत्कण्ठां विघ्रणोत्यस्य तार्क्ष्यो मोघैर्गतागतैः ॥ ५४ ॥

नूनमुष्णं न तप्ताऽपि[3] श्वसित्युच्चस्तनेऽमुना ।
न्यस्तामुरसि रक्षन्ती वनमालां सुताऽम्बुधेः ॥ ५५ ॥

स यथास्तीर्णशेषाहिर्मन्ये नदनदीपतिः ।
अस्योच्चलहरीग्रीवो मुहुर्मार्गमुदीक्षते ॥ ५६ ॥

राम इत्यवतीर्णोऽयमर्णवान्तःशयः पुमान् ।
स च नक्तंचरपतिर्द्वितीयो दितिसंभवः ॥ ५७ ॥

अस्येदानीं निषङ्गस्थशरकेसरसंहतेः ।
वयं मनुजसिंहस्य कपयः करजाङ्कुराः ॥ ५८ ॥

आस्तामसावविवृतस्वशौर्यविभवो विभुः ।
भवद्भिरेव दूरस्थैः दशास्योऽयं विशस्यताम् ॥ ५९ ॥

यूयं सुकृतिनस्त्रासात्त्राता यदुपसेदिवान् ।
संभावयति साहाय्यं प्रणयेन जगत्सु वः ॥ ६० ॥

---

१ C. त्युदुर. २. A. दन्तारेर श्वेतपुरे शून्यमध्ये । B. दन्तान्तरं पुरेशेष शून्यशय्ये । ३. A. न्तः । C सि । D तथा त्यन्त वियोगर्तिः

यतध्वमवधेरर्वाक्कृतार्थाः परिवर्तितुम् ।
विशेषज्ञः प्रभुरसौ विशेषाद्वः प्रसीदतु ॥ ६१ ॥

प्रत्याव्रजन्ति जविनो न यावद्विनतादयः ।
तावत्प्रतीच्छ तारेय पारितोषिकमीशितुः ॥ ६२ ॥

आस्तां त्वद्योग्यतोद्ग्रीवः[1] सुग्रीवः सुतरामसौ ।
स च दाशरथिर्यातु त्वय्यौरस इवार्द्रताम् ॥ ६३ ॥

श्रुतोऽयमृक्षराजस्य राजपुत्र मनोरथः ।
तत्त्वरस्व निबध्नन्तु त्वयि वृद्धाशिषः फलम् ॥ ६४ ॥

निगृहीतेन्द्रियग्रामा रामं जानन्ति योगिनः ।
वयंत्ववरमेवास्य रूपं रूपयितुं क्षमाः ॥ ६५ ॥

चक्रे चक्रे हुताराातिरधिष्ठानं कुलेऽधुना ।
रघोरघोच्छेदकरो भगवानिति शुश्रुम ॥ ६६ ॥

नमोऽस्मै जितमेतेन कोऽप्ययं चिरमेधताम् ।
शुक्लामस्य कृतप्रैष्यः प्रसादान् प्लवगेश्वरः ॥ ६७ ॥

औदार्यमार्य हनुमन् क्व तादृशमुदीक्ष्यते ।
पुनर्भ्रातरि तस्यैव सौमित्रौ यदि लक्ष्मणे ॥ ६८ ॥

किं गुणानां समग्राणामुदग्रायाः किमाकृतेः ।
आभिजात्यस्य किमथो किमिन्द्रियजयस्य वा ॥ ६९ ॥

किं वैष्णवस्य महसः किमुत्कर्षस्य धन्वनि ।
तस्येतरनरस्येव सदृशः स दशाक्रमः ॥ ७० ॥

क्लिश्नाति साधुचरितानसाधूननुरुध्यते ।
अनुरूपं न जानाति युवराज विधिर्जडः ॥ ७१ ॥

स विष्टपत्रयगुरुर्गिरीन्द्रतनयापतिः ।
सख्योपनतयक्षेशो भिक्षामटति शङ्करः ॥ ७२ ॥

सेव्यमानः श्रिया सोऽपि स्वाधीनसुखसाधनः ।
निद्रायते निधौ वाराम्रुरगस्रस्तरे हरिः ॥ ७३ ॥

१ D दुष्प्रमद्ग्रीव ।

असौ जगद्बीजपुटः परमेष्ठी परात्परः ।
प्राप्तो बत शिरच्छेदमब्रह्मण्यमुदाहरन् ॥ ७४ ॥

ज्वलित्वा तूलवत्तच्च ययौ मन्युशतार्जितम् ।
दुर्वारशिखिसंकाशे दुर्वाससि वृषण्वसु ॥ ७५ ॥

विमुक्तान्यविनोदस्य वियत्यनवलम्बने ।
केनात्मनो निमित्तेन रवेर्दीर्घाध्वनीनता ॥ ७६ ॥

औषधीनामधिपतिः सोमो राजा सुधामयः ।
गत्वा नभोन्तमायाति कथंचिद्यापितक्षयः ॥ ७७ ॥

पीतः सोऽमृतवत्पूष्णो दन्तपातपराभवः ।
भृगु[1]णोद्ध्रियमाणेऽक्षिण न विकूणितमाननम् ॥ ७८ ॥

रु[2]जा गृहीतचरणस्तरणेरात्मसंभवः ।
शृणोति नारकाक्रन्दान्वेदनावान्महानिशि ॥ ७९ ॥

स्वर्भो[3]गोपचितस्वाङ्गमङ्गैस्तीव्रतपःकृशैः ।
ऊहुर्महर्षयः स्कन्धैर्गतं नहुषमिन्द्रताम् ॥ ८० ॥

सौदासेन वसिष्ठस्य ब्रह्मर्षेर्नृपरक्षसा ।
ते च दीर्घं विलपतः शतं विशसिताः सुताः ॥ ८१ ॥

तनूजराजीववनं राजर्षेः सगरस्य च ।
पातालमूले कपिलप्रालेयेन कथीकृतम् ॥ ८२ ॥

पात्रभूताः प्रतीच्छन्ति सन्त एव महाभरम् ।
नियत्या निपतन्तीनामापदां संपदामिव ॥ ८३ ॥

नोत्कृष्यन्ते निहीनेषु विपदः संपदोऽथवा ।
उपेता या महत्स्वेव ताः प्रकर्षं विभ्रत्वते ॥ ८४ ॥

अपि स्यात्तातसुग्रीवः प्रणुद्य विधिसंकटम् ।
तस्योपनेता कामानां त्वन्मुखैः सखिसत्तमैः ॥ ८५ ॥

प्रसीद स्वामितनय स्वश्रेयसमतः परम् । २नः श्रेयसम्
त्वयैवमनुरक्तेन कस्तस्यार्थो न सेत्स्यति ॥ ८६ ॥

---

1 B र्गणो. 2 D रक्षो. 3 A D संभो.

स्तोताऽनुवादी सुलभो भृत्यः प्रत्यक्षपेशलः ।
हितैषी दुर्लभस्त्वादृक्परोक्षेऽधिकसंभ्रमः ॥ ८७ ॥

ऋक्षराज पुनः शाधि किं नः संप्रति सांप्रतम् ।
वार्ता पूर्वविसृष्टानां काऽपि नास्ति वनौकसाम् ॥ ८८ ॥

किंस्विद्दवीयसो देशानादेशाभ्यधिकान्गताः ।
विस्मृतस्वामिसत्काराः स्थिता वा यत्र तत्र ते ॥ ८९ ॥

इतस्ततश्चरन्त्येव यूथपोत्तमयूथपाः ।
ते नूनमकृतार्थत्वान्नोत्सहन्ते निवर्तितुम् ॥ ९० ॥

अद्यैव सायमथवा श्वोभूते भूतवादिनः ।
द्रष्टव्यान्द्रक्ष्यसि पुरो वीर वानरपुङ्गवान् ॥ ९१ ॥

ते दीर्घाध्वश्रमक्षामाः सान्त्वनीयास्त्वयाऽधिकम् ।
तुष्यन्त्यसाध्याद्भृत्येषु[1] प्रभवः कुण्ठितेष्वपि ॥ ९२ ॥

ते बाह्यकरणप्रायाश्चरन्त्यन्तिक एव वा ।
दूरं पुनरुपेतोसि मनसैव हनूमता ॥ ९३ ॥

आसक्तस्त्वयि[2] भारोऽयं मारुतौ च महाबले ।
हस्तैमात्रं दिशन्तो वामनुयास्यन्ति मादृशाः ॥ ९४ ॥

सर्वे वयं चलिष्यामः केवलं क्लेशभागिनः ।
एकः परमिमं प्रैषं पारयिष्यति मारुतिः ॥ ९५ ॥

कियच्छेषमहः पश्य हरिवीर हरत्ययम् ।
विन्ध्यः सन्ध्यातपच्छेदविच्छिन्नघनमेखलः ॥ ९६ ॥

अयं निर्गच्छति करी कन्दरादभिनर्मदम् ।
ददानः सप्तभिर्मार्गैरातपान्ते पुनर्मदम् ॥ ९७ ॥

वहन्त्यमी वनोत्सङ्गसरःपर्यन्तमारुताः ।
आकृष्टार्द्रवियोगार्तकोकप्रियतमारुताः ॥ ९८ ॥

सूचयन्ति श्वपाकानां पाकधूमलता नवाः ।
इतश्च पल्लीरुद्वेल्लत्तमोविरलतानवाः ॥ ९९ ॥

१ B. तुष्यन्ति भव्या । । २ A. उक्त ।

वदन्ति वर्त्म वाराहमिमाः पङ्कच्छटालयः ।
मज्जतामुन्नजन्त्येते कुञ्जराणां कटालयः ॥ १०० ॥

आपृच्छय गच्छन्ति वधूः सारसा नदतीरतः[1] ।
क्षणं विवृत्य पश्यन्ति चक्राह्वा नदतीरतः ॥ १०१ ॥

स्नानगन्धाः किरातीनामितोऽमी नलदोरवः ।
दात्यूहानामितश्चायं मदनानलदो रवः ॥ १०२ ॥

गच्छन्त्यमी सिन्धुतटीस्त्रुत्याद्दिनलवातपाः ।
गुहाभ्यो निर्गताः कृच्छ्रान्मुनयो जलवातपाः ॥ १०३ ॥

साध्वसं जनयत्येष गिरिर्गम्भीरपादपः ।
निद्रान्ते नैर्झरीः सिंहः परं निर्भीरपादपः ॥ १०४ ॥

नूनमेष्यत्तमो[2]दोषादपास्य रविरम्वरम् ।
यात्ययं मुक्तसर्वाशः पाशिनः शिविरं वरम् ॥ १०५ ॥

जगत्क्रामन्ति निर्विघ्ना विस्रब्धं ध्वान्तराजयः ।
परिवृत्य सहस्रांशोर्नेदानीमन्तरा जयः ॥ १०६ ॥

करोति लोलानलिनो नलिनोदरमध्यगान् ।
वायुः सकैरवामोदो वामो दोषामुखोद्भवः ॥ १०७ ॥

इति बहुरसैः स्वैरालापैरुपेतमुदामिव
प्रभुविरहिणां तेषां तुल्यत्वरातरलात्मनाम् ।
प्रहितपृतनासापेक्षाणां कथं कथमप्यसौ
निभृतविहगे विन्ध्योत्सङ्गे जगाम निशीथिनी ॥ १०८ ॥

किमि[3]न्दुना चन्दनवारिणा च वा किमब्जकन्दैरभिनन्दवत्सलः ।
विचिन्त्यतामातुरतापशान्तये स केवलं विक्रमशीलनन्दनः ॥

---

इत्यभिनन्दकविकृतौ रामचरिते महाकाव्ये स्वैरालापवर्णनो नाम
नवमः सर्गः समाप्तः ।

---

१. A सरसोरु । B शिरसान । २. मस्मात्त । ३. BCD omit this.

एषोऽस्म्यहं निजवचस्सु चिरादिदानीं निस्साध्वसः कविसहस्रसमागमेऽपि ।
श्रीहारवर्षनरलोकपतेः पुरस्ताद्विस्तारिविष्णुवनमालिविचारितेषु ॥
किं शीधुभिर्भवतु फाणितशर्कराद्यैः किंवा सितासहचरैः कथितैश्च दुग्धैः ।
दुग्धाब्धिलब्धसुधयाऽपि न किंचिदेव यत्राभिनन्दसुकवेर्विचरन्ति वाचः ॥
नमः श्रीहारवर्षाय येन हालादनन्तरम् ।
स्वकोशः कविकोशानामाविर्भावाय संभृतः ॥

# अथ दशमः सर्गः ॥



तैरथादृश्यत पुरः परिच्छदपरम्परा ।
बत ब्रुवाणा मौनेन प्रभूणामकृतार्थताम् ॥ १ ॥

निर्विकासा निरामोदा सा तैः सेनासरोजिनी ।
आवर्तमाना ददृशे दिवाऽपि रजनाविव ॥ २ ॥

एकैकशः कृशैरङ्गैरुपेयुरपरिच्छदाः ।
ते शाखामृगसामन्ताः समन्तान्मुषिता इव ॥ ३ ॥

न भेजुरुच्छ्रयं पुच्छाः पिच्छोला न च सस्वनुः ।
आगता अपि कृच्छ्रेण जज्ञिरे वानरेश्वराः ॥ ४ ॥

ततस्ततोऽद्रिविषमाद्विशेषमलिनैर्मुखैः ।
मोघश्रमाः समाजग्मुः गोलाङ्गूलवलीमुखाः ॥ ५ ॥

दूरतोऽध्वश्रमक्षामाः कपयः कृपणैर्मुखैः ।
स्वरैश्रावितनामानो नेमुर्नेतारमङ्गदम् ॥ ६ ॥

जग्मुर्जाम्बवतो मूलं मौलिभिर्दूरबन्धुरैः ।
कुण्ठमैषाः प्रभुसुतं नापश्यन् सहसा परे ॥ ७ ॥

विविक्तासीनंमितरे मितरोचितादिङ्मुखाः ।
परीयुरद्भुतनयं तनयं मातरिश्वनः ॥ ८ ॥

निषेदुरपरे पश्चान्नापरे जग्मुरन्तिकम् ।
नात्मानं ज्ञापयामासुरन्ये संनिहिता अपि ॥ ९ ॥

१. AC omit this २. A B D omit these two slokas ३. BC रापेतु । ४. C स्वैरं

तत्पूर्वप्रतिसंभाषारुद्धक्षुद्रविहेठकः ।
कथंचिद्विग्रहुड्कारस्तारस्तारेयमभ्यगात् ॥ १० ॥

अलब्ध्वा मैथिलीवार्तामदृष्ट्वा रावणालयम् ।
आगतः स्वागतं क्वापि नलो नाचष्ट लज्जया ॥ ११ ॥

निरूप्य सरितां पारं शरभः समुपाययौ ।
आजगाम गिरीणां च गत्वाऽन्तं गन्धमादनः ॥ १२ ॥

नीलः प्रत्यङ्गमुद्दामकेतकीरेणुरूषितः ।
उदन्वत्कच्छसञ्चारमसूचयदनक्षरम् ॥ १३ ॥

आययौ सह्यकटकादनेकानीकनायकः ।
विगाह्य विवृतद्वारा दरीर्दूरं दरीमुखः ॥ १४ ॥

सुवीक्षितघनद्रोणीवृक्षादृक्षवतो गिरेः ।
आससाद सवैलक्ष्यो गवाक्षानुपदं गवः ॥ १५ ॥

विलोक्य वृषभाकारमृषभः शैलमाययौ ।
आजगाम गजो गत्वा कुञ्जरं कपिकुञ्जरः ॥ १६ ॥

प्रापद्वन्ध्यश्रमो विन्ध्यान्मैन्दो मन्दमुखद्युतिः ।
द्विविदो दर्दुरप्रस्थादकृतार्थः समाययौ ॥ १७ ॥

पृच्छ्यमानोऽथ पनसः प्रकटाध्वपरिश्रमः ।
आचष्ट दृष्टं न मया किञ्चिदित्यञ्चिताननः ॥ १८ ॥

प्रवृत्तिचन्द्रिकालोपमुद्रिते कुमुदानने ।
न विचेरुः सभावाप्यां सभ्यलोचनषट्पदाः ॥ १९ ॥

अन्तस्तत्रैव सुष्वाप धूम्रो धूसरकेसरः ।
अम्बूकृतैर्जाम्बवतः सिक्त्वा कर्णमकारणम् ॥ २० ॥

इति प्रेषणवैयर्थ्यविलक्षान्वालिनन्दनः ।
पुनः प्रैषप्रदानेन प्लवगान् प्रोदसाहयत् ॥ २१ ॥

स्वागतं वः क्षणमिह श्रममुत्सृज्य गम्यताम् ।
स्मरत स्मरतप्तस्य रघुनाथस्य तां दशाम् ॥ २२ ॥

१. B रु C त्रु । २. A B स्त ।

अदृष्टान् पश्यतोद्देशान् विषादः[1] क्षणमुज्झ्यताम् ।
कः कृती सकृदारम्भान्निर्वन्धिं फलमश्नुते ॥ २३ ॥

उपरुद्धोऽहमत्यर्थं कुलपुत्राः क्रमेन वः ।
किन्त्वसौ कोपनः स्वामी न तुष्यति फलादृते ॥ २४ ॥

श्रमः सिद्ध्यवसानोऽयं तद्यतध्वमकातराः ।
गच्छन्ति क्लेशभीरूणां दूराद्दूरं मनोरथाः ॥ २५ ॥

उद्यमाश्च जिगीषूणां पुष्पोद्भेदाश्च शाखिनाम् ।
अग्रतो हि क्रियाभाजः फलभाजस्तु पृष्ठतः ॥ २६ ॥

पितृव्यकथितोद्देशां दिशमेतां पुनः पुनः ।
प्रयातं[2] सुप्रभोस्तस्य रामस्यैतत्प्रयोजनम् ॥ २७ ॥

पुनन्ति पश्यन्तमपि प्रत्यङ्गं भवताममी ।
रामार्थघटनारम्भश्रमोत्थाः स्वेदबिन्दवः ॥ २८ ॥

प्रत्यूचुरथ निर्जित्य कण्ठकम्पं कपीश्वराः ।
प्रश्वासनश्यद्भूतसाध्वसाः स्वामिनः सुतम् ॥ २९ ॥

भर्तृदारक भक्तानामेकमागः क्षमस्व नः ।
पुनरादिश विस्रब्धं क्व यामः करवाम किम् ॥ ३० ॥

उग्रदण्डभृतो राज्ञः सुग्रीवान्न तथा भयम् ।
देवे दयावति यथा मन्दाक्षं नो रघूद्वहे ॥ ३१ ॥

ग्रामगोष्ठसभारामा रामार्थे सुविचारिताः ।
वृक्षाम्बुगिरिदुर्गेषु मार्गितो रजनीचरः ॥ ३२ ॥

सोऽसकृद्बहुगम्भीरगुहागहनकाननः ।
करामलकसंकाशः कृतो विन्ध्यमहागिरिः ॥ ३३ ॥

असावितस्ततः स्थूलशिलाशकलघर्घरः ।
आकर्णितः सोमसुतास्रोतःकलकलारवः ॥ ३४ ॥

ते च तस्यास्तलस्रस्तव्याधीगुञ्जागणोज्ज्वलाः ।
कुञ्जा बालकरञ्जानां कूलयोरवलोकिताः ॥ ३५ ॥

१. C अवसादोऽय २. BC यतध्वं।

भीमानिर्झरनिर्घोषदूरोत्कण्ठशिखावलाः ।
अभीक्ष्णमीक्षितास्ताश्च मेकलाचलमेखलाः ॥ ३६ ॥

घनवंशीवनश्यामाः स्निग्धशाद्वलभूमयः ।
ते दृश्यदृषदो दृष्टाश्चिरं वेणुमतीतटाः ॥ ३७ ॥

असौ गतः श्रुतिपथं तत्र तापीतटे पुनः ।
आर्तानघवधूकण्ठकरुणः कुररीरवः ॥ ३८ ॥

असावस्माभिरवटग्रावाग्रेक्षणगोचरैः ।
प्रस्विन्नाङ्घ्रितलैर्दूराद्गम्भीरा सरिदीक्षिता ॥ ३९ ॥

तीर्णा मही महाभाग तीर्णा चर्मण्वती नदी ।
उद्देशास्ते च निर्बन्धान्निर्विन्ध्याया निरूपिताः ॥ ४० ॥

रूपिता साऽपि यत्नेन रत्नाकरविलासिनी ।
कान्ताखिलैखगश्रेणीनिक्वाणा कङ्कणावती ॥ ४१ ॥

विशेषज्ञ विशेषेण विचिता वीचिमालिनी ।
वेलानिलघनाश्लेषतरला मुरला नदी ॥ ४२ ॥

शीलिताः स्वैरकल्लोलवेलापवनवीजिताः ।
ताश्च तारेय कावेरीकूलतालीवनालयः ॥ ४३ ॥

उद्गर्भशुक्तियुवतिस्वैरस्वीकृतसैकता ।
दृष्टाऽऽपगा शुक्तिमती मुक्तांशुपटलोज्ज्वला ॥ ४४ ॥

तमःकोपितनिश्वासनायकाक्रान्तरोधसि ।
ताम्रपर्ण्यां तथाऽस्माभिर्नाथ नीता निशीथिनी ॥ ४५ ॥

क्रान्ताः सन्ततमाकन्दमुकुलोपितकोकिलाः ।
केरलाः स्खलदासन्नमलयोपत्यकानिलाः ॥ ४६ ॥

रक्षोभुजङ्गः सोऽन्विष्टश्चिरं चन्दनशाखिषु ।
राजपादपराजीषु राजपुत्री च मार्गिता ॥ ४७ ॥

१. A मनिर्गम २. A त । ३. A न्तखेल ४. A लिकाः । B तलाः ।

कक्कोलीतरवस्तुङ्गा लवङ्गाश्च विलङ्घिताः ।
क्षुण्णश्च वनमेलानां वेलायां दक्षिणोदधेः ॥ ४८ ॥

चैत्यषण्डेषु पाण्ड्यानां नीतं दिनमपण्डितैः ।
क्षपा च क्षपिताऽस्माभिर्विपिने वानवासिके ॥ ४९ ॥

कलहा रीतयस्ताश्च यत्रोद्दामाश्चं[1]कासति ।
कलहारीतं[2]कण्ठानां द्वन्द्वानामधिरोहतां[3]म् ॥ ५० ॥

यत्र ता निष्कुटभुवः स्फुटन्मारीचकोरकाः ।
राजन्ते द्रौ[4]विडीदन्तज्योत्स्नापीतचकोरकाः ॥ ५१ ॥

अपावृतवधूहारमं[5]रीचिरुचिराजिरैः[6] ।
सोऽपि चोलाजनपदः प्रविश्य सुविचारितः ॥ ५२ ॥

स्थानान्तराणि दृष्टानि प्रतिष्ठाननिवासिनाम् ।
सूर्याकारां[7]ः प्रविष्टाः स्मस्तच्च सूर्याकरं [8]पुरम् ॥ ५३ ॥

दृष्टोऽन्तः कुन्त्यवन्तीनां कुन्तलाः सुविलोकिताः ।
प्रत्येकश्च तुरुष्काणां विचित्रा वृक्षवाटिकाः ॥ ५४ ॥

व्याहृताश्चाटवो लाटैर्विराटैर्वलितं भिया ।
आन्ध्रैरुक्तानि रन्ध्राणि न काञ्चयैः किञ्चिदीरितम् ॥ ५५ ॥

गेहगर्भा विदर्भाणामाकोणान्तं विचारिताः ।
उपरुद्धानि भोजानामजिराणि गृहाणि च ॥ ५६ ॥

शीर्णा अपि दशार्णानां पर्णशाला विलोकिताः ।
प्रत्यट्टवलभीचैत्यं दत्ता दृग्दरदे[10]ष्वपि ॥ ५७ ॥

सुदृष्टौ लवणाम्भोधेस्ततः पूर्वापरौ तटौ ।
भ्रान्तं च शम्भोरभ्यर्णे गोकर्णसदनौकसः ॥ ५८ ॥

सारार्थस्पर्शनौदार्यरुद्धरोषणधार्मिकैः ।
तदव्यलीकमस्माभिः स्वामिसद्म निभालितम् ॥ ५९ ॥

---

१. B C यात्रोद्याने । २. B रि । ३. B C मोहनी । ४. B C न्ति द्र । ५. A स । ६. A भिः । ७. B रं । ८. A रं स । B खु । ९. A लोभा । १०. A ग्वरदेषु च ।

उद्वीक्ष्य वीक्षितचरीं वेलां वैलक्ष्यचञ्चलाः ।
प्रप्लुताः स्मः परावृत्य श्रीपूर्वं पर्वतं प्रति ॥ ६० ॥

क्षुण्णः कपिकिशोरेन्द्र महेन्द्रः पुनरप्यसौ ।
काननं तच्च कालिङ्गं तत्पूर्वमिव वीक्षितम् ॥ ६१ ॥

स वृथाऽस्माभिरुद्दामधारानीरनिरागसि ।
लम्पाकंकटके[1] पापः कापेयादवलोकितः ॥ ६२ ॥

अनुगोदं गतामोदा गताः स्मस्तदनन्तरम् ।
विप्रलुप्तानि[2] विप्रादैराश्रमाणि निशाचरैः ॥ ६३ ॥

वदन्त इव वृत्तान्तमार्द्रार्द्रं मैथिलीगतम् ।
चरिताश्चिरमस्माभिरुद्देशा दण्डकावने ॥ ६४ ॥

आहारं देहि वैदेहि क्व युवां रामलक्ष्मणौ ।
दण्डकारण्यकीराणामित्युत्कण्ठागिरः श्रुताः ॥ ६५ ॥

अनाददानाः कवलं मुहुर्वलितकन्धराः ।
उत्कण्ठिता इवात्यर्थं दृष्टाः पञ्चवटीमृगाः ॥ ६६ ॥

सौमित्रिणा शूर्पणखा यत्राक्रम्य विरूपिता ।
स देशः सूचितोऽस्मासु पङ्क्तशेषैस्तदङ्ककैः[3] ॥ ६७ ॥

तदीक्षितं जनस्थानं यत्र ते दूषणादयः ।
रामेणैकाकिना बाणैः कौणपाः कुणपीकृताः ॥ ६८ ॥

दारानुदारचरितो यत्र विन्यस्य लक्ष्मणे ।
गतः कनकसारङ्गनिग्रहाय रघूद्वहः ॥ ६९ ॥

गता गैत्वरमारीचमायाजालादधीरताम् ।
जानकी यातुधानेन यतो नीता च तेन सा ॥ ७० ॥

तावुभौ भ्रातरौ यत्र वञ्चितौ संबभूवतुः ।
देशः स दारुणोऽस्माभिरभव्यैरवलोकितः ॥ ७१ ॥

१, B C रम्याङ्क । २. B C यत्राप्लुता । ३. A रसृ दैः । ४. B C स ।

क्व नीतेति न जानीमो जानीमो रक्षसा हृताम् ।
तामर्थे रघुनाथस्य मैथिलीं कपियूथपाः ॥ ७२ ॥

सोऽपि नो विदितो दस्युर्दशास्यस्तस्य केवलम् ।
बहुमायावलम्बस्य निलये नास्ति निश्चयः ॥ ७३ ॥

इतः कार्ष्णायसस्तस्य पातितः स्यन्दनोऽम्बरात् ।
चण्डचञ्चुपुटाग्रेण गृध्रेन्द्रेण जटायुषा ॥ ७४ ॥

सा दशा रामभद्रस्य तद्रक्षोऽद्यापि जीवति ।
धिङ्नो मिथ्यातपःक्षामान् स्वस्ति वः साध्यतामितः ॥ ७५ ॥

वयमुक्ता मुनिवरैर्मन्युगद्गदया गिरा ।
इति गोदावरीकच्छे पृच्छन्तो रामवत्सलैः ॥ ७६ ॥

न पीता वातगण्डूषास्त्वपः कोष्णा न शीलिताः ।
सा शीर्णपर्णार्धमयी स्मृताऽप्यासीन्न पारणा ॥ ७७ ॥

नाकर्णितः खगो मार्गान्नामृष्टः पृषतो लिहन् ।
न सारिता लतोन्मार्गचलद्व्यालोलपल्लवा ॥ ७८ ॥

उद्बद्धो न जटाभारश्चीरमार्द्रं न पीडितम् ।
समाहृतोटजाग्रे च न त्वगातपमर्मरा ॥ ७९ ॥

अस्मदाभाषणोद्भूतरामोत्कण्ठैर्महर्षिभिः ।
यथावस्थितनिष्पन्दैः शेषमामृष्टमाह्निकम् ॥ कुलकम् ॥ ८० ॥

तापसीनां समाजेषु तत्र तत्राश्रमान्तरे ।
कथा पुराणी सीतायाः श्रुताऽस्माभिरुदश्रुषु ॥ ८१ ॥

शून्यपर्णचतुःशालं विशालचितिसंकुलम् ।
स्वर्गिणः शरभङ्गस्य प्रविष्टाः स्मस्तपोवनम् ॥ ८२ ॥

अकृत्वा रामसंभाषां यदगान्मेघवाहनः ।
तत्कारणविदो दृष्टाः प्रतिवेश्म तपस्विनः ॥ ८३ ॥

१. B र्षि । २. B द्याः । ३. A B ष्ट ।

वाङ्मिश्रणात्स चास्माभिः सुतीक्ष्णः सुमहामुनिः ।
कृतः प्रवातहैमन्तक्षपान्तर्भूतदुर्दिनः ॥ ८४ ॥

रुद्धा मुनिभिराख्यातशातकर्णिकथैर्वयम् ।
पञ्चाप्सरसि मज्जन्तः सरस्युन्मुरजारवे ॥ ८५ ॥

पुनः प्रस्रवणस्याद्रेः परिवृत्य निरूपिताः ।
पादाः प्रपातसलिलक्षोदालीदूरशीतलाः ॥ ८६ ॥

कूजत्कारण्डवकुला वकुलाचितरोधसः ।
दृष्टाः पम्पाप्रभृतयो भूरयोऽथ जलाशयाः ॥ ८७ ॥

चिरादप्यशकल्लोलकल्लोलरवशीतलान् ।
मोक्तुं नस्तान्न राजीवराजीवलयिनो मनः ॥ ८८ ॥

शतकृत्वः शिखरिणः शतकृत्वः सरित्तटाः ।
शतकृत्वश्च ताः साक्षात्कृताः कान्तारभूमयः ॥ ८९ ॥

अन्विष्टा सुप्तसिंहासु गुहासु जनकात्मजा ।
करिकङ्कालकूटेषु पिशिताशी गवेषितैः ॥ ९० ॥

सकीलकाः शर्करिलाः करालकुशकोटयः ।
ता निष्कारणमस्माभिर्लघुभिर्लङ्घिता भुवः ॥ ९१ ॥

बिलानि प्रतिवल्मीकमवगाढानि भोगिनाम् ।
विचितानि विहङ्गानां नीडानि प्रतिशाखि च ॥ ९२ ॥

पृथक्कृताः पत्रपुटाः पाटितानि फलानि च ।
कुड्मलानां हठाद्भिन्नं निर्बन्धनिबिडं मुखम् ॥ ९३ ॥

ग्रन्थिपल्लवयोः सन्धावन्तर्बन्धनपुष्पयोः ।
मध्ये स मार्गितोऽस्माभिर्मायावी सारवल्कयोः ॥ ९४ ॥

तेषु तेषु विगाढोरःप्रेरणप्राप्तवर्त्मसु ।
आत्माऽस्माभिर्निराशङ्कैः संकटेषु प्रवेशितः ॥ ९५ ॥

---

१. A द्रुम २. A मात्स्य C मन्द ३. B स्या ४. B विलोकि । ५. B ड्घाद्रि । C र्लिघाद्रि
६. A नवत्स C निबन्ध ७. B क ।

प्राप्तानि विप्रकृष्टानि सूक्ष्माण्यधिगतानि च ।
दृष्टा मिथः पदार्थानां सन्धयः समवायिनाम् ॥ ९६ ॥

न कस्यामपि काष्ठायामस्माभिरवलोकिता ।
महिषीक्ष्वाकुचन्द्रस्य चन्द्रिकेव कुहूनिशि ॥ ९७ ॥

वार्ताऽपि न श्रुता काचित् तस्य च क्रू[1]ररक्षसः ।
वृथैव भ्रान्तमस्माभिर्वीर विश्रुतविक्रमैः ॥ ९८ ॥

न किंचित्ते कृतं प्रष्टेश्चल वालिसुत स्वयम् ।
धूमः समुल्लसत्येव शिखी जाड्यमपोहति ॥ ९९ ॥

आराद्धायस्व वा पृष्टं तथा भूयो यतेमहि ।
आनृण्यं त्वत्प्रसादेषु यथा नः स्यात्कियत्स्वपि ॥ १०० ॥

इत्युदीरितभूतार्थानुदारचरितान् कपीन् ।
उद्य[2]मान्तै[3]रदत्ताङ्गानङ्गदः पुनरब्रवीत् ॥ १०१ ॥

दृष्टद्रष्टव्यपर्यन्ताः कोयमात्मन्यनादरः ।
इतोऽधिकमनुष्ठातुमलमेकपदेन कः ॥ १०२ ॥

श्लाघ्याः कस्य न ते यूयं यैरयं दक्षिणापथः ।
साद्रिसिन्धुपरिक्षेपः क्षुण्णः कतिपयैः क्षणैः ॥ १०३ ॥

न दूरमिषवो यान्ति स्खलन्ति मरुतोऽद्रिषु ।
मनो विरमति श्रान्तं को युष्माननुधावति ॥ १०४ ॥

विश्राम्यत परिश्रान्ताः प्रसरामोऽधुना वयम् ।
अस्य कार्यस्य पर्यन्तः पर्यायादवसीयताम् ॥ १०५ ॥

अथार्याः कार्यसौरस्[4]यात् श्रमोऽयं चेन्न गृह्यते ।
तदायातै[5] समं सर्वे यथाशक्ति यतेमहि ॥ १०६ ॥

क्षुण्णायां दिशि युष्माभिर्न जिगीषाऽधिकाऽस्ति नः ।
परमाच्छिन्नवाञ्छत्वादुञ्छार्थमयमुद्यमः ॥ १०७ ॥

---

१. B D कापि तस्यास्तस्यच २. A B द्दा ३. C त । ४. D भ्या । ५. A मः ।

अरोचत समस्तेभ्यो वालिपुत्रस्य तद्वचः ।
वृन्दे तत्र ध्रुवा सिद्धिर्मिथो यत्रैकवाक्यता ॥ १०८ ॥

ते विनिश्चित्य सुचिरं वानरेन्द्रास्तरस्विनः ।
प्रतस्थिरे यूथवराः प्रातः पत्ररथा इव ॥ १०९ ॥

तत्तद्विचिक्युर्विन्ध्याद्रेर्वानरेन्द्रा वनान्तरम् ।
यत्र यत्र कृतः पूर्वं नेदीयस्त्वादनादरः ॥ ११० ॥

विचित्य विन्ध्यमखिलं लेभिरे हरयः श्रमम् ।
अम्रुच्यत न स क्वापि रामरामामलिम्लुचः ॥ १११ ॥

अथापतन्नपर्यन्तं ज्वलन्तं गिरिजङ्गलम् ।
मूर्तिमन्तमिवायातमयोगं रामसीतयोः ॥ ११२ ॥

विचिन्वन्तश्चिरतरं यत्र श्रान्ता वनौकसः ।
लतामपि लघुच्छायां नासेदुर्मैथिलीं कुतः ॥ ११३ ॥

ग्रावाणो रावणक्रूरास्तैराक्रान्ताः पदे पदे ।
आसादिता पुनः क्वापि न सीताशीतला सरित् ॥ ११४ ॥

समन्तादुदभृज्यन्त केवलं वालुकासु ते ।
शुष्काननाः शुष्कनदीः खनन्तोऽम्बु न लेभिरे ॥ ११५ ॥

गिरिष्वमार्गन् प्लवगास्तृड्वेगोच्चलितासवः ।
सन्न्यस्तसीताविचयाः प्रपातसलिलस्रुतिम् ॥ ११६ ॥

इतस्ततः सिकतिलाः स्थलीस्तेजस्तरङ्गिणीः ।
ते निपेतुः पयोमोहात् पिपासार्तास्तपस्विनः ॥ ११७ ॥

अथ स्तिमितपक्षाग्रामुन्नमन्तीमदूरतः ।
ददृशुः सारसश्रेणीमासन्नजलशंसिनीम् ॥ ११८ ॥

प्रस्निग्धशाद्वलश्यामं सीमान्तमलभन्त च ।
सिद्ध्येवार्पितमुत्सङ्गमनुबन्धप्रसन्नया ॥ ११९ ॥

१. A भु । २. द्व्यैवा C द्धो ।

स्मृताञ्जनेयसंबन्धो नूनमासीत्तदाऽनिलः ।
यदकस्मादतीवार्द्रः कपीन् प्रत्येकमामृशत् ॥ १२० ॥

तत्रापश्यन्न सरसीर्न सरः सरितं न च ।
विचिन्वन्तो बिलस्यैव द्वारमारादमूचयन् ॥ १२१ ॥

कलं क्वणन्त्यः कलहंसमालाः कुर्वन्ति येनाशु गतागतानि ।
यतस्सुशीतः शनकैरुपैति पातालमूलाभिजनो नभस्वान् ॥ १२२ ॥

किमेतदित्यूढवितर्कदोलो[1] वलीमुखेन्द्रः स महेन्द्रनप्ता[2] ।
तन्निश्चयाय प्रजिघाय शीघ्रं निवेश्य कुत्रापि कपीन् पुरोगान्[3] ॥ १२३ ॥

---

येनाद्य[4] रामचरितं चरिताद्भुतेन स्वेनाधरीकृतमतीव महीतलेऽस्मिन् ।
तेनैव पालकुलचन्द्रमसा तदित्थमुत्थापितं जगति पश्यत चित्रमेतत् ॥

इत्यभिनन्दकृतौ रामचरिते महाकाव्ये बिलदर्शनो नाम
दशमः सर्गः समाप्तः ॥

[5]किं शीधुभिर्भवतु फाणितशर्कराद्यैः
किं वा सितासहचरैः क्वथितैश्च दुग्धैः ।
दुग्धाब्धिलुब्धसुधयाऽपि न किञ्चिदेव
यत्राभिनन्दसुकवेः प्रसरन्ति वाचः ॥
तस्यैकस्य निकामदानरभसप्रोल्लासिनः शोभते
श्लाघ्ये वस्तुनि यत्र तत्र पृथिवीपालस्य कौतूहलम् ।
रुध्वा सर्वदिशो मनोरथपथातीतार्द्धिभिः पुस्तकैः
सत्काव्याभिरतेन रामचरितं येन प्रतिष्ठापितम् ॥

---

१. C लो । २. D न्द्रैः समम्रि ३. D कपिप्रवीरान् ४. A only reads this । ५. C Reads these two slokas ।

# अथैकादशः सर्गः ।



ते निपेतुः समं सर्वे मौर्वीमुक्ता इवेषवः ।
एकलक्ष्ये बिलद्वारि वेगव्याकुलकेसराः ॥ १ ॥

अजिघ्रन्नथ संकीर्णं तत्रामोदममानुषम् ।
अशृण्वंश्च शयानस्य निश्वासानिलनिस्वनान्[1] ॥ २ ॥

अपसस्रुर्भयात्पादैर्मुखैः सस्रुः कुतूहलात् ।
बिलाग्रद्वारपर्यन्तवलयस्था वलीमुखाः ॥ ३ ॥

ते दूराद्ददृशुर्दीप्तिं प्रत्युप्तविकटाश्मनः ।
महाधनपरीतस्य पर्यङ्कस्येव शङ्किताः ॥ ४ ॥

तत्परीयुर्महातल्पं सविकल्पा वलीमुखाः ।
आचिक्षिपुः शिरःस्थानादुत्तरीयमनन्तरम् ॥ ५ ॥

दूरमीयुश्च दृष्ट्वैव मुखमुज्ज्वलकुण्डलम् ।
निद्रानिमीलितस्यापि स्मेरस्येव सुरद्विषः ॥ ६ ॥

तस्यापतन् शनैः[2] मूर्ध्नि मुद्रामक्ष्णोरमोचयन् ।
नेशुर्नासाविवरयो[3]रविशन् श्मश्रुकाननम् ॥ ७ ॥

मन्द्रध्वानिं[4] मणिमिव स्वैरं तुन्दमवादयन् ।
ददुर्निकुट्टनं[5] वक्षस्यक्षुण्ण इव कुट्टिमे ॥ ८ ॥

उच्चयं मोचयामासुरुच्चख्नुर्निष्कनायकम् ।
बभञ्जुर्भुजयोर्जोषमङ्कस्थाः कङ्कणावलिम् ॥ ९ ॥

तूलीं धूलीभिरकिरन्नुपधानमपाटयन् ।
प्रच्छदाञ्चलमाकृष्य मुहुः पादावमार्जयन् ॥ १० ॥

१. B स्वनिश्चलान् D मिव निश्चलान् । २. A समं । C शरैः । ३. A सुविर । ४. B C सा
५. B C कं ।

छित्वा शतसरं[1] हारं हत्वा पादेन शेखरम् ।
उच्चैरसित्वा श्रवसोरश्रयन् शरणं दिशः ॥ ११ ॥

तेनापनिद्रः क्षोभेण करमृष्टारुणेक्षणः ।
उदियायायुधी क्रोधः कोऽप्यसौ कायवानिव[2] ॥ १२ ॥

ददृशुस्तस्य दूरस्थाः कपयः कायसौष्ठवम् ।
सोऽपि तान्वीक्ष्य कार्क्षेण क्षणमुद्भूतवागभूत्[3] ॥ १३ ॥

कपिकीटाः कुतो यूयमागताः कालनोदिताः ।
खिलीकृतं मयोद्देशं निश्शलाकं शयालुना ॥ १४ ॥

क्षान्तं प्रमादकापेयमिदं वः प्रतिगम्यताम् ।
अथावलेपः स्फुरति क्रियतामायुधग्रहः ॥ १५ ॥

इति वाचि प्रगल्भायां तस्य ते जातसाध्वसाः ।
परस्परस्य पश्यन्तः प्रत्यपद्यन्त नोत्तरम् ॥ १६ ॥

प्रत्युद्योतहतोद्योताः खद्योता इव ते दिवा ।
अध्वान्तै[4]चकिताः पेतुर्गुल्मस्य महतस्तले[5] ॥ १७ ॥

ऊचुः सेनापतिं नाथ बिलमस्माभिरीक्षितम् ।
दूरादेव च[6] दुर्वारद्वारपूरुषभीषितैः ॥ १८ ॥

सर्वे वयमधो नीतास्तेनात्युद्धतया गिरा ।
गिरयः सागरेणेव महाप्रलयवेलया ॥ १९ ॥

स रक्षति बिलं वीर व्यक्तं नक्तञ्चरेश्वरः ।
किं भूयसाऽस्त्यसन्देहं तत्रैव जनकात्मजा ॥ २० ॥

विप्रचित्तिप्रभृतिषु प्रकृष्टो दनुजेषु वा ।
स निद्रया विनयते तत्रेन्द्रविजयश्रमम् ॥ २१ ॥

---

१. BC स्वरं २. AB यक्षुधा योधः कोऽप्ययं कोपवानिव । ३. A मद्भुतवान । ४. CD न । ५. CD स्थ । ६. CD तद्दूरादेव ।

योऽस्तु सोऽस्तु मतेऽस्माकमतिविस्मयकारणम् ।
स्तोतव्यो बिलवास्तव्यः सोऽवलेपकलो युवा ॥ २२ ॥

के वयं वायुपुत्राद्यैरप्यमीभिस्तवानुगैः ।
अजिते दुर्गमं तास्मिन्वालिपुत्र बिलोदरम् ॥ २३ ॥

तानथाश्वास्य चकितानालोच्य सह मन्त्रिभिः ।
चचाल वालितनयः प्रतिमल्लकुतूहली ॥ २४ ॥

ततः प्रतिभटाटोपश्रवणानन्तरोत्थिताः ।
जगृहुर्विग्रहाकूतमनीकस्था वलीमुखाः ॥ २५ ॥

येऽपि प्रत्याययुर्भग्नास्तेऽपि तत्रोहुरुद्धतिम्[1] ।
किमप्युन्मीलति स्थाम प्रभोः शूरस्य संनिधौ ॥ २६ ॥

तेन शौर्यरसेनासीदनाश्वानपि मूर्छता ।
प्रकामपीतसंभुक्तसंकाशो वालिनन्दनः ॥ २७ ॥

जगाम सिद्धौपधतामसावारभटीरसः ।
सद्यश्चिकित्सितासाध्यप्लवगाध्वश्रमज्वरैः[2] ॥ २८ ॥

चेलुरुन्मूलितासन्नद्रुमशैलायुधोद्धताः ।
प्रत्येकमरिसंहारमाशंसन्तः प्लवङ्गमाः ॥ २९ ॥

तेऽभिजग्मुस्तमुद्देशं यत्रोत्सार्य कपीनसौ ।
पुनर्भेजे बिलद्वारि विस्रब्धमवलायितम् ॥ ३० ॥

अभिवीक्ष्य बिलद्वारि वानरास्तं महौजसम् ।
चक्रुः किलकिलाशब्दं ववल्गुश्च बलोत्कटाः ॥ ३१ ॥

अलक्ष्यत बिलद्वारि घोरे घोराकृतिः स तैः[3] ।
समारूढो यमस्येव जिघांसोर्व्यात्तमाननम् ॥ ३२ ॥

---

१. BC चुरुद्धतम् । २. B परिश्रमः । ३. A घोरघोराकृतिः सतैः ।

कपयः प्रतिबोधाय महाकायस्य तस्य ते ।
चक्रुः लीनाः कलकलं मशका इव कर्णयोः ॥ ३३ ॥

बुबुधे विबुधोन्माथी समनह्यन्त यूथपाः ।
जहास प्रत्यभिज्ञाय तानसौ पुनरागतान् ॥ ३४ ॥

पप्रच्छाङ्गदमालोक्य कोऽयं तस्यैष वालिनः ।
दैवदोषादनार्येण हतो येनार्यदुन्दुभिः ॥ ३५ ॥

किमर्थमिममुद्देशं बह्वपायमुपागतः ।
कच्चिन्मार्गति सुग्रीवमादेशादेष वालिनः ॥ ३६ ॥

हत्वा वा वालिसुग्रीवावयमद्योत्थितो युवा ।
अनर्जितां स्वभवैर्जिगीषति महीमिमाम् ॥ ३७ ॥

इत्युवाच स तानृक्षप्लवगान् प्रमना इव ।
समृद्धसाहसरसंप्रातराशमनोरथः ॥ ३८ ॥

स्वं स्वं वदत विज्ञानमितो भवत संभृताः ।
सर्वानेव कुलारातीन् दोश्शाली दलयामि वः ॥ ३९ ॥

अयमुन्मौलिरथवा शरणं रणवर्जितः ।
प्रणम्य यातु चरणौ रणोत्सुक्योत्थितस्य मे ॥ ४० ॥

संनाहकृतवेगैस्तैः संनाहं भ्रमयन्बली ।
दितिभूश्चक्षमे दर्पादिति भूरि वदन्नसौ ॥ ४१ ॥

केचित्तमाक्रान्तबिलं विलङ्घितपुरस्सराः ।
जघ्नुः प्लवङ्गास्तरुणास्तरुणार्कनिभाननाः ॥ ४२ ॥

अन्येऽवर्षन् शिलाजालं लाजालङ्कृतिपेशलम् ।
असौ यदूहे शिरसा रसादिव महासुरः ॥ ४३ ॥

स्फुरन्महोल्लासहसा सहसा तन्मुखद्युतिः ।
रजनीवं रविच्छायान् विच्छायानकरोत्कपीन् ॥ ४४ ॥

---

१. B C D नुक्त्वा । २. B C D सात्म्यसमर । ३. B C D सहसामी ४. A रथवारण । ५. B C च

ते चोपसस्रुः शनकैरनीकस्य मुखानि ये ।
ते चक्रुर्घनमाश्लेषं ये वक्षांसि भुजाश्च ये ॥ ४५ ॥

ननर्त नमिताग्राङ्घ्रिः स्कन्धयोर्गन्धमादनः ।
ववल्गोन्नतलाङ्गूलः शरभः शिरसि क्षणम् ॥ ४६ ॥

लम्बमानो बभौ कण्ठान्निष्कम्पो निष्कवन्नलः ।
लग्नो मुक्तागुणे गाढं नीलो नायकतां ययौ[1] ॥ ४७ ॥

तिरश्चकार केयूरं कुमुदः क्रान्तकूर्परः ।
ऋषभः शुशुभे तिष्ठन्नवष्टभ्य शिरोमणिम् ॥ ४८ ॥

वीरौ च मैन्दद्विविदौ व्यधत्तां मणिबन्धयोः ।
जात्यजाम्बूनदच्छेदरुचा रुचकविभ्रमम् ॥ ४९ ॥

प्रावेशयद्भीममुखः शूले नासान्तरालयोः ।
चिक्षेप चक्षुषोः पांसुमंसारूढो दरीमुखः ॥ ५० ॥

दन्तैर्दन्तच्छदपुटं पाटयामास दुर्मुखः ।
शब्दोत्तरां च मुखरः केशान्ते कर्तरीं दधौ ॥ ५१ ॥

पनसस्त्रुटिशश्चक्रे कटीमाक्रम्य कङ्कटम् ।
इन्द्रजानुश्च जानुस्थश्चीरग्रन्थिममोचयत् ॥ ५२ ॥

इत्यभीक्ष्णं क्षपयतः कपीनुच्चावचानसौ ।
प्रतिप्रतीकमधुनान्महोक्ष इव मक्षिकाः ॥ ५३ ॥

विजित्य मूर्च्छामुत्पुच्छाः कपयो भूरजाश्रिताः
क्रुद्धास्तं पुनराजग्मुः जग्मुर्विप्रकृताः पुनः ॥ ५४ ॥

ऊचुश्च ते वालिसुतं वयं भग्नाः स्वयं भवान् ।
गत्वा मन्त्रबलेनाशु विलाद्यालमपोहताम् ॥ ५५ ॥

छिन्नाः सटाः शिरः पिष्टमुरः पृष्ठं च पोथितम् ।
मुक्ताः स्मो मृतसंकल्पाः ते निमीलितचक्षुषः ॥ ५६ ॥

१. BC D नायकतां ययौ ।

करेणादाय लाङ्गूलं तेन व्योमाङ्गणे वयम् ।
भ्रामयित्वोज्झिता भूमौ वमन्तः शोणितं मुखैः ॥ ५७ ॥

उच्चचाल तदाकर्ण्य कुपितः किञ्चिदङ्गदः ।
तं जाम्बवद्वायुसुतावपीरं नानुजग्मतुः ॥ ५८ ॥

एककः प्रार्थयामास महत्तद्भूतमङ्गदः ।
प्रवेशयन्ति सन्देहं न बहून्बाहुशालिनः ॥ ५९ ॥

तस्य तन्मत्सरान्धोऽपि दैत्यस्तुष्टाव सौष्ठवम् ।
करोति गुणसंवादो बलेन हि वशंवदम् ॥ ६० ॥

ऊचे सेनापरिक्षिप्तः सोऽवलिप्तमिदं वचः ।
अनेकनायकन्यासविकटाङ्गदमङ्गदम् ॥ ६१ ॥

यत्सत्यं वालिनः सूनुरनुक्तोऽपि प्रतीयसे ।
प्रसूयतेऽपकृष्टोऽपि नामृगेन्द्रं मृगाधिपः ॥ ६२ ॥

इदं त्वसदृशं बाल यद्वालिरिपुकिङ्करः ।
दुर्गत्यर्थीव गृह्णासि बहुदुर्गामिमां दिशम् ॥ ६३ ॥

शत्रुसन्ततिपक्षेऽपि किं वयं न गवेषिताः ।
कस्तेऽभूद्वालिविश्वासः पितृव्ये पितृविद्विषि ॥ ६४ ॥

क्व नु सद्वत्सलः श्रीमान् क्व नु विद्वाननास्तिकः ।
क्व नु शक्तः क्षमाशीलः क्व नु कुल्यप्रियः प्रभुः ॥ ६५ ॥

आपृच्छ्य तौ चीरभृतौ चिरव्युषितमत्सरः ।
विस्रब्धं त्वयि दुष्प्राज्ञ स प्राज्ञः प्रहरिष्यति ॥ ६६ ॥

अद्यापि चेच्चेतयसि पितुः स्मरसि चोन्मनाः ।
आपन्नगृह्यान्भज नः त्यज दायाददासताम् ॥ ६७ ॥

किं ते किष्कन्धया कार्यमनार्यकपिजुष्टया ।
चिरमास्व ममाश्वासाद्बिलेऽस्मिन्वालिनोऽधिकः ॥ ६८ ॥

---

१. A वध्येषान्नाभि । २. A मूढा ३. A शिव ४. BC शाम । D महीम् । ५. BC मम स्वस्वा ।

तं राजपुत्रापशदं कथं च बहुमन्यसे ।
पार्श्वकेण पिधाय स्वं पितुस्ते निजघान यः ॥ ६९ ॥

मा ग्रहीस्तस्य नामापि हृतभार्यस्य रक्षसा ।
संभृतात्मजिगीषस्य यस्यास्था वानरेष्वपि ॥ ७० ॥

तस्य पित्रा निरस्तस्य को ददाति प्रतिश्रयम् ।
ऋते रविसुताज्जाल्मादेकोदरवधैषिणः ॥ ७१ ॥

राघवो वालिनः शत्रुः पौलस्त्यो वालिनः सुहृत् ।
कथं ते वालिपुत्रस्य वृत्तिर्विसदृशी तयोः ॥ ७२ ॥

हितारोचकिभिर्मुग्धैः परिविष्टस्य तेऽधुना ।
आत्मशत्रोरिव व्याधिर्न व्यामोहो विरंस्यति ॥ ७३ ॥

अद्यापि प्लवसे बाल बहिरेव रणोदधेः ।
अभिषेणयसि प्रष्ठैः क्रोष्टुभिर्यन्मृगाधिपम् ॥ ७४ ॥

दैत्योऽहं दुर्दमो नाम दुन्दुभेः सदृशः सुतः ।
श्रुतः सुभटगोष्ठीषु प्लवङ्गमशिशो न ते ॥ ७५ ॥

मयानुरोधेन मया विलेऽनन्यजनाविले ।
कालोऽयमरिसत्कालो नीयते वचनीयते ॥ ७६ ॥

ससैन्येन त्वया सार्धं मम निद्रासुखच्छिदा ।
स यास्यतीन्द्रः सोपेन्द्रो निद्रामद्य निरायताम् ॥ ७७ ॥

ममोद्बोधितकण्डूतेस्त्वयैकाहतिनाशिना ।
निकामनिकषस्तम्भो भविष्यति भुजस्य कः ॥ ७८ ॥

तिष्ठ प्रहर सारं ते कलयामि किशोरक ।
बिभेषि चेन्निवर्तस्व क्लीबे कारुणिका वयम् ॥ ७९ ॥

तमुवाचाङ्गदः क्रुद्धः क्रमः केनातिवर्त्यते ।
अनुधावस्व पितरं करोमि सदृशं पितुः ॥ ८० ॥

१. A ह । २. B नश्य । ३. D B प । ४. BC स्मिन्नजनाविले । C D न्नजना ।

इत्युत्प्लुत्य विलोक्याशाः पुनः स तमभाषत।
यत्सत्यमनुकम्पा नस्त्वय्यनाथे विलोकसि ॥ ८१ ॥

शयालो बिलमुत्सृज्य शेष्वान्यत्र यथासुखम्।
स्वप्नायितसमे कोपः कोऽस्माकं त्वद्विकत्थने ॥ ८२ ॥

अथासावास्थितद्वारो वानरेन्द्रगणेश्वरः।
प्रजज्वालार्धचन्द्रेण लब्धेनासुरतोयधेः ॥ ८३ ॥

प्रतलैर्मुष्टिभिर्लोष्टैर्द्रुमैरश्मभिरद्रिभिः।
प्रजह्रे च यथाक्रोधं प्रहारक्रमकोविदः ॥ ८४ ॥

तदाशु[1] क्षणमन्दाक्षनिद्रावलनवञ्चनैः[2]।
विजिग्ये वालिपुत्रस्य दैत्योऽद्रिद्रुमदुर्दिनम् ॥ ८५ ॥

स चकार महावीरः सामीरेरपि विस्मयम्।
गिरिवृष्टौ विशिष्टायामविशिष्टेन वर्ष्मणा ॥ ८६ ॥

नगैरङ्गदमुक्तैस्तैस्तस्य लोमापि न क्षतम्।
प्रतिघातप्रतीपैस्तु स्वैव निष्पिपिषे चमूः ॥ ८७ ॥

बिसदण्डानिवादाय हस्ताभ्यां स महातरून्।
पश्यत्सु कपिसिंहेषु बभञ्जासुरकुञ्जरः ॥ ८८ ॥

अपादशिखरं विन्ध्यमद्रुमं दण्डकावनम्।
स्थलीरलोष्टपाषाणाश्चक्रे वितथमङ्गदः ॥ ८९ ॥

क्रूरं मुसलमुद्यम्य दर्पात्स्मेरस्तमब्रवीत्।
दैत्यो धुतसमस्तास्त्रमपि धाम दुरासदम् ॥ ९० ॥

हेलावहतगीर्वाणभटास्थिकणगर्भिणीम्।
ईक्षमाणोऽपि जय्यँसि त्वमस्य मुखमेखलाम् ॥ ९१ ॥

इति ब्रुवाणस्य जवादाक्षिप्तेनाक्षुणोद्बली।
तेनैव मुसलेनास्य मुखोलूखलमङ्गदः ॥ ९२ ॥

---

१. BC क्षमाशु. २. A चञ्चलैः। ३. A यथा। ४. B द।

स तेनाच्छिन्नमुसलो मुषण्ढी[1]मसुरोऽग्रहीत् ।
मुषण्ढ्यां मुषितायां च मुद्गरं घोरमाददे ॥ ९३ ॥

त्रस्तेषु दिवि देवेषु भुवि शाखामृगेषु च ।
मुष्ट्याऽभिनद्वालिसुतस्तस्य मुद्गरमुद्यतम् ॥ ९४ ॥

कराभ्यामभिनत्खड्गमङ्घ्रिभ्यामहरद्गदाम् ।
दूरमावेष्टयामास लाङ्गूलेन च लाङ्गलम् ॥ ९५ ॥

कक्षयोराक्षिपत्पाशं प्रासमास्येन चाददे ।
तस्य निश्शेषयामास हसन्नेवायुधानि सः ॥ ९६ ॥

तं प्रत्यु[2]ग्रायुधग्रामविप्रलोपव्यलीकृ[3]तः ।
दैत्यो दुर्वारनियतिर्नियुद्धाय न्यमन्त्रयत् ॥ ९७ ॥

ततः परिकरन्यासक्षणव्यग्रौ विरेजतुः ।
मुष्टिपीडनपिष्टाद्रिच्छुरितोरःस्थलावुभौ ॥ ९८ ॥

मल्लावुत्फुल्लवक्त्राब्जौ तौ कृताग्रभुजग्रहौ ।
क्रीडयेव न्ययुध्येतामक्रूरैः करणैः क्षणम् ॥ ९९ ॥

अथाब्दाविव गर्जन्तावाघूर्णन्तौ नदाविव ।
क्षुब्धौविव नभस्वन्तावर्चिष्मन्ताविवोद्धुरौ[4] ॥ १०० ॥

बद्धवैराविव व्यालौ क्रुद्धौ मदकलाविव ।
भिन्नव्रजाविव वृषौ सिंहावेकगुहाविव ॥ १०१ ॥

त्वराभिलषितौ कान्तौ दन्तादन्ति कचाकचि ।
मिथः सूचीगतिं प्राप्य सूक्ष्मसन्धी समीयतुः ॥ १०२ ॥

तयोः संभेदपृथुभिः पार्ष्णिघातैर्मुहुर्मही ।
चकम्पे च विदद्रे च ननाद च ननाम च ॥ १०३ ॥

अवाग्वालिसुतः किंस्विदूर्ध्वं[5] दैत्यः स्विदुत्प्लुतः ।
पार्श्वयोः पुरतः पश्चादुभौ स्वित्पु[6]रतः समम् ॥ १०४ ॥

---

१. A भूपुण्डी २. A D त्य ३. B C D कि । ४. A न्ताविवोद्धुरौ । ५. BC D किमुत्प्लु । ६. C D त्कुरु ।

हा हा हताः स्मः सर्वेऽमी मैवं भोः कपिभिर्जितम् ।
मा स्म वल्गत यूथेशाः संशयस्थावुभाविमौ ॥ १०५ ॥

वात्येयं केवला नोभौ शब्दमात्रमिदं न तौ ।
न दैत्यो न च तारेयो रेणुरेकैव राजते[1] ॥ १०६ ॥

चतुष्पाणि चतुष्पादमंसल[2]श्चाननद्वयम् ।
ताभ्यामन्यदिदं भूतं बत निर्मितमद्भुतम् ॥ १०७ ॥

इत्यन्योन्यमुपारूढवितर्कोत्फुल्ल[3]लोचनाः ।
कपयश्चिन्तयामासुः पश्यन्तः प्रधनं तयोः ॥ १०८ ॥

युयुधाते महायोधौ तावदृष्टचरौ चिरम् ।
श्वेतपर्वणि संरब्धौ रुद्रवैवस्वताविव ॥ १०९ ॥

युगपज्जग्मतुर्मोहं युगपज्जग्मतुर्महीम् ।
उज्जग्मतुश्च युगपत्तौ मिथः सुहृदाविव ॥ ११० ॥

मुहुर्वान्तसफेनास्रौ तौ विस्रस्तशिरोधरौ ।
जग्मतुर्जीवसन्देहं वालिदुन्दुभिनन्दनौ ॥ १११ ॥

अत्यशेताङ्गदं दैत्यस्त्वचर्चो करणयोग्यया ।
तिरश्चकार तारेयस्तरसैवाद्भुतेन तम् ॥ ११२ ॥

तुष्टुवे सुरसंघातैः कपिभिश्च कपीश्वरः ।
अव्याजबाहुद्रविणस्तेनैवैकेन दानवः ॥ ११३ ॥

प्रविष्टोऽङ्गददोःपाशं दैत्यो निष्क्रान्तलोचनः ।
मुमोच सार्धमसुभिर्नादं नाकिभयङ्करम् ॥ ११४ ॥

तमुद्यम्य महाकायं दर्शयित्वा दिवौकसाम् ।
महाबलो वालिसुतश्चिक्षेप लवणाम्बुधौ ॥ ११५ ॥

---

१. B C वैषरेचकी । २. D मसमग्रा । ३. B C लव । ४. B C D रङ्गदैत्यः । ५. A रः । ६. B C D दस्य

दुन्दुभयो दिवि दध्वनुरुच्चै
रुच्चभुजाः कपयश्च ववल्गुः ।
सिद्धनिकायकराब्जविमुक्तं
माल्यमथाङ्गदमूर्ध्नि पपात ॥ ११६ ॥

---

[१]दीपः सतां स खलु पालकुलप्रदीपः
श्रीहारवर्ष इति येन कविप्रियेण ।
सद्यः प्रसादभरदत्तमहाप्रतिष्ठे
निष्ठापितः पिशुनवाक्प्रसरोऽभिनन्दे ॥

इत्यभिनन्दकृतौ रामचरिते महाकाव्ये
एकादशः सर्गः समाप्तः ॥

---

[२]किं शीधुभिर्भवतु फाणितशर्कराद्यैः
किंवा सितासहचरैः क्वथितैश्च दुग्धैः ।
दुग्धाब्धिलब्धसुधयाऽपि न किञ्चिदेव
यत्राभिनन्दसुकवेर्विचरन्ति वाचः ॥

---

१. BCD omit this sloka. २. BC Read this after colophou.

# द्वादशः सर्गः ॥



रुचिराहवकर्मतोषितत्रिदशप्रेरितमाल्यमण्डितः ।
प्रविवेश सह प्लवङ्गमैर्बिलपातालमनर्गलोऽङ्गदः ॥ १ ॥

अभयं वचसाऽङ्गदो ददाववलम्बं वपुषाऽञ्जनासुतः ।
बलमृक्षपतिश्च सान्त्वनैः प्लवगानां गहने निमज्जताम् ॥ २ ॥

स्खलतां चलतां विघूर्णतां गलतां गाढमभिघ्नतां मिथः ।
विलगर्भतमस्यभूच्चिरं प्लवगानां तलयानविप्लवः ॥ ३ ॥

अनुदन्ननुजीविनः प्रभूनथ बालाः स्थविरानलङ्घयन् ।
गुरवोऽन्तसदामधोऽभवन्नवकृष्टाः प्रवरान् प्रचिक्षिपुः ॥ ४ ॥ अन्तेवासिनाम्

नल जीवसि जीवं जाम्बवन्बलमाश्वासय वालिनन्दन ।
गव गच्छ गवाक्ष देशय द्विविद ध्यायसि मैन्द का गतिः ॥ ५ ॥

प्रसभं चलतीव कः खलो गलहस्तं बत को ददाति मे ।
युवराज इवायमीयते बलवान् कश्च विलङ्घ्य वालधिम् ॥ ६ ॥

चल चन्दन गन्धमादन क भवानन्ध इवानुधावति ।
गज गर्जसि किंनु सांप्रतं निषध क्वासि निषेध संप्लवम् ॥ ७ ॥

किमयं सुमहान् भुजङ्गमः किमु लाङ्गूलमिदं हनूमतः ।
विटपः स्विदयं सकण्टकः किमथासीददति कौमुदः करः ॥ ८ ॥

लिखतीव नखेन कस्त्रिकं मम कण्डूयति कश्च सक्थिनि ।
गवयस्य निगूढनर्मणो नियतं पाणिरयं भविष्यति ॥ ९ ॥

मम मार्गति कोनु वक्षसि प्रणयिन्या इव निस्त्रपः स्तनौ ।
अयमाननसंमुखश्च कश्चपलश्चुम्बितुमिच्छतीव माम् ॥ १० ॥

अवगाढुमलं तलं न ते नच निर्गन्तुमलं बिलान्ततः ।
इति केवलमाकुलां गिरं हरिवीराः परितोऽभ्युदीरयन् ॥ ११ ॥ अभ्युदैरयन् इति लङ्...

१. B न । D व । २. C D नील । ३. A नुद । ४ C स्त्रक्थिणि ।

अथ चिन्तयतामनारतं रविवंशाभ्युदयं वनौकसाम् ।
अजनिष्ट शनैः शनैस्तमः तदुपस्तजनयेव जर्जरम् ॥ १२ ॥

अवजित्य निरङ्कुशं ततः तिमिरं दूरमुपेत्य विस्मिताः ।
ददृशुर्मणिदीपिकान्तरे परिवृत्तं हरयश्चराचरम् ॥ १३ ॥

वहु तत्तदपूर्वमद्भुतं सहसाऽऽसाद्य वनौकसामसौ ।
चकितेव चलद्विलोचना परिचिक्षेप चमूश्चमूपतिम् ॥ १४ ॥

विनिवेशितवाहिनीपतिः पतति स्मानिलिरग्रतो दिशः ।
अविलोकितनिर्गमां भुवं न हितैषी नयति प्रभुं पुरः ॥ १५ ॥

चतुरन्तचलद्विलोचनो रुचिरे तत्र रसातलान्तरे ।
स विलोकयति स्म केवलं ललिताभोगमनेकमद्भुतम् ॥ १६ ॥

तरवस्तरुणच्छदा इति प्रतिपन्नाः प्रथमं हनूमता ।
गरुडोपलरश्मिराजयः शिखरालाः स्फुटमन्तिके बभुः ॥ १७ ॥

पवनाङ्गभुवा तरङ्गिणी ददृशे वीतमला विदूरतः ।
स्फटिकालिरुदंशुरन्तिकादभवत्तृट्तरलस्य तस्य सा ॥ १८ ॥

सुसमे विषमत्वमग्रहीत्पथि नानाश्ममयूखमोहितः ।
विषमे समबुद्धिरस्खलद्द्युतिसन्तानातिरोहितावटे ॥ १९ ॥

मणिभित्तिषु तेन वेश्मनामभिघातस्तरलास्वलभ्यत ।
अपि मुक्तमहांशुमञ्जरीनिचितं द्वारमदर्शि नाग्रतः ॥ २० ॥

विदितं न जलं न च स्थलं कलितं नान्तरमुच्चनीचयोः ।
मणिकुट्टिमभूमिषु भ्रमः प्रततस्तत्र बभूव मारुतेः ॥ २१ ॥

भ्रमति स्म समन्ततः परं निरचैषीन्निपुणं न किञ्चन ।
प्रतिवस्तुविरूढसंशयः स तदात्मन्यपि शङ्कितोऽभवत् ॥ २२ ॥

वहुमोहतरङ्गमालिनीमभितस्तत्र निकामशीतले ।
श्रममाप न संपतन्मुहुर्मृगतृष्णां मृगवाहनन्दनः ॥ २३ ॥

१. A त्तिं । २. B C यदुतत्तदुपेत । ३. A भुवः । ४ C D ज । ५. A B भूमि ।

जलपङ्करजोऽनिलातपव्यसनं नाण्वपि तत्र सोऽन्वभूत् ।
समकालमृतूनलोकयंस्पुनरुद्भिन्नमनोज्ञलाञ्छनान् ॥ २४ ॥

विविनक्ति पुरो न वासरं विवरे तत्र विभावरीं न च ।
स तयोर्व्यतिमूर्छितं पुनः कलयामास ललाम केवलम् ॥ २५ ॥ पुन्दर ।

दशकण्ठभयादिवागतं जगतः सारमशेषमैक्षत ।
तपनेन्दुरुचामसंचरे विवरे तत्र समीरनन्दनः ॥ २६ ॥

हरिचापशतं मनोहरं परितः कीर्णमपश्यदानिलिः ।
निगृहीतकुतूहलोऽन्तिकात्परिपस्पर्श न पाणिनाऽपि सः ॥ २७ ॥

मणिपीठमुखैः परिच्छदैरुपतस्थे भवनाङ्गणागतः ।
उपचारसमेतपाणिभिः परिवत्रे च स पुस्तपुत्रकैः ॥ २८ ॥

उपसंजगृहे महीरुहैरभितः पल्लवपलाशपाणिभिः ।
चकरे च लताभिरादरान्निजपुष्पाञ्जलिभिः स पादयोः ॥ २९ ॥

मुकुलैः सशलाटुभिश्चितं नतमुत्पाकभरारुणैः फलैः ।
अलिकोकिलकीरसंकुलं स ययौ चूतवनं वनालयः ॥ ३० ॥

उदडीयत कीरपङ्क्तिभिः सह पाकश्लथबन्धनैः फलैः ।
अलिभिः सह दुद्रुवे च तैः स्तबकैस्तन्निकषा कृतस्मितैः ॥ ३१ ॥

उपमन्त्रयति स्म माधवी मधुरैर्भृङ्गरुतैर्विदूरतः ।
परिहासवती हनूमते निकटस्थाय न दर्शनं ददौ ॥ ३२ ॥

स ककुप्सु कषायशीतलं मुहुरामोदमजिघ्रदानिलिः ।
अशृणोन्मणितानि चालिनां नलिनीमैक्षत नान्तिकादपि ॥ ३३ ॥ नान्तोऽलिन् शब्दः प्रकृत- ख२२।

झटिति प्लवगाग्रणीरपां मणिसोपानमपश्यदाशयम् ।
सह यत्र विचित्रकेलयो मणिमीनैर्मणिपत्रिणां गणाः ॥ ३४ ॥

युगपत्कुमुदारविन्दयोर्मकरन्दप्लुतभृङ्गबृन्दयोः ।
अतिहासमसावशङ्कत स्फुटदुर्वर्णसुवर्णकोशयोः ॥ ३५ ॥

१ CD सूच । २ D कलां न । ३ A शिबि । ४ ABC परिवाय । ५ A वल्लस ।

अथ चिन्तयतामनारतं रविवंशाभ्युदयं वनौकसाम् ।
अजनिष्ट शनैः शनैस्तमः तदुपस्तर्जनयेव जर्जरम् ॥ १२ ॥

अवाजित्य निरङ्कुशं ततः तिमिरं दूरमुपेत्य विस्मिताः ।
ददृशुर्मणिदीपिकान्तरे परिवृत्तं[1] हरयश्चराचरम् ॥ १३ ॥

बहु तत्तदपूर्वमद्भुतं सहसाऽऽसाद्य वनौकसामसौ ।
चकितेव चलद्विलोचना परिचिक्षेप चमूश्चमूपतिम् ॥ १४ ॥

विनिवेशितवाहिनीपतिः पतति स्मानिलिरग्रतो दिशः ।
अविलोकितनिर्गमां भुवं न हितैषी नयति प्रभुं पुरः ॥ १५ ॥

चतुरन्तचलद्विलोचनो रुचिरे तत्र रसातलान्तरे ।
स विलोकयति स्म केवलं ललिताभोगमनेकमद्भुतम् ॥ १६ ॥

तरवस्तरुणच्छदा इति प्रतिपन्नाः प्रथमं हनूमता ।
गरुडोपलरश्मिराजयः शिखरालाः स्फुटमन्तिके बभुः[3] ॥ १७ ॥

पवनाङ्गभुवा तरङ्गिणी ददृशे वीतमला विदूरतः ।
स्फटिकालिरुदंशुरन्तिकादभवत्तूतरलस्य तस्य सा ॥ १८ ॥

सुसमे विषमत्वमग्रहीत्पथि नानाश्मयूखमोहितः ।
विषमे समबुद्धिरस्खलद्द्युतिसन्तानातिरोहितावटे ॥ १९ ॥

मणिभित्तिषु तेन वेश्मनामभिघातस्तरलास्वलभ्यत ।
अपि मुक्तमहांशुमञ्जरीनिचितं द्वारमदर्शि नाग्रतः ॥ २० ॥

विदितं न जलं न च स्थलं कलितं नान्तरमुच्चनीचयोः ।
मणिकुट्टिमभूमिषु भ्रमः प्रततस्तत्र बभूव मारुतेः ॥ २१ ॥

भ्रमति स्म समन्ततः परं निरचैषीन्निपुणं न किञ्चन ।
प्रतिवस्तुविरूढसंशयः स तदात्मन्यपि शङ्कितोऽभवत् ॥ २२ ॥

बहुमोहतरङ्गमालिनीमभितस्तत्र निकामशीतले ।
श्रममाप न संपतन्मुहुर्मृगतृष्णां मृगवाहनन्दनः ॥ २३ ॥

---

१. A त्तिं । २. B C यदुतत्तदुपेत । ३. A भुवः । ४ C D ज । ५. A B भूमि ।

जलपङ्करजोऽनिलातपव्यसनं नाण्वपि तत्र सोऽन्वभूत् ।
समकालमृतूनलोकयंस्तपुनरुद्भिन्नमनोज्ञलाञ्छनान् ॥ २४ ॥

विविनक्ति पुरो न वासरं विवरे तत्र विभावरीं न च ।
स तयोर्व्यतिमूर्छितं पुनः कलयामास ललामं केवलम् ॥ २५ ॥ पुन्दर।

दशकण्ठभयादिवागतं जगतः सारमशेषमैक्षत ।
तपनेन्दुरुचामसंचरे विवरे तत्र समीरनन्दनः ॥ २६ ॥

हरिचापशतं मनोहरं परितः कीर्णमपश्यदानिलिः ।
निगृहीतकुतूहलोऽन्तिकात्परिपस्पर्श न पाणिनाऽपि सः ॥ २७ ॥

मणिपीठमुखैः परिच्छदैरुपतस्थे भवनाङ्गणागतः ।
उपचारसमेतपाणिभिः परिवव्रे च स पुस्तपुत्रकैः ॥ २८ ॥

उपसंजगृहे महीरुहैरभितः पल्लवपलाशपाणिभिः ।
चकरे च लताभिरादरान्निजपुष्पाञ्जलिभिः स पादयोः ॥ २९ ॥

मुकुलैः सशलाटुभिश्चितं नतमुत्पाकभरारुणैः फलैः ।
अलिकोकिलकीरसंकुलं स ययौ चूतवनं वनालयः ॥ ३० ॥

उदडीयत कीरपङ्क्तिभिः सह पाकश्लथबन्धनैः फलैः ।
अलिभिः सह दुद्रुवे च तैः स्तबकैस्तन्निकषा कृतस्मितैः ॥ ३१ ॥

उपमन्त्रयति स्म माधवी मधुरैर्भृङ्गरुतैर्विदूरतः ।
परिहासवती हनूमते निकटस्थाय न दर्शनं ददौ ॥ ३२ ॥

स ककुप्सु कषायशीतलं मुहुरामोदमजिघ्रदानिलिः ।
अशृणोन्मणितानि चालिनां नलिनीमैक्षत नान्तिकादपि ॥ ३३ ॥ नान्त्रोऽलिन् शब्दः प्रकृत-स्वरः।

झटिति प्लवगाग्रणीरपां मणिसोपानमपश्यदाशयम् ।
सह यत्र विचित्रकेलयो मणिमीनैर्मणिपत्रिणां गणाः ॥ ३४ ॥

युगपत्कुमुदारविन्दयोर्मकरन्दप्लुतभृङ्गबन्दयोः ।
अतिहासमसावशङ्कत स्फुटदुर्वर्णसुवर्णकोशयोः ॥ ३५ ॥

१ CD सूच । २ D कलां न । ३ A शिवि । ४ ABC परिवाय । ५ A कलस ।

× प्रकाशनस्थेयाख्ययोश्चेति प्रकाशने ऽऽत्मनेपदम्।
[illegible] दर्श्यमान इत्यनेन हनुमतः सम्प्रदानता।





निकषा नवचूत[1]चम्पकौ बकुलस्कन्धनिविष्टपल्लवा ।
उपतीरमतिष्ठत स्फुटं कनकाशोकलता हनूमते ।। ३६ ।।

अपि तामतिरक्तिशालिनीमलिपिङ्क्तिव्रजभग्नजालकाम् ।
परिहृत्य कपिर्ययौ जवादभिजातः प्रमदामिवासतीम् ।। ३७ ।।

लवलीमभिनीतविक्रियालवलीलामथ न स्म पश्यति ।
महिलामवलोक्य मो[2]हिनीमहिलालामिव मन्यते हि सः ।। ३८ ।।

ब्रु[3]वता पुनरुक्तमग्रतो मधुगन्धिस्तबकाननेन सः ।
धृतमत्तविवर्णकेलिना बकुलेनाकुलतामनीयत ।। ३९ ।।

विततार्द्ररजोभुजाहितप्रसभालिङ्गनकेलिभिः कपिः ।
मुमुचे मुचुकुन्दयष्टिभिः न स दूरेण विसर्जयन्नपि ।। ४० ।।

अपि पूर्वमजातसौहृदश्चिरसौहार्दवशोदितोद्धुरैः ।
रुपितोपि[4] स रूपितोऽभवन्नवराजीवरजःकदम्बकैः ।। ४१ ।।

अटवीमटति स्म निष्कलैः[5] कलकण्ठीकलनादकोमलाम् ।
पठितव्यपराङ्मुखो वटुः कठवल्लीकठिनां मठीमिव ।। ४२ ।।

स्मितभिन्नमुखीं च सप्तलामलिकोलाहलिनीं च पाटलाम् ।
स जिगाय विगाढवासने विजितात्मा ममताऽस्मिते इव ।। ४३ ।।

परिमाणलसत्फलामपि प्रययौ बाधकशङ्कया शनैः ।
अनवाप्य विपाकपाटलं निकटाद्बिम्बमुदुम्बराटवीम् ।। ४४ ।।

निरियाय निरङ्कुशा ततः फलहस्ता वनमालभारिणी ।
तमभि स्मरदूरनाटिता विकटा वानरवारसुन्दरी ।। ४५ ।।

प्लुतिभिर्ललिताभिरग्रतः प्लवगप्राग्रहरस्य तस्य सा ।
चलचम्पकचूतमेखला प्रखला केलिमनेकमैरयत् ।। ४६ ।।

विततार फलानि संमुखं व्यलिखत्कूर्परमर्पितस्तनी ।
प्रसृतप्रणयेव साऽऽनिलेरलमक्षावलिमाक्षिपत्करात् ।। ४७ ।।

१ BC भूय । २ A लो । ३ A भ । ४ A रसा । ५ A थ । ६ BC ला । ७ A भीसरति स्म ।

समवाहयदूरुमादरादथ निश्शङ्कमिवाङ्कमभ्यगात् ।
उरसि स्वरसादलम्बयद्वनमालां च विलोलपल्लवाम् ॥ ४८ ॥

विचुचुम्ब बृहद्विडम्बना मुखमप्राप्तरदच्छदान्तरम् ।
अभिमृश्य हनूं शनैः शनैरथं पप्रच्छ किणस्य कारणम् ॥ ४९ ॥

सनिदाघजलेन पाणिना परिमार्ष्टि स्म विधूसराः सटाः ।
अलिखन्नखशालिना पुनर्निजगात्राणि करेण तस्य सा ॥ ५० ॥

न चुकोप न चाकुलोऽभवन्न च विक्षेपकरीं नुनोद ताम् ।
स हि केवलमात्मवान् कपिश्चपलां चित्तगतिं न्यवारयत् ॥ ५१ ॥

कपियोधयुवानमित्यसौ तमवेत्यात्मसमासु निस्स्पृहम् ।
समपादि समस्तहारिणा करणेन क्षणभावितर्थिना ॥ ५२ ॥

वपुरप्रतिसुन्दरं क्षणात् प्रतिपन्नप्रतिकर्म बिभ्रती ।
विततान विदग्धकामिनीजनयोग्यासु कलासु कौशलम् ॥ ५३ ॥

विकसत्कलिकानुकारिणीमनु लीलां ललितैर्लतेव सा ।
विरराज विलासपल्लवैः प्लवगं तं प्रति निष्फलैरपि ॥ ५४ ॥

घनविभ्रमभङ्गमालिनी मदपूरप्लुतशीतसैकता ।
नगतुङ्गमनङ्गवाहिनी तमियाय स्खलितोत्सुकेव सा ॥ ५५ ॥

अभिलष्य ययौ शनैः सभीरभिघातार्थमभीरिवाययौ ।
मृदुभिर्वचनैस्तमुच्चयोः कुचयोरक्षमयत्कठोरताम् ॥ ५६ ॥

अवलम्ब्य लतां निरायतामथ सा संस्तवशालिनीव तम् ।
अवचेतुमयाचताग्रतः कलिकामुत्कलिकाबलात्कृता ॥ ५७ ॥

तमसौ सहकारमञ्जरीमवमन्वानमिवादरार्पिताम् ।
अरुणाग्रदलैरताडयत्तरुणी स्तोकमशोकपल्लवैः ॥ ५८ ॥

स्फुटनाभितला तलोदरी तनुरुच्छ्वासितनिर्मुखस्तनी ।
वलितैकविलोचना बभौ तमभि व्याजविजृम्भितोद्भुजा ॥ ५९ ॥

१ BD मुर । २ A परि । ३ BC चि । ४ BC रान् । ५ BC न् । ६ A मप्य । ७ AC हारि । ८ A मृश्य । ९ A चकि ।

तनुनि स्तनभारपीडिते तनुरोमावलिरम्यनाभिनि ।
उदरेऽपि ददौ न सुभ्रुवः त्रिवलीभङ्गिनि सङ्गिनीं दृशम् ॥ ६० ॥

अथ सा हनुमत्यनामयं मयमाया मदनज्वरं[2] जगौ ।
कलपञ्चमकोकिलारवैः लवलीपाण्डुकपोलमण्डला ॥ ६१ ॥

अकृपे कृपणामकारणं रमणी तत्र जगाद सा गिरम् ।
दृषदीव दृशं च नीरसे रसनिष्यन्दमयीमहारयत् ॥ ६२ ॥

निषसाद निशीथमल्लिकाशिथिलाश्रुस्तबकाचितस्तनी ।
तमनु क्रमशः कपोलयोरुपनीताभयपाणिपल्लवा ॥ ६३ ॥

विषसाद विशेषविह्वला मुमुदे[3] मीलितलोचना मुहुः ।
किलिकिञ्चितकेलिपण्डिता किमकाण्डे न चकार तं प्रति ॥ ६४ ॥

उपसर्ग[4]जडे विडम्बनामगमत्कुट्टमितेन तत्र सा ।
रहसि क्षणमप्यचालयन्न च मोट्टायितचेष्टितेन तम् ॥ ६५ ॥

न मुखेन तिरस्कृतेन्दुना करपादेन न पङ्कजत्विषा ।
नच काञ्चनकुम्भकान्तयोः कुचयोरर्धनिरुद्धया रुचा ॥ ६६ ॥

स्तिमिताञ्चितपक्ष्ममालयोर्न शलाकाञ्जनरेखया दृशोः ।
श्वसिताहतिरिक्तरागयोर्न मधूच्छिष्टमृजाभिरोष्ठयोः ॥ ६७ ॥

घनघर्मपयःकणावलीविषमोच्छ्वासितभक्तिराजिभिः ।
पुलकाञ्चितयोः कपोलयोर्न च कालेयकपत्रवल्लिभिः ॥ ६८ ॥

न विचित्रपरागपांसुलैस्तिलकस्योपरि चूर्णकुन्तलैः ।
प्रकटाग्रकुरुण्टकालिभिर्न च धम्मिल्लकमल्लिकागुणैः ॥ ६९ ॥

न गृहीतवधूव्रतैर्नतैर्न कुचोत्तब्धशिरोभिरुन्नतैः ।
न विशेषगुरूरुभिर्गतैर्न मिषव्याकुलवाग्भिरागतैः ॥ ७० ॥

न गुणग्रहणैः ससौष्ठवैर्न विशिष्टैरुपकण्ठचाटुभिः ।
न विलङ्घनदोषमार्जनैर्न परिच्छेदनिरासजल्पितैः ॥ ७१ ॥

---

१ A नव । २ A रा । ३ CD दे । ४ CD अपवर्ग । ५ A विला ।

न विलासैर्विवर्तनैर्भ्रुवोर्न[1][2] विकीर्णालकवल्लिवेल्लनैः ।
न वतंसनिवेशकौशलैर्न कपोलातिथिकान्तिभिः स्मितैः ॥ ७२ ॥

न च दुर्बलधैर्यया दृशा न च लज्जालवलिप्तया गिरा ।
न च मौग्ध्यनिरुद्धया मुदा न च निष्कारणरूढया रुषा ॥ ७३ ॥

न च संमुखतीव्रया त्विषा[3] न च संभाषणजातया रुजा ।
न च सिद्धिवितर्कदोलया न च मिथ्याविरहप्रमीलया ॥ ७४ ॥

न च मोहविरामवेदनावलनव्याकुलयाऽङ्गसंस्थया ।
न च बालमृणालकन्दलीवलयादिप्रतिकारनिन्दया ॥ ७५ ॥

न च दुर्लभशीतलाङ्गकक्षणमैत्रीमभि दैन्यदीक्षया ।
न च निश्चलसङ्गभावनासुखसंप्राप्तिनिकामनिद्रया ॥ ७६ ॥

न च मन्युभिरुद्धुराश्रुभिः न च सव्यस्तवचोभिराधिभिः ।
न च वेपथुभिः पृथुस्तनी हनुमन्तं विनयादपातयत् ॥ ७७ ॥ कुलकम् ॥

इति कुण्ठसमस्तविभ्रमामपि दुर्वारविलोभनोद्यमाम् ।
शमशीतमनाः प्रमादिनीं प्रमदां तामवदत् प्लवङ्गमः ॥ ७८ ॥

परवत्यपरिच्छदे कपौ कृपणेऽस्मिन्मयि कोऽयमादरः ।
मृगयस्व मृगेक्षणे कमप्यनुरूपं विसदृङ् न शोभते ॥ ७९ ॥

अतिसृष्टसुखः सुखोचिते भवतीमेष नमामि दूरतः ।
गजगामिनि गम्यतामितो नियतिं नातिपतन्ति जन्तवः ॥ ८० ॥

ननु विश्वविलोभनक्षमे[4] सदृशं व्याकुरु शीलमाकृतेः ।
प्रथमाहितवैकृतोचितं चतुरे चापलमस्यतामितः ॥ ८१ ॥

अयमञ्जलिरञ्जनासुतः सुदति प्रह्वशिरा विसृज्यताम् ।
वपुषः परिदृष्टिसूचिता भवती कापि हि सिद्धयोगिनी ॥ ८२ ॥

गिरमित्यभिधाय तामसौ चलितो दिक्षु बभूव मोहवान् ।
हृतखेदमतर्किते[6] पुनः स्थितमात्मानमपश्यदाश्रमे ॥ ८३ ॥

१. A षाद । २. D दृशो ३. C D तृ । ४. A ष्ठ । ५. A कनक्तोः । ६. D घनखेदवितर्किते ।

अथ सिद्धवधूं स्वयंप्रभां प्रभवन्तीमभिशङ्क्य तत्र सा ।
कपिनागमपास्य तं ययौ करिणी केसरिणीभयादिव ॥ ८४ ॥

स्फटिकाश्मगृहादनन्तरं निरगात् कान्तकृशा तपस्विनी ।
ककुभः प्रभयाऽनुलिम्पती शशिलेखेव शरत्पयोधरात् ॥ ८५ ॥

अपि मुक्तसमस्तभूषणैरपि दीर्घव्रतयातनाकृशैः ।
झटिति प्रसभं प्रतिघ्नती दृशमत्युग्रमहोभिरङ्गकैः ॥ ८६ ॥

अतिथीन्दुविलोकनोत्थया शमसिन्धोरिव वेलया दृशा ।
परितः परिषिञ्चती दिशो विशदौदार्यतुषारशीतया ॥ ८७ ॥

तपनांशुरुचस्तपस्विनी वदनस्योपरि चन्द्रचारुणः ।
दधती दृढबन्धिनीर्जटाः शमनुन्ना इव रागवासनाः ॥ ८८ ॥

भृतं पूर्णम् ।
करकस्य शैवत्व-
विवक्षायां वर्णी ।

करकं च करेण बिभ्रती भृतमाकण्ठमघच्छिदामपाम् ।
करुणारसनिर्भरं पृथङ्निजमात्मानमिव व्यवस्थितम् ॥ ८९ ॥

श्रियमप्रतिमां विवृण्वती वपुषः स्रस्तविभूषणावृतेः ।
विरतेऽह्नि विविक्तसैकता सरिदुड्डीनखगेव शारदी ॥ ९० ॥

स्तनबन्धवती नितम्बिनी जपसंख्याम्बुजबीजमालिनी ।
पुनती नयनानि पश्यतां प्रशमश्रीरिव सा शरीरिणी ॥ ९१ ॥

किमुडुः स्खलितेयमम्बरादथ विद्येयमविद्ययेरिता ।
निभृतं निहिताऽथ नाकिभिर्विधुमुत्पीडच्य सुधेयमुत्तमा ॥ ९२ ॥

किमियं करुणा शरीरिणी मुदितेयं यदि वाऽतिनिर्मला ।
पदमाप सुरापमुत्थितैरथ मैत्री मुनिभिर्निवेशिता ॥ ९३ ॥

किमुत स्मरखण्डिता रतिः किमुत श्रीरजितोरसश्च्युता ।
किमुतानघसुन्दरद्युतिर्दयिता दाशरथेरसावियम् ॥ ९४ ॥

किमधः शिवलिङ्गलङ्घनादभिषङ्गात् किमु कस्यचिन्मुनेः ।
इयमत्र विवर्तते बिले विहतव्योमगतिः सुराङ्गना ॥ ९५ ॥

१ A वृत्त । २ A वीति । ३ A त्याद्य ।

अधिवासधिया महीभृतां[1] यदि वाऽस्यैव बिलस्य देवता ।
अथ सैव कुपाण्डिता पुनर्निजरूपं परिवृत्य निर्गता ॥ ९६ ॥

इति विविधवितर्कचञ्चलं जलकुसुमादिमुखैः सभाजनैः ।
अतिथिमतिविशिष्टमादरादमरवधूरभि तं जगाम सा ॥ ९७ ॥

इत्यभिनन्दकृतौ रामचरिते महाकाव्ये स्वयंप्रभादर्शनो
नाम द्वादशः सर्गः समाप्तः ॥

---

[2]नमः श्रीहारवर्षाय येन हालादनन्तरम् ।
स्वकोशः कविकोशानामावि(र्भावाय संभृतः)[3] ॥

[4]किं शीधुभिर्भवतु फाणितशर्कराद्यैः
किं वा सितासहचरैः क्वथितैश्च दुग्धैः ।
दुग्धाब्धिलब्धसुधयाऽपि न किञ्चिदेव
यत्राभिनन्दसुकवेर्विचरन्ति वाचः ॥



---

१. A D सिविपन्मनोहृता । २. A reads this only. ३. A शेषाणामा त्तागमसंपदः । ४ CD read this.

# अथ त्रयोदशः सर्गः ॥

अवधूय वधूजनोचितामथ सा तसमहातपास्त्रपाम् ।
अतिथिं हनुमन्तमब्रवीद्बिलमग्नप्रतिभानपाटवम् ॥ १ ॥

इत आस्व विनीयतां क्रमः किमुदासीन इवार्य तिष्ठसि ।
ननु विश्वसिहि स्वमागतस्त्वमिदानीमिममाश्रमं हि मे ॥ २ ॥

त्यज मोहमहं स्वयंप्रभा रवितेजःप्रभवा नभश्चरी ।
शशिदीधितिसंभवाप्सरःकुलमैत्रीपरिपाटिशीतला ॥ ३ ॥

मदकेलिकला मदालसा मुकुला मेघवती मनोजवा ।
अहमिन्दुमती कलावतीत्यनघाः स्वर्गपतेः करेणवः ॥ ४ ॥

वयमप्सरसः परश्शताः शतमन्युप्रभृतीनुपास्महे ।
मरुतः सुकृतात्तुलाधृतादनुरोधाभ्यधिकेन चाटुना ॥ ५ ॥

द्वितयं द्वितयीभिरस्यति त्रिदिवेशः क्षितिपृष्ठगोचरम् ।
भृशमुद्गतमद्भिरातपं तपसः स्फूर्जथुमस्मदादिभिः ॥ ६ ॥

अपि संमुखसाध्वसद्रुतश्लथनिस्सी(स्थे)मसु विग्रहेषु नः ।
अति[2] तीव्रतपोबलानरीञ्जयमाशंसति पाकशासनः ॥ ७ ॥ आशंसते इति तूचितम् ।

चरणेष्वसुरा लुठन्ति नस्त्रिदशाः सन्ति करोदरेषु नः ।
अभिसृत्य रणेषु नः कृते नरवीरास्तृणवत्त्यजन्त्यमून् ॥ ८ ॥

मयि देवगणा दयालवो मुनयो मय्यनुरोधगद्गदाः ।
कथयन्त्यतिथे गरीयसीं मयि गन्धर्वकुलानि बन्धुताम् ॥ ९ ॥

मम सख्यवशंवदोर्वशी मम रम्भेत्यसवो बहिश्चराः ।
सह मे सहजन्यया गं[3]ताः कुलविद्यागमकेलिवासराः ॥ १० ॥

लहरी लहरीषु नर्मणार्मेनघेषु प्रतिकर्मसूर्मिला ।
मदुपात्तवती विदग्धतां रसदिग्धेषु वचस्सु बुद्बुदा ॥ ११ ॥

---

१. A B C थिनि स्थामनि २. A B C धि । ३. A योद्र । D द्व्याग । ४. BCD निर्मला ।

अधि[1]विद्यमती[2]द्धवर्ण[3]नागुणमुग्धेषु गणेषु नाकिनाम् ।
ख(स)मसूच्यत चित्रलेखया मम मर्मस्पृशि चो[4]दनालवे ॥ १२ ॥

सुरमार्गनदीनिमज्जनै[5]ः मयि विद्याधरकन्यकाजनैः[6] ।
गमितः सुगृहीततां मुहुः स महानम्बुनि तुम्बिडम्बरैः[7] ॥ १३ ॥

ततजातिषु तुम्बुरुर्गुरुः[8] गुरुकल्पः सुपिरेषु नारदः ।
विततेषु विशेषहेतवो मम विश्वावसुपादपांसवः ॥ १४ ॥

युगपच्च युगेन वीणयोः श्रवणैकक्रतुना सुपर्वणाम्[9] ।
मथिताऽहमुपेयुषां मुनेः स्वरपारायणपारगामिनः ॥ १५ ॥

श्रुतिषु[10] श्रुतनाकनिम्नगासलिलौघक्रमपातनिस्वनः ।
गुरुरश्वतरः फणीश्वरो मम गङ्गाधरकर्णभूषणः ॥ १६ ॥

महतीगुरवो गणेश्वराः स्वरतानक्रमरीतिरिं[11]ञ्जिताः ।
मम खण्डकपालमूर्छनास्वमुर्च[11]न्मत्सरै[12]मीशितुः पुरः ॥ १७ ॥

सुरचा[13]रणचक्रवर्तिनां पुरतः सोऽप्यसुरैकसूदनः ।
श्रुतवानिव नारदस्तुतां मम गान्धारविशुद्धमूर्छनाम् ॥ १८ ॥

बहुपर्वसु पर्वतादयः सं[14]विवादाः पृथगात्मगौरवात् ।
मयि संप्रतिपत्तिमागमन् गमकग्रन्थिषु गीतिपां[15]ण्डिताः ॥ १९ ॥

नारदेन सह चरितो मुनि-
विशेषः पर्वतः ।

उ[16]पदिश्य पुरः[17] सरस्वतीं सदसि ब्रह्ममहार्षिमण्डले ।
अथ[18] मामुपसेदुषीमशाज्जगदा[19]विर्जनवेदमात्मभूः ॥ २० ॥

सहजातविदग्धकैशिकीरसदिग्धैश्च लसद्भिरङ्गकैः ।
हरवामविभागभागि[20]नी मम लास्यैकगुरुर्गिरेः सुता ॥ २१ ॥

गिरिशो गिरिजान्तवासिनीत्यधिकौत्सुक्यवलद्विलोचनः ।
गुणमस्तुत मे समं गणैः करणोद्भासितरङ्गमाङ्गिकम् ॥ २२ ॥

---

१. A ति । २. D न्दु । ३. B र्ते । ४. B नो । ५. A ने । ६. A मेनाप्रमुखाभिरालिभिः । ७. A बिलं विडंबरः । BC निलुम्बिडंबराम् । ८. A कंबलः । ९. A सु । १०. गीत । ११. A सुव । १२. BC च्छ । १३. A वा । १४. B क । १५. B सूक्ति CD गीत । १६. BCD अ । १७. BCD रा । १८. BCD धि । १९. A मगात्त्रिदशा । २०. A मि ।

१५

अकरोदसकृत्प्रसादवानपि निर्वर्णितवारवासरः ।
मम नृत्यकलाविदग्धतां मघवा नेत्रसहस्रसाक्षिणीम् ॥ २३ ॥

परिगृह्य विशेषमस्तुवन्निपुणे पश्यति नाकिनां गणे ।
लयरीतिषु रेचकोत्तरं गुरवश्चित्ररथादयश्च ते ॥ २४ ॥

श्रुतवानसि कच्चिदूर्जितं मयनामानमरिं दिवौकसाम् ।
जुहुवे शरजातवेदसि त्रितयं यस्य पुरां पिनाकिना ॥ २५ ॥

परिगृह्य सखीं ममानघामथ हेमां भुवनेष्वनास्पदः ।
अधिवस्तुमलक्षितं परैः बिलमेतन्मतिमान्विनिर्ममे ॥ २६ ॥

न पुरत्रयमस्मरद्वसान्निह विज्ञानकलामये मयः ।
न च कैरपि सूचितोऽभवन्नियतिं नातिजगाम केवलम् ॥ २७ ॥

पितुरुत्सविनो निमन्त्रणाद्यदगात्तत्सुभगा सुरालयम् ।
अरुणच्चरसूचितां हि ताममरेन्द्रो निजवारसुन्दरीम् ॥ २८ ॥

प्रहिताऽस्मि मयप्रवृत्तये प्रियसख्याऽहमिहेन्द्रमन्दिरात् ।
भवतेव मयापि निर्जनं बिलमेतत्परमेत्य वीक्षितम् ॥ २९ ॥

मयि दूरत एव शंसितं समकालोच्चलितार्तिकाहलैः ।
पुर[1]गेहतटाकवीरुधामधिदेवैरधिवासिवैशसम् ॥ ३० ॥

किमवाप्तसमीहितान्तरस्तमिदानीमवशिष्टविग्रहम् ।
अदहद्द्रागिति स्मरानलो हरबाणानलदग्धविष्टपम् ॥ ३१ ॥

किमगाद्विजयाय वज्रिणो निजमुत्सृज्य बिलं[2] निरर्गलः ।
क्षणमात्रतिरोहितास्तु ते मम न प्रष्टुमिति स्फुटं गताः ॥ ३२ ॥

इह[3] यामि लयं मयं चिरात्परिपश्याम्यथवा समागतम् ।
व्रतमात्तमिदं मयोच्चकैरिति हेमाकरुणोर्[4]पितप्रया ॥ ३३ ॥

ध्रियतेऽद्य सखी मदाशया गतवत्यां मयि निर्मनोरथा ।
विषहेत वियोगवेदनां कथमेकान्तकृशा तपस्विनी ॥ ३४ ॥

१. A स्त्र । २. BC बिलमाच्छाद्य निजं । ३. BC D अथ । ४. C D रुणो ।

वरमित्थमिदं गतं वयो वरमाप्तो विरहः सलोहितैः ।
प्रतताश्रुमुखी मयेक्षिता सुचिरान्नत्वकृतार्थया सखी ॥ ३५ ॥

करुणैरुपरुध्यसे चिरं किमथ स्वात्मदशानिवेदनैः ।
वदतीव पथः कदर्थनामिदमार्यस्य सुखोचितं वपुः ॥ ३६ ॥

अतिथे परिगृह्यतामियं समवस्थासदृशी समाहणा ।
महतामनुरोधशालिता विषमस्थे हि जनेऽतिरिच्यते ॥ ३७ ॥

उपयुङ्क्ष्व यथासुखं पयः फलमादत्स्व यदत्र वाञ्छसि ।
मम दृष्टिपथे मनोरथैरतिथीनामिह न व्यतीयते ॥ ३८ ॥

पदवीमृजुमादिशाम्यहं श्रममुत्सृज्य निवर्त्यतामितः ।
बहुमायमिदं विगाह्यते न जनैरार्जवशालिभिर्बिलम् ॥ ३९ ॥

इति भूतमुदीर्य सा चिराद्विररामानिलिराददे वचः ।
स्थितदृष्टिरवो हि शोभते शिखरी सङ्गलदोघशब्दभाक्[1] ॥ ४० ॥

क्षणमस्त्वयमर्हणाक्रमः क्रमते नश्वरमं चमूपतिः ।
उपचारविशेषभाजनं स नमस्यो वयमस्य किङ्कराः ॥ ४१ ॥

उपमर्दविकल्पशान्तये कपिसङ्घातसमागमस्य च ।
स्फुटमेव जगाद कारणं प्रगुणे कीदृशमात्मगूहनम् ॥ ४२ ॥

अथ गोपतिपौत्रमङ्गदं पवमानाङ्गजसन्निधापितम् ।
कपिसैन्यसमग्रमग्रहीदुपचारैर्गुरुभिः स्वयंप्रभा ॥ ४३ ॥

अवलोक्य बुभुक्षितान् कपीन् कपिभोज्यान्नविशेषसृष्टये ।
विलकल्पतरूनचोदयत्प्रणिधानस्तिमितेन चेतसा ॥ ४४ ॥

अभजन् प्रथमं तमम्बुभिः प्लवगश्रोत्रियसद्मपाङ्घ्रिपाः ।
प्रतिकोटरकोटिनिष्पतन्मणिवैसारिणवक्त्रवर्त्मभिः ॥ ४५ ॥

पतितेषु निषेदुरादृतोः पृतनाधीशमतेन तेऽनघाः[2] ।
परिणामिषु पीठशोभया फलरत्नेषु विलक्षमारुहाम् ॥ ४६ ॥

१ D मङ्गलदोषश २ BCD त्मना ।

रसवन्ति रसातलोद्भवाः चक्ररुर्भक्ष्यशतानि शाखिनः ।
सह काञ्चनमञ्जिकाशतैः[1] मणिपात्रेषु निवेशितानि ते ॥ ४७ ॥

परिवेषयति स्म सादरं हरिवीरानथ भक्ष्यजातिभिः ।
समभोजयदङ्गदं चिरादनुभावस्तिमितं तपस्विनी ॥ ४८ ॥

उदिताधिकवीर्यपुष्टयो जहृषुस्तत्क्षणविस्मृतश्रमाः ।
पुनरूढनवत्वसंपदः कपयस्तेन रसायनेन ते ॥ ४९ ॥

अभिकाममथाशितम्भवैर्विहितात्मस्थितयः प्लवङ्गमाः ।
अभजन्त कशाहता इव स्मृतयात्रावधयश्च सत्क्रियाम् ॥ ५० ॥

बलवद्भिनिवर्तितत्वरास्त्वरितक्षालितवक्त्रपाणयः ।
ददृशुः कपयः स्वयंप्रभामथ मुञ्चेत्यशकन्न भाषितुम् ॥ ५१ ॥

इति तामवदत्स मारुतिर्भवति स्वस्ति तपोऽभिवर्धताम् ।
अयमत्युपचारलज्जितः परवानिच्छति गन्तुमङ्गदः ॥ ५२ ॥

रघुनाथवधूर्न चेक्षिता न स दृष्टो रजनीचराधमः ।
निजवृत्तिगवेषणादृतैर्गमितोऽस्माभिरिहैव सोऽवधिः ॥ ५३ ॥

अवलोक्य महीं महौजसो विनिवृत्ता विनतादयः स्फुटम् ।
अनिमित्तविलम्बिभिः प्रभौ[2] बत वाच्यं किमिवास्मदादिभिः ॥ ५४ ॥

वद वर्त्म विलोदरादितो वयमन्धा इव दिग्भ्रमादमी ।
उपनीय यथापथं[3]स्थितीननघे तारय नाथिरातिथीन् ॥ ५५ ॥

उपचा[4]रपरम्परामिमामसकृद्वक्त्रशतेन तावकीम् ।
कथयन्त्यचिरादसंशयं कपयः कारणमानुषे हरौ ॥ ५६ ॥

स करिष्यति लोकभावनस्तव निस्तारमितो महाविलात् ।
त्यज दानवगृह्यतामिमां मरुतामप्सरसः परिग्रहः ॥ ५७ ॥

ध्रुवमद्य स विस्मृतो मयस्तव सख्या सुरसख्यपूतया ।
किमकारणमत्र सीदसि स्मर वामाक्षि विमानमात्मनः ॥ ५८ ॥

---

१ A श्रुतांगतैः । २ D बिलर्धिनिष्प्रभै । ३ A तयथाय । ४ C D का ।

क्व विलं क्व च साऽमरावती क्व स दैत्यापशदः क्व देवराट् ।
असहे समवेहि बन्धुभिर्विमतिर्व्येतु कथञ्चिदागता ॥ ५९ ॥

कथयामि सखीगतं रहः किमिदानीं त्वयि न क्षणादहम् ।
न रुणद्धि रघूद्वहस्य चेत्करणीयं प्रथमप्रतिश्रुतम् ॥ ६० ॥

विततव्रतनिस्सहे मया घटितोच्चैः सुचिरेण हेमया ।
त्रिदशानतिरुद्धदानवग्रहदूरीकृतसंमदानव ॥ ६१ ॥

बहुना किमुदीरितेन वा रघुनाथः समुपैतु सीतया ।
त्वमपि स्वपदाप्तिहृष्टया घटसे निष्फलतापसी तया ॥ ६२ ॥

नियतं न मुखानि वीक्षते तिसृणां तत्त्वविशारदो दिशाम् ।
ककुभं तु विलोकयत्यमूं स वृथा संमितमत्मथः प्रभुः ॥ ६३ ॥

अधुनैव गतः श्रमोऽथवा पृतनेशः प्रकृतं करिष्यति ।
ऋजुनिर्गममार्गदेशनादिह नः स्याः परमोपकारिणी ॥ ६४ ॥

अथ मारुतसूनुसूनृतप्रमनाः प्रत्यवदत्तपस्विनी ।
घनबन्धुवधूरिव श्रुतप्रथमाम्भोधरधीरनिस्वना ॥ ६५ ॥

इयमुक्तिरियं द्युतिस्तनोर्विनयश्चायमयं च विक्रमः ।
विवृणोति भवन्तमागतं कपिवेषात्कमपीह दिक्पतिम् ॥ ६६ ॥

अधिलक्षणतेयमाकृतेः प्रभुशक्तेश्च समग्रतेदृशी ।
मम दृष्टचरी पुरन्दरे युवराजे भवतामसुत्र च ॥ ६७ ॥

ध्रुवमाशु भवाद्भिरीदृशैर्जगदर्थः सुमहान् करिष्यते ।
दशकण्ठवधाय दण्डकां विधिनैवागमितो रघूद्वहः ॥ ६८ ॥

प्रयतध्वमकालहापनात् कपयः संक्षपनाय रक्षसः ।
स चिरादुपहासरोषितः प्रमथोऽस्तु प्लवगाकृतिः कृती ॥ ६९ ॥

विरमन्तु विरूपलोचने वरवृष्टिष्वविचारितार्थीनि ।
दशवक्त्रविलुप्तसंपदां परिवादाः सुरमर्त्यभोगिनाम् ॥ ७० ॥

१ C तेजसां २ D क्ष । ३ C चर ।

विहरन्तु सहावरोधनैरसदृक्प्रैषसहस्रपीडिताः ।
वरुणेन्द्रमुखाश्च संप्रति स्थिरदिक्पालपदा दिवौकसः ॥ ७१ ॥

मम ताश्च तिलोत्तमादयः प्रियसख्यः शिखरेषु भूभृताम् ।
कुलकेलिगृहेषु विस्मरन्त्वरिकारागृहवासवैशसम् ॥ ७२ ॥

असमाप्तविधेरसौ वधः फलतु क्ष्मातलचक्रवर्तिनः ।
त्रिजगत्क्षयदीक्षिते चिरादनरण्यस्य निशाचराधिपे ॥ ७३ ॥

व्रजत द्रुतमिष्टसिद्धये शिवमध्वानमहं दिशामि वः ॥
तदकाण्डवशंवदं महः सवितुः शक्ररिपोर्दुनोति माम् ॥ ७४ ॥

हरिचन्द्रपथेन वः क्षणात् प्रगुणेनोद्गमयामि संहतान् ।
समयान्न विलोकनक्षमः स तु युष्माकमतो निमील्यताम् ॥ ७५ ॥

घटितेक्षणवर्त्मसंपुटामथ पश्चात्कथितामिवायतीम् ।
निरवाहयदन्धसंहतिं निमिपात्तामनिमेषलोचना ॥ ७६ ॥

उपनीय महीमवोचत प्लवगान् पश्यत संप्रतीति सा ।
अगमच्च गभीरमाश्रमं सुपथा सिद्धतपस्विनी पुनः ॥ ७७ ॥

नगमुन्मिषितेक्षणाः क्षणात्ते ददृशुर्विन्ध्यमनन्तरं महेन्द्रम् ।
अथ राशिमपामपारमारात्पुनरारब्धमिवात्मनोऽधिकारम् ॥ ७८ ॥

सरसीः सरितश्च तेऽभिजग्मुः परिपेतुश्चिरसंस्तुतां महीं च ।
स बताप्सरसः स्वयंप्रभायाः सपदि स्वप्नसमः समागमोऽभूत् ॥ ७९ ॥

अभवन्नथ तामनुस्मरन्तो बहवो दुर्मनसः कपिप्रवीराः ।
अनुतापमिव प्रपेदिरेऽन्ये विलपातालविनिर्गमग्रहेण ॥ ८० ॥

कतिभिश्चिदपोढकृत्यगन्धैः सह संमन्त्र्य पुनर्बिलं विविक्षुः ।
शनकैरुपजप्तुमात्ममानी समियायात्मसुतासुतेन तारः ॥ ८१ ॥

नरकुञ्जरयोस्तयोरधीयन्नपि निर्ज्ञातपितृव्यविप्रकारः ।
अकरोन्मतिमानसावपथ्ये पथि मातामहदेशिते न चेतः ॥ ८२ ॥

१ BC च । २. A विधि ३. A भवतु ४. A शत्रुपुरे ५. A पक्ष्म ६. BC निवायतान् ।
७. BC घ्न । ८. D यास्यत ९. AD न्तर्म १०. C चिद्भिर ।

अतिक्रान्तः कालः परिकलितमिष्टं न किमपि
प्रभोरग्रेऽस्माभिः किमिव गदितव्यं प्रतिगतैः ।
इतो गन्तव्यं स्यात् किमपरमपारोऽयमुदधिः
मुधैवोन्नद्धानामुचितमिह नः प्रायभजनम् ॥ ८३ ॥

भरं धिक्काराणामसुविरहभीरुर्विषहते
सहन्ते नावर्णं तनुमपि तनुत्यागरभसाः ।
इति प्रत्येकं ते विपुलवचसो वानरभटाः
तटे पत्युर्वारामनशनविधानेन विविशुः ॥ ८४ ॥

तथापि प्रत्याशास्तिमितनयनाः पुण्यविसरं
पुरः पुञ्जीभूतं निजमिव निमित्तैः पिशुनितम् ।
विहङ्गं विन्ध्याद्रेरुपरि हरयस्तेऽथ ददृशुः
शरीरप्राग्भारस्थगितगगनाभोगमनघाः ॥ ८५ ॥

स नाम्ना संपातिर्विहगपतिरिन्द्रप्रियसखः
खरांशोरुत्सङ्गादधिगतपतत्रव्यतिकरः ।
तदानीं दीर्घास्यो जडित इव नीडाद्रिनिकटां
तटीमब्धेः पद्भ्यामभजत जटायोः प्रथमजः ॥ ८६ ॥

इत्यभिनन्दकृतौ रामचरिते महाकाव्ये बिलनिर्गमसंपातिदर्शनो नाम
त्रयोदशः सर्गः समाप्तः ॥

यैया[3] कयाऽपि कलया यस्य तस्य सुभाषितैः ।
गृह्यते हारवर्षस्य मनोऽद्य नृपतेः परम् ॥
किं शीधुभिर्भवतु फाणितशर्कराद्यैः
किंवा सुधासहचरैः कथितैश्च दुग्धैः ।
दुग्धाब्धिलब्धसुधयाऽपि न किञ्चिदेव
यत्राभिनन्दसुकवेर्विचरन्ति वाचः ॥

---

१ BC कायपत । २ BC नि ३ BC Read these two slokas.

# अथ चतुर्दशः सर्गः ॥



अप्राकृतविग्रहं विहङ्गं तं वीक्ष्य प्रमुदः प्लवङ्गमास्ते ।
श्रोष्यन्त इवेप्सितां प्रवृत्तिं प्रत्येकं प्रतिभाबलादवोचन ॥ १ ॥

विज्ञातनिशाचरप्रवृत्तिः प्रत्यक्षीकृतमैथिलीरहस्यः ।
रामस्य किमेष पुण्यराशिर्वक्तुं नः प्रियमादरादुपैति ॥ २ ॥

एष प्रसहोऽथ पार्वतीयः सामुद्रः प्रतुदोऽथ किं महीयान् ।
द्वीपान्तरविष्किरः कुमारीखण्डाध्वक्रमनिस्सहोऽथवाऽयम् ॥ ३ ॥

भ्रष्टोऽथ नभस्तलादनूरुः पातालादुरगारिरुद्गतो वा ।
आहोस्विदुपैति नस्त्वरावानाहर्तुं विहगाकृतिः कृतान्तः ॥ ४ ॥

धन्या वयमद्य रामहेतोर्भ्रान्तोर्वीवलयान्व्यलीकभाजः ।
इच्छासमकालमेति खेलः कालश्चेत्कबलोत्सुकोऽयमस्मान् ॥ ५ ॥

किं प्रस्खलतीव सन्नचञ्चुः किं वायं न खगः खमभ्युपैति ।
लूनौ वा नियतं शठेन पक्षावस्यापि क्षणदाचरेण तेन ॥ ६ ॥

चक्रे शकलत्रयं जटायुर्दैवेनैव दशास्यतां गतेन ।
पञ्चत्वजुषोऽभवद्द्विजातेस्तस्यैक्यं तु शतक्रतुस्तदानीम् ॥ ७ ॥

एकः स परं प्रपन्नधीरो धारावर्त्मनि येन चन्द्रहासे ।
गणितो रघुनाथपक्षपातादात्मीयः स महान्न पक्षपातः ॥ ८ ॥

वाक्यं कटु तत्प्लवङ्गमानां विश्रान्तं श्रवणपथे(श्रवणे) विहङ्गमस्य ।
क्रूरारवडम्बरानलार्चिर्मेघानामिव कन्दरेऽचलस्य ॥ ९ ॥

पप्रच्छ ससंभ्रमः स पक्षी संपातिः समुपेत्य वानरेन्द्रान् ।
के यूयमुदीरितं ममेदं किं वत्सस्य जटायुषो भवद्भिः ॥ १० ॥

उक्तप्रचयाः प्लवङ्गमास्ते संन्यस्ताः सिषिचुः शुचाऽभिभूतम् ।
हा भ्रातरिति प्रपन्नमूर्छं पुच्छाग्रोपहितैः समुद्रतोयैः ॥ ११ ॥

---

१ BC न्तु २ B स्त्व ३ BC ह्य ।

सुभ्रातुरथ स्मरन् जटायोः संपातिर्विललाप चेष्टमानः ।
चक्रन्दुरनन्तरं प्लवङ्गाः संक्रामी प्रमुखे हि शोकवेगः ॥ १२ ॥

शून्ये सुचिरं रुदत्सु रोधस्यम्भोधेः समवेदनेषु तेषु ।
विन्ध्याद्रिरपि स्फुटं रुरोद द्रोणीषु प्रतिबिम्बितार्तनादः ॥ १३ ॥

भिन्नः परिदेवितेन तेषां तेनारान्मकरालयोऽप्यरोदीत् ।
वेलाङ्कविकीर्णशीकराश्रुः स्थूलोर्मिस्खलनस्वनच्छलेन ॥ १४ ॥

आरादपि सत्वरा न चेरुश्चक्रन्दुर्विहगाः कुलायभाजः ।
तेनार्तरवेण तोयमध्यादुत्कर्णास्तिमयः समीपमीयुः ॥ १५ ॥

ऊचुः प्लवगास्तमार्द्रवाचः शोच्यस्ते न स पुण्यकृत्कनीयान् ।
स्थाने हुतजीवितेन येन त्रैलोक्यं धवलीकृतं यशोभिः ॥ १६ ॥

संसारगतिः स्थितेयमार्य प्राज्ञोऽसौ विमृशत्यनित्यतां यः ।
क्रीणन्ति कलेवरैरनित्यैर्ये नित्यानि यशांसि ते विदग्धाः ॥ १७ ॥

आश्चर्यनिधिः स शौर्यशाली श्लाघायाः परमास्पदं न कस्य ।
छिन्नेऽपि जगाम पक्षयुग्मे पक्षीन्द्रस्त्रिदिवस्य योऽतिथित्वम्[३] ॥ १८ ॥

भ्राता तव गीयतेऽप्सरोभिः पीठार्धे शतयज्वनोऽधिरूढः ।
आर्द्रेण तदध्वनाऽऽशु यत्नः प्रस्थातुं प्रयतात्मनामयं नः ॥ १९ ॥

गच्छन्ति गतिं त एव शुक्लामक्लीवं परकारणेन याति ।
येषां तनुरित्यनादिमायामेघालीविततां विकल्पकाली ॥ २० ॥

कस्यात्र च रुद्यते गतः कः कायोऽयं परमाणवोऽनपायाः ।
संस्थानविशेषनाशजन्मा शोकश्चेन्न कदापि मोदितव्यम् ॥ २१ ॥

धीमाननुजः स ते जटायुर्निर्बुद्धेरिव कस्तवैष मोहः ।
तुल्यप्रभयोः प्रदीपयोः स्यात् किं ध्वान्तप्रसवी कदाचिदेकः ॥ २२ ॥

नासौ सुमहात्मनामुदन्वानौपम्यं लभते भवद्विधानाम् ।
धैर्योदकशोषकृत् किमेवं संवेगो बत शोकबाडवाग्नेः ॥ २३ ॥

१. A संव । २. A रे ३. BC भूमिं ४. A मोहा ।

१६

एवं विवृतात्मधैर्यपारं नीराणां निधिरेष दूरपारः ।
व्यक्तं हसतीव चन्द्रगौरैरन्योन्यस्खलितैर्महोर्मिभिस्त्वाम् ॥ २४ ॥

उत्तिष्ठ कुलोचितं कुरुष्व स्वाजीवं भज वासरोऽल्पशेषः ।
वृद्धो विकलश्च्युतानुबन्धैः शोकार्तैः क इव त्वमायतायाः ॥ २५ ॥

एते वयमस्य ते भुजिष्या विस्रब्धं ननु शाधि यद्विधेयम् ।
रामो हि तवानुजे जटायुष्याधत्ते पितृगौरवं गुरुर्नः ॥ २६ ॥

स्निग्धानिति शोकवेगदीनो दाक्षिण्यक्षणनिर्जितप्रमीलः ।
संपातिरुवाच कम्पमानो निष्कम्पोचितभाषिणः कपीन्द्रान् ॥ २७ ॥

तातांः क्षिपताप्सु मामितोऽद्रेराद्यूने मयि यद्यनुग्रहोऽस्ति ।
एषोऽम्बु कनीयसे ददामि प्रीतोऽस्तु क्रमलङ्घनात्कृतान्तः ॥ २८ ॥

शौचानुपदं भवत्सु वत्साः ख्यातव्यं बहु मेऽस्ति निर्वृणुध्वम् ।
दृष्टः स मया समैथिलीकः पौलस्त्यो निपतन्नितस्त्रिकूटम् ॥ २९ ॥

इत्युक्तिनिमीलितं प्लवङ्गाः प्रत्यङ्गं जगृहुस्तमभ्युपेत्य ।
निन्युः सलिलं शनैर्विनीतास्तेनोष्णं श्वसता सहापि सस्नुः ॥ ३० ॥

चञ्च्वैव कथंचिदक्षमत्वात्पक्षत्योस्तमपः प्रदाय गूढम् ।
प्रक्लिन्नगुरुच्छदं प्लवङ्गाः प्रोत्तस्थुर्भुजपञ्जरे निधाय ॥ ३१ ॥

तस्थुः क्षणमुत्थिताः समेत्य व्याचक्रुर्विशदा हरस्य गाथाः ।
विन्ध्याग्रचयातपे निषेदुर्गृध्रेन्द्रं परिवार्य वानरेन्द्राः ॥ ३२ ॥

जित्वा स जितेन्द्रियः कथंचित्कल्लोलं तमुदीर्णमात्मनैव ।
विश्राणितसुप्रवृत्तिलाभप्रत्याशानवदत्प्लवङ्गमेन्द्रान् ॥ ३३ ॥

वेगोऽयमनादिमोहजन्मा तत्वज्ञैरपि जीयते न वत्साः ।
गच्छन् पुनरेवमेव कालः शोकोर्मीनुदितान्मृदूकरोति ॥ ३४ ॥

दत्तोऽयमुरस्युरुः कवाटः क्वेदानीमसवो मम व्रजन्ति ।
धीरं शृणुत प्रवृत्तिमार्याः कार्याण्येव गुरूणि पण्डितानाम् ॥ ३५ ॥

---

१. A चूर्णं । २. A वलंवः ३. A श्रान्ताः ४. BD पसस्नुः । ५. B रह

आवां विहगान्वयावतारे तारेयप्रमुखाः प्लवङ्गवीराः ।
श्यैन्यामजनिष्वहि प्रवीरौ धीरौ दुष्प्रधनो[1]द्धुरौ सुपर्णात् ॥ ३६ ॥

दक्षः स पिताऽऽवयोर्जनन्यास्तातस्य प्रभवश्च कश्यपो नौ ।
वृद्धप्रपितामहो मरीचिः सोऽस्माकं कमलोद्भवः कुलादिः ॥ ३७ ॥

पृष्ठं परिरक्षता मयैव प्रष्ठत्वं भजता जटायुषैव ।
विस्रब्धमनीकिनीसमग्रान् सङ्ग्रामेष्ववधीद्वृषा विपक्षान् ॥ ३८ ॥

दृप्तौ नवयौवनावलेपात् प्रेङ्खन्तौ गगने मरुद्भिरावाम् ।
जन्मस्थितिपूजितावुमायाः प्राक् पक्षव्यसनागमादिवाद्री ॥ ३९ ॥

पक्षानिलदूरविद्रुताभिः स्कन्धाग्रेषु नभस्वतां चरन्तौ ।
वैमानिकपङ्क्तिभिर्विहायःपर्यन्तोपगताभिरीक्षितौ स्वः ॥ ४० ॥

क्षुण्णा घनसंहतिर्ग्रहौघः प्रध्वस्तो विधुतं ध्रुवद्वयं च ।
कोऽसौ शिशुतानिरङ्कुशाभ्यामावाभ्यां न जितो नभस्तले यः ॥ ४१ ॥

वत्सेन मया च स्वं भजद्भ्यामन्योन्यस्य जिगीषया दवीयः ।
दृष्टेयमुदग्रपर्वताऽऽसीदुद्बी[2]जाम्बुजकर्णिकोपमा भूः ॥ ४२ ॥

अव्याहतिवर्धमानवेगप्रागल्भ्यौ पितृगन्धगौरवेण ।
आवामुपसंग्रहाय पङ्गोः पातङ्गं रथमेकदोपसन्नौ ॥ ४३ ॥

तेऽथ प्रवहावरोधरोष[3]व्यावल्गद्विकटाकृतेः पुरो मे ।
हेषाकुलमद्रवन्मुहूर्तं राहुत्रासतरङ्गि[4]तास्तुरङ्गाः ॥ ४४ ॥

उल्लङ्घ्य रवेरहं हयालीमालीनस्तरलस्य मूर्ध्नि केतोः ।
द्रष्टुं प्रचयं मरीचिवीचिच्छ[5]न्नानामभितः परिच्छदानाम् ॥ ४५ ॥

हैमः स रथो महाप्रमाणः तद्द्वयो[6]र्मध्वजमूर्ध्नि कौरविन्दम्[7] ।
ते योक्त्रफणाभृतो विनीतास्तत्पश्चारमसङ्गमेकचक्रम् ॥ ४६ ॥

त्रय्याः स्फुटवैभवं तदोजस्तत्साक्ष्यं जगतः शुभाशुभेषु ।
द्वाराणि च तानि तानि सिद्धेः सोऽध्वा च प्रगुणो गुणातिगानाम् ॥ ४७ ॥

१. A द्वप्रथनो २. A वीं ३. B वेग ४. BC ण ५. A च्छि । ६. BC सद्वा । ७ BC यम ।

स द्वारि पुरन्दरावतारो दुर्वारासुरयोधरोधचण्डः ।
दण्डैः[1] सह माठरेण मुञ्चन् क्रौञ्चारिप्रभृतीन् सुरान् कथंचित् ॥ ४८ ॥

वह्निः स च पिङ्गलः प्रजानां प्रत्यक्षीकृतपुण्यपापलेशैः[2] ।
पाणिस्थसमग्रलिप्युपायः कायस्थस्यै[3] वहन्महाधिकारम् ॥ ४९ ॥

ते यामिकनाकिनः समन्तादन्तेषु क्षणदाचराश्च ते ते ।
पार्श्वे स[4] कृती कविः स्तुवानः सोऽत्यर्थं सविधे बुधैः[5] प्रगल्भः ॥ ५० ॥

देवः स च कोऽपि दण्डि[6]नामा निर्विण्णो नुतिभिर्विनोद्यमानः ।
घोरे चतुराननोत्तमाङ्गच्छेदावर्ण[7]महार्णवे निमग्नः ॥ ५१ ॥

मन्दो मनुरन्तकोऽश्विनौ द्वौ द्यौरेवं तपतीत्यपत्यजातम् ।
तच्चानघबाललीलमग्रे[8] रुन्धानं प्रधनाय वालखिल्यान् ॥ ५२ ॥

दास्यं दश ता दिशो भजन्त्यः साचिव्यं स च निर्वहन्ननेहा ।
स्त्रैणं किमपि प्रदर्शयन्त्यौ ते चाराद्दयिते दिवा[9]पृथिव्यौ ॥ ५३ ॥

सा रोचनिकी[10] दुकूलपालिस्तन्माहारजनं महाविता[11]नम् ।
तल्लाक्षिकमेकमातपत्रं माञ्जिष्ठे वरचामरे च ते द्वे ॥ ५४ ॥

सा लोहितचन्दनस्य भक्तिः सा रक्तप्रसवस्रजां च राजी[12] ।
सा चोत्किरतां किरीटकक्षाकेयूरेष्वरुणाश्मनां विभूतिः ॥ ५५ ॥

चाटुः स च कोऽपि किङ्करा[13]णां कोऽप्युच्चैः स च विस्तरः स्तुती[14]नाम् ।
ओघः स च कोऽपि दीधितीनामाभोगः स च कोऽप्यलङ्कृतीनाम् ॥ ५६ ॥

रक्तोत्पल[15]मण्डलः स मौलिः तद्वर्मोरसि ते च कुण्डले द्वे ।
आजानु विलोभनाय दृष्टेः स त्वष्ट्रा लिखितः शरीरटङ्कः ॥ ५७ ॥

स्थूलायतनिर्निमेषनेत्रं बिम्बोष्ठं निर्चिता[16]शुबिम्बमध्ये ।
तच्च स्मितसुन्दरं विराजद्व्याकोशे वदनाब्जमन्तराब्जे ॥ ५८ ॥

---

१. BC ण्डं । २. A लेप । C लोप ३. B स्स ४. A पु । ५. A गुरुः । ६. A हि ७. B रवैन्तस्त ८. D ग्रे । ९. A वः । १०. A भौव ११. BC मा । १२. D शिः । १३. B विध्कि । १४. B श्रु । १५. A प । १६. BC वित ।

किं भूरिभिरीरितैः कपीन्द्राः सुव्यक्तं भगवान् मया स दृष्टः ।
दृष्टः स च तातपूर्वजन्मा पूर्वाङ्गं प्रविभक्तिमद्दधानः ॥ ५९ ॥

एषोऽहमहिद्विषस्तनूजः संपातिर्निपतामि पादयोस्ते ।
भ्राता मम लम्बितो जटायुस्तस्यापि प्रणतिं गृहाण गुर्वीम् ॥ ६० ॥

तस्मिन्निति वादिनस्तदानीमंशूनां दहता कदम्बकेन ।
अव्याकृतसंभ्रमस्य पक्षावक्षेपं मम तूलवत् प्रपन्नौ ॥ ६१ ॥

श्रद्धारभसेन यावदूर्ध्वं गन्तव्यायै मनः करोमि भूयः ।
तावन्निपताम्यधः पतत्रव्याघाताद्विहितस्य नास्ति विघ्नः ॥ ६२ ॥

हा हैत्यकरोद्भुरुर्गिरैव व्यग्रत्वादवधीर्य मामयासीत् ।
तेषां क्व सुतादिरात्मवर्गः स्वाम्यर्थः सुमहान् प्रतिश्रुतो यैः ॥ ६३ ॥

तापः खलदुष्प्रलापजन्मा सद्गोष्ठ्यामिव सान्त्वशीतलायाम् ।
सोऽग्निः प्रशशाम सोमवीथ्यां निस्थाम्नः पततो ममाङ्गकेषु ॥ ६४ ॥

यावच्च वलामि लब्धसंज्ञः किं पश्यामि न दृश्यते जटायुः ।
निर्वाणवहिर्घृणेस्तदान्तः सन्दीप्तो मम तद्वियोगवह्निः ॥ ६५ ॥

व्यक्तं न तदा मयाऽनुजस्य ज्ञाताऽऽसीद्बत काचन प्रवृत्तिः ।
तस्योष्णनिवारणाय पक्षौ विस्तार्योपरि दूरतः स्थितोऽहम् ॥ ६६ ॥

तेनावरजन्मना वियुक्तः पक्षाभ्याश्च विनाकृतस्तदानीम् ।
व्योम्नोऽनवलम्बनात् कुमाराः क्रूरेऽस्मिन् पतितोऽस्मि विन्ध्यमूर्ध्नि ॥ ६७ ॥

रुद्धोऽस्मि गिराऽऽर्द्रयाऽद्रिशृङ्गान्मुञ्चन् स्वं मुनिना निशाकरेण ।
पक्षीन्द्र विषह्यतामनेहा पक्षाभ्यां भवितासि चेत्समग्रः ॥ ६८ ॥

रामः पितुराज्ञयैतदेष्यत्यैक्ष्वाको वनमात्मना तृतीयः ।
स्वं धाम ततश्च यास्यति द्राक् तद्दारानपहृत्य राक्षसेन्द्रः ॥ ६९ ॥

ख्याताऽसि तयोर्द्वयोः प्रवृत्तिं प्राप्तेभ्योऽभिमुखं यदा कपिभ्यः ।
तर्हि द्वितयं पतत्रयोस्ते विध्वस्तं पुनरुद्गमिष्यतीति ॥ ७० ॥

---

१. BC वाल २ BC न्न । ३ B व्योर्जे C ब्गेच ४ A च । ५ BC ण ।

तत्प्रत्ययरोपितायतास्थो दूरस्थानिह वः प्रतीक्षमाणः ।
उज्झामि न पर्वतप्रपातान्निष्पत्रं[1] निरपत्रपः शरीरम् ॥ ७१ ॥

इत्युग्र[2]विपाकमेकपाकः सुक्षेत्रप्रभवः सुपार्श्वनामा ।
दीप्ताकृतिसाहसी[3] दिगन्तान् भ्रान्त्वा वर्तयतीह पर्वते माम् ॥ ७२ ॥

तस्यात्र कदाचिदह्नचतीते पन्थानं विकलो[4] विलोकमानः ।
सीतामपहृत्य यान्तमारादद्राक्षं दिवि रक्षसामधीशम् ॥ ७३ ॥

हा राम हरत्ययं हताशस्त्वज्जायां त्वयि दीप्यमान एव ।
किं मां तदसाधुवादरोषाद्धत्वा लक्ष्मण रक्षसे गतोऽसि ॥ ७४ ॥

रक्ष क्षणदाचराद्वधूं स्वां स्वर्गिन्नुत्तरकोसलैकनाथ ।
कस्यापि गतौ वधाय दस्योर्दूरं द्वावपि शीतलौ सुतौ ते ॥ ७५ ॥

एह्येहि स दह्यतां कुरङ्गः क्रूरेण क्षणदाचरेण नीये ।
उक्त्वा परुषाणि लक्ष्मणोऽपि[5] क्षिप्तः क्वाप्युपसृष्टया मयैव ॥ ७६ ॥

किं पश्यत यात लोकपालाः क्ष्मापालस्य वधूरियं विरौति ।
एतद्विकृताननौघभीमं भूतं[6] भोक्तुमुपैति मां गृहीत्वा ॥ ७७ ॥

आशीः फलिता न ते सुमित्रे सीतेयं[7] रजनीचरेण लुप्ता ।
श्वश्रुप्रथमे तवापि तैस्तैस्त्राताऽऽसीन्न वधूटिका तपोभिः ॥ ७८ ॥

रक्षोवदनान्न रक्षिताऽहं हा सीरध्वज तात किं त्वयाऽपि ।
पाशाः शिथिलीभवन्ति कालान्नोद्गाढः श्लथते सुतेति बन्धः ॥ ७९ ॥

मातर्मिथिले न वीक्षिताऽसि त्वं देवि त्यजसीव मामयोध्ये ।
लब्धेऽब्धिसागरस्य पारे दूरं वैरिणि यत्पुनर्गतासि ॥ ८० ॥

गङ्गे सरयु प्रतीरयोर्वामुत्कण्ठा मम चित्त एव जीर्णा ।
पूर्णोऽवधिरन्यथाऽवतीर्णस्तीर्णोऽयं व्यसनार्णवो न तावत् ॥ ८१ ॥

इत्यायतमैथिलीविलापव्याक्षिप्तेन मया तदोन्मुखेन ।
त्राणार्थमवीक्षितात्मनोच्चैः[8] खे दत्तानि कियन्तिचित् प्लुतानि ॥ ८२ ॥

---

१. A त्य २. A स्व ३. ACD दृप्ताहृतिसाहसो ४, A का ५. BC यं । ६. A रक्षो ७. A साचे ८. BC च्चा ।

किं वः कथयामि वानरेन्द्राः सीताक्रन्दतरङ्गगद्गदस्य ।
मुक्तर्जुपथः कथंचिदेव भ्रष्टश्चञ्चुपुटात्स मे दुरात्मा ॥ ८३ ॥

यावन्निपतामि निष्प्रयत्नः प्रस्थेऽस्मिन्नचलस्य रंहसोऽन्ते ।
तावत्स पुरीं सपुष्पकश्च प्राप्तोऽभूत्तरसा निशाचरेन्द्रः ॥ ८४ ॥

अन्वस्य न सामिषः सुपार्श्वः प्राप्तोऽभूच्छ्रमकर्शितः कुतोऽपि ।
उक्तः स मया बुभुक्षितेन क्वासीः शून्य किमाहृतं त्वया मे ॥ ८५ ॥

पङ्गोर्जरतः क्षुधातुरस्य त्वन्मार्गं मम पश्यतोऽनिमेषम्[1] ।
को मे निकट[2]स्त्वयेक्षितोऽभूद्यत्रासावहमद्य विस्मृतस्ते ॥ ८६ ॥

जानेऽवरजस्य न प्रवृत्तिं त्वन्माताऽन्तरितैष पक्षसादः ।
त्वं चेद्भवसि श्लथः कथान्तं यातस्ते जनकोऽयमेकदिक्कः ॥ ८७ ॥

इत्यूचिषि मय्यधोमुखोऽभूदुद्भीतिः शनकैर्जगाद चैवम् ।
एकः करुणाहतस्य तात क्षन्तव्योऽद्यतनो ममापराधः ॥ ८८ ॥

दृष्टोऽद्य मया महेन्द्रशृङ्गादात्तार्तप्रमदामिषो दशास्यः ।
लङ्कामभि संपतन् पुरीं स्वां सायाह्ने तरसाऽभिहन्यमानः[3] ॥ ८९ ॥

आहारकृते ततो दवीयान्[4] सोऽत्यर्थं जविना मयाऽनुबद्धः ।
मुक्तो मुखगोचराच्च[5] पश्चात्पापात्मा कृपणानि भाषमाणः ॥ ९० ॥

जाने पिशितं च कातराणां दुष्कालेऽपि न रोचते भवद्भ्यः ।
तेनार्द्रघृणाक्षितेन वः[6] स्यादित्यस्तः स मया विदूर एव ॥ ९१ ॥

आदाय तमापतामि सद्यः क्षुद्वेगाद्यदि वः स्थितिर्न गुर्वी ।
लङ्केयमितो ममास्ति कृत्स्ना चञ्च्वग्रे गहनं न किंचिदत्र ॥ ९२ ॥

इत्युक्तनिजापदानसारः साधूक्तः स मया निवारितश्च ।
आयासभयेन दुर्गभाजस्तस्येहोपनयोद्यमाय भूयः ॥ ९३ ॥

दृष्टो मम दारकेण दस्योस्तस्येत्थं निलयो वलीमुखेन्द्राः ।
गम्यः स च वः परं पुरारेः द्वास्थस्य प्रमथस्य भाषितेन ॥ ९४ ॥

---

१. B निशेयम् । C दशेयम् । २. D वि । ३. ABC मसाभिगम्यमानः । ४. D यः । ५. ACD रे च ६ A र्द्रघृणेन । B प्यघृणाक्षतेन । ७. D व ।

अस्ति त्रिककुन्महीभृतोऽङ्के लङ्केति त्रिजगद्विलक्षणा पूः ।
यामुत्तरदिक्पतेर्निकामं निर्मायोपनिनाय विश्वकर्मा ॥ ९५ ॥

आक्रम्य बलेन तामिदानीमध्यास्ते रजनीचरैकवीरः ।
लूनस्वमुखारविन्दराजीपूजावर्जितबालचन्द्रमौलिः ॥ ९६ ॥

रम्भाकमितुः कुबेरसूनोः शापान्मुक्तहठग्रहेण तेन ।
तत्रैव निवेशिताऽस्ति ताताः सीतेति ज्वलतः शिखाऽनलस्य ॥ ९७ ॥

शैलादित ईयते सुवेलं यः शाखात इव प्लुतेन शाखाम् ।
सोऽद्यैव मनोरथेन तुल्यं तामालोक्य निवर्तते कपीन्द्रः ॥ ९८ ॥

लङ्केयमयं क्षपाचरेशः सीतेयं सुदती सुदुःखमास्ते ।
अत्राप्यहमग्रतो निरीक्षे लक्षेणान्तरितानि योजनानाम् ॥ ९९ ॥

इत्युक्तिसमानकालमासीत् पक्षाभ्यां स खगाग्रणीः समग्रः ।
जाग्रत्यवधिं प्रतीक्षमाणाः सिद्धानां न विसंवदन्ति वाचः ॥ १०० ॥ मिथ्या

तस्याभ्युदयेन तेन तेने कोप्युच्चैः प्रमदः प्लवङ्गमेषु ।
विश्रान्तमिवाथ मेनिरे ते दैवस्य प्रतिकूलताधिकारम् ॥ १०१ ॥

शुष्यद्दृढदेहकाण्डशेषः सोऽकस्मादुपजातपत्रजातः ।
पक्षीन्द्रमहातरुश्चिरेण व्याचक्रे निजकामकुड्मलानि ॥ १०२ ॥

आरोहत मामितः कुमारास्तत्राद्यैव नयामि वः क्षणेन ।
आस्ते तदयोगरुद्धमर्धं वैदेहीति रघूद्वहस्य यत्र ॥ १०३ ॥

सर्वेऽपि शकुन्तराजकेतोस्तेजोभिश्छुरिताः स्थ रामनाम्नः ।
युष्मानहमुद्वहामि तातास्तातस्य प्रलघूकरोमि भारम् ॥ १०४ ॥

आध्वं सुखमत्र वाऽहमेकः पर्यस्य क्षणदाचरान् क्षणेन ।
आदाय वधूमुपैमि युष्मास्वानृण्यं यदि मे भवत्यनेन ॥ १०५ ॥

दूरं मम न प्लवङ्गवीराः सन्नद्धस्य चराचरेऽस्ति किञ्चित् ।
संपातिरहं पुनर्नवत्वं नीतो वः कपयः समागमेन ॥ १०६ ॥

१. A स्मेर २ A रोधि ३. BD बन्ध ४. AC स्मिन् ।

भोः पश्यत संपतामि लङ्कामातङ्कं जनयामि रावणस्य ।
सीतामुरसस्तलेन रक्षन् पक्षाभ्यां विधुनोमि नैकषेयान् ॥ १०७ ॥

ब्रूत प्रियमाचरामि किं वः संवेगो मम संमदस्य तीव्रः ।
कालं हि हरन्त्यनभ्युपायाः संपूर्णस्य विलम्बते न कामः ॥ १०८ ॥

मान्यं तमथो निषिद्धसैन्यः सेनानीः स्वयमङ्गदो जगाद ।
पात्रं न तथाविधं तदीशो यत्रामात्यमुखेन किंचिदाह ॥ १०९ ॥

प्रह्वैः कपिभिर्वितीर्णकर्णः सोऽभ्यर्णे विरराज भाषमाणः ।
घर्मान्तविमूर्छदुच्चधाराझात्कारः शिखरीव कुञ्जरेन्द्रैः ॥ ११० ॥

उक्तो निलयः क्षपाचरस्य प्रत्यक्षेव कृता च राजपुत्री ।
आर्य प्रियमन्यदद्य किं तद्यन्न प्रागुपनामितं त्वया नः ॥ १११ ॥

पक्षोपगमो मुनेः प्रसादः किं तत्रोपकृतं प्लवङ्गमैर्वः ।
सर्गो महतामयं ह्रियन्ते निघ्नानामणुनापि यद्गुणेन ॥ ११२ ॥

कर्तव्यमथ प्रियान्तरं चेदस्माकं पतदीश तत्प्रसीद ।
पश्यामि भवन्तमुत्पतन्तं लीलाभिर्विचरन्तमम्बरेऽस्मिन् ॥ ११३ ॥

पक्षीन्द्र कियानयं समुद्रः कश्चासावधुनोच्यते दशास्यः ।
आर्येण विधूतमन्धकारं कार्यान्तोऽधिगतश्च वानरेन्द्रैः ॥ ११४ ॥ अन्धकारोऽस्ती

जानाति भवानिमं पुरावित् कच्चिन्नः सचिवेषु जाम्बवन्तम् ।
येनाक्रियत त्रिविक्रमोऽसावुद्रिक्ताक्रमणेन साभ्यसूयः ॥ ११५ ॥

अद्याप्यर्यमेति मेरुमद्रिं दृष्ट्वाऽऽशु त्रिदशौघजुष्टसानुम् ।
कोऽस्योपगमे गिरिस्त्रिकूटो यं क्षुद्राः क्षणदाचराः प्रयान्ति ॥ ११६ ॥

कच्चिन्मत एष वः कपीन्द्रः सामीरिः शतकोटिमृष्टकायः ।
रुष्टो यँ उपैति विष्टपानां दृष्ट्वाऽन्तं निमिषाच्चतुर्दशानाम् ॥ ११७ ॥

प्रत्येकममी महानुभावाः पर्याप्ता निधने दशाननस्य ।
कुर्वन्ति समस्तँमीप्सितं वा गाम्भीर्यस्थगिताः प्लवङ्गमेन्द्राः ॥ ११८ ॥

---

१. ABC ह । २. AC दच्छ ३. A स्ति कितदन्यद्य ४. B स्ताद ५. BC सू । ६. AD यमु
७. B मंस C मंत.

तद्वाक्यमोमिति पुरन्दरसूनुसूनोः न्यूनातिरेकरहितं मुदितोऽनुमान्य ।
आश्लिष्य तुल्यवयसं भृशमृक्षराजमापृच्छ्य स प्लवगवर्गमगात्सकामम् ॥११९॥

इत्यभिनन्दकृतौ रामचरिते महाकाव्ये संपातिसमागमो
नाम चतुर्दशः सर्गः समाप्तः ॥

---

[1]किं शीधुभिः भवतु फाणितशर्करााद्यैः
किं वा सितासहचरैः क्वथितैश्च दुग्धैः ।
दुग्धाब्धिलब्धसुधयाऽपि न किञ्चिदेव
यत्राभिनन्दसुकवेर्विचरन्ति वाचः ॥

[2]पालान्वयांबुजवनैकविरोचनाय
तस्मै नमोऽस्तु युवराजनरेश्वराय ।
कोटिप्रदानघटितोज्ज्वलकीर्तिमूर्तिः
येनामरत्वपदवीं गमितोऽभिनन्दः ॥

---

१ C E read this. २ D E read this.

# पञ्चदशः सर्गः ॥



विसृज्य तं निजकरणीयसंभवे कृतत्विषं तमसि[1] विहङ्गमङ्गदः ।
अचूचु[2]दत्सदसि महाचमूपतीनिति द्रुतं लवणसमुद्रलङ्घने ॥ १ ॥

जितोऽम्बुधिर्जनकसुतेयमीक्षिता कथीकृतः स च परदारतस्करः ।
महौजसस्त्यजत विषादमागतो रघूद्वहे बहुमतिनिष्क्रय[3]क्षणः ॥ २ ॥

पृथक् पृथक् कथयत वीर्यमात्मनो विपर्ययं वदति हि[4] मौनमद्य नः ।
विकत्थनं वितथमशोभनं विदुः यथा तथा रमयति भूतमीरितम् ॥ ३ ॥

त्वमुद्वहन्नलघुधुरं[6] धरातले तथेक्षितः खलु विषमे समुज्ज्वलः ।
समेऽपि किं मुखमधुना मलीमसं तवर्षभ[7] स्खलितगतेर्गडेरिव ॥ ४ ॥

अयं सखे शिखिसुत नील नीरधिः विधीयतां विधुतजलस्तवौजसा ।
विभासि किं वरुणभयादिव क्रमं पितुस्त्यजन्नसदृशभावशीतलः ॥ ५ ॥

स्वविक्रमप्रतिसदृगीक्ष्यतामयं सरित्पतिः, शरभ तरङ्गभङ्गुरः ।
निरीक्ष्यते चकितचमूरुकातरं त्वयाऽसकृत्किमपगतस्स्थलीपथः ॥ ६ ॥

त्वमुच्यसे सुभटकुलैकचन्द्रमाः त्वयि प्रभुर्द्रवति च गन्धमादनं[10] ।
समुल्लसन्भरमिममुद्वहस्व भोः प्रपद्यसे किमनभिजातजिह्मताम् ॥ ७ ॥

त्वमुद्धतं व्रज गज दिग्गजेन्द्रवत्त्विषः क्षरन्मदकपिशाः कपोलयोः ।
च्युत[11]क्षमावदनपटो निरङ्कुशः कुरु क्षपाचरपुर[12]वीरविद्रवम्[13] ॥ ८ ॥

विलोकयन्नरिककुभं न भूपितः कथं त्वमप्यवनिपतेर्वधूपितः ।
क्व स क्रमः कपिवर तार[14] तावकः समस्त्वया सम[15]जनि सीदता बकः ॥ ९ ॥

नभोम्बुधी निषध निरत्ययाविमौ निरत्यया दिगियमगस्त्यशीलिता[16] ।
तवोत्क्रुधः क इव स राक्षसाधमः समापय[17] व्यसनमिदं नमोऽस्तु ते ॥ १० ॥

---

१. D सौ । २. BD नूनु ३. A तनिष्कि । ४. A कथयति । ५. BD त । ६. BCD न्धवलधुरां । ७. B भा । ८. BD स्स ९. ACD मस्सरित्पतिः । १०. D नः । ११. CB तं । १२. BCD व । १३ BC वाम् D दम् । १४. BCD जात । १५ CD त्वया यद । १६. BC ताः । १७. A प्यतां ।

इहार्णवे समुदितशक्तिकौमुदी[1]विशोल्लसन्मुखमुकुलस्य मूर्छतु ।
ककुप्सु ते कुमुद निकामजृम्भितं निमीलिते कपिकुलपद्मकानने ॥ ११ ॥

सखे रभे[2] श्लथरभसं किमीक्षसे कुरु स्थिरं परिकरमस्य लङ्घने[3] ।
अयं नदन्नवघनसंकुलोऽम्बुधिः भवादृशां भवनमुखप्रपोपमैः[4] ॥ १२ ॥

विलङ्घ्यतां जलनिधिरेष लावणः प्रमथ्यतां प्रियसख रम्भ रावणः ।
प्रसाद्यतां प्रभुरभिजातवार्तया विलक्ष्यते वदनरुचा तवार्तया ॥ १३ ॥

नल स्थलं[5] जनय जलौघमञ्जसा सुखं चमूर्व्रजतु[6] वनौकसामियम् ।
नभोऽथवाऽवनिमिव संविधत्स्व नः परीयतां तव पितृनिर्मिता पुरी ॥ १४ ॥

किमङ्घ्रिणा विलिखसि मैन्द मेदिनीमुदीरय द्विविद तदद्भुतं तरः ।
विलङ्घ्यतामयमुदधिः स्थितोऽग्रतः स्वगौरवस्तिमितसुपुं[7]सलीलया ॥ १५ ॥

लघूल्लसल्लहरितुषारतस्करैः तिरस्कृतश्रमसलिलेन वायुभिः ।
अ[8]तीयतामयमथवेतरेण वामपां निधिर्दधिमुखदुर्मुखौ सुखम् ॥ १६ ॥

स्फुरन्मुखः शिखरितव[9]भ्रुवालधिः चलन्द्रुतं विधुतकडारकेसरः ।
अमङ्गलं गव निगदन्नभस्तलात् पत क्षितेः सुत इव शत्रुमूर्धसु ॥ १७ ॥

प्रपद्यतामुपरि तरङ्गिणीपतेः क्षणं त्वया गवय गतागतश्रमः ।
प्रसीदतु प्लवगपतिः प्रकोपनः कुलं भयादभयद रक्ष्यतामिदम् ॥ १८ ॥

स जातवान् जितमिह तेन तस्य भोः सुजीवितं तमनघमेकमीड्महे ।
यमग्रतः प्रकटितसत्त्वसंपदं महापदि स्वलदवलम्बते कुलम् ॥ १९ ॥

जिते जगद्व्यसनसमाप्तिरम्बुधौ वि[10]राधिते भयमतिभूरि भूभुजि ।
विचार्यतामभिमत[11]सिद्धये बुधाः क एतयोरुचितविलङ्घनोऽस्तु नः ॥ २० ॥

विलङ्घ्यतामुदधिरयं महौजसः स मृग्यतां दशवदनो दिशाऽनया ।
समाप्यतां प्रभुकरणीयमायतं विलोक्यतां विरहकृशो वधूजनः ॥ २१ ॥

इहैव भोस्तरलशिखाकदम्बके वरं हुतं हुतभुजि वाडवे वपुः[12] ।
दृढक्रुधं परिवृढ[13]मुर्मुरं पुनः न तं भयान्नतगयो गता वरम्[14] ॥ २२ ॥

१. A चयो । २. D रस । ३. BCD प्रतोमुखं । ४. D शानवनखगप्रभो । ५. CB भस्स्थ । D तल ६. A व्रजति BC ध्वजतु । ७. D लु । ८. A भी ९. C वक्र । १०. D कि । ११. AD यमिति १२. A वामेवद्र । १३. A वृत १४. A यम् ।

जयत्यदः प्रतिदिनमंशुमानियद्विलङ्घितुं त्रिभुवनमङ्घ्रिणा हरेः ।
पुरीं प्रति त्रिदशरिपोः पयोनिधौ कियन्ति भोः शतमिह योजनानि वः ॥ २३ ॥

जितोऽस्त्य[1]यं [2]तिमिनिलयस्तरस्वि[3]ना कियानयं जगदवधिक्षमाधरः ।
भविष्यति प्रतिहतिशङ्किनां पुनः स्ववेश्मनोऽजिरमपि दूरमद्य वः ॥ २४ ॥

न मौ[4]लतां कलयति नूतनः प्रभुः समादिशत्यसदृशमेव निग्रहम् ।
मनोरथक्षतिकुपितोऽनुजीविनां न तातवद्गणयति निर्घृ[5]णः श्रमम् ॥ २५ ॥

त्यजन्त्यसून् कृतसुभटाङ्गनाव्रता वरस्त्रियो न तु रमयन्ति कातरम् ।
न सेत्स्यति स्खलितमहामनोरथाः स्वगेहिनीघटनमनोरथोऽपि व[6]ः ॥ २६ ॥

न दुर्गमं किमलसरुद्धरंहसां न दुर्जयं जगति किमुज्झि[7]तौजसाम् ।
न दुष्करं किमिव सदाऽवसादिनां न दुर्लभं किमिव च दैववादिनाम् ॥ २७ ॥

न कोऽप्ययं जरठनदः सुहृत्तमाः किमीक्ष्यते शृणुत रहस्यमस्य भोः ।
तिरोहितश्चरणतलाम्भसा हरेरयं तटः सगरसुतैरदारितः ॥ २८ ॥

अयं हरेः कपिलहृतस्य कारणात् परश्शतैः सगरसुतैरखन्यत ॥
चिरादमुं हरशिरसस्तपोबलादपूपुरत्त्रिपथगया भगीरथः ॥ २९ ॥

सुरासुरैरयमहिनद्धमन्दरभ्रमि[10]र्मिभक्षतरभसैरमथ्यत ।
अमुं गलत्तिमिकुलमङ्गुलीबिलैः मुनिः क्षणात् करगतमाचचाम च ॥ ३० ॥

भवद्भिरप्यचकितमद्य लङ्घ्यतामयं पुरः प्रधिरिव[11] राशिरम्भसाम् ।
अविप्लव[12]ः प्रणयसहत्वमित्यदः स्थितिद्वयं सुविहितमस्य वेधसा ॥ ३१ ॥

महोदधौ मलयसुवेलयोस्तयोः पुरेऽथवा सुरपुराशिल्पिकल्पिते ।
प्रसज्ज्य[13]त प्रमदवनेषु[14] मा स्म भोः स वः क्षणान् गणयति कोपनः प्रभुः ॥ ३२ ॥

स्वरंहसः कुरुत कपीश्वराः सदृक् त्रपावशात् प्रविशत मा स्म वारिधिम् ।
वशंवदो विधिरनुरूपकर्मणां न शर्मणे शिखिनि पतङ्गसाहसम् ॥ ३३ ॥

इति श्रुताधिपतिगिरः प्लवङ्गमाः पृथक् पृथग्जगदुरशक्तिमात्मनः ।
तदाऽवदत् किमपि न तत्र केवलं बहिश्चि[16]राभिसरतयाऽऽनिलिः स्थितः ॥ ३४ ॥

१. A स्त्व । २. A नि । ३. A नां. । ४. A न । ५. A क्ष । ६. D न । ७. A स्थि । ८. B C व । ९. A स्य । १०. B C म । ११. A हि । १२. D धिष्ण । C विप्लव । १३. A ह्यत । १४. B C D वशेन । १५. C D B दंन । १६. A D इच ।

ततोऽब्रवीद्विगलितवाहिनीबलः सुतं विधेः सुरपतिसूनुसंभवः ।
अनक्षरस्फुरितविकासपाटवस्फुटीकृतक्रमसदृशातिवि[1]क्रमः ॥ ३५ ॥

इहास्यतामतिशयितश्रमालसा वनौकसः क्षणमहमेव केवलः ।
जयाम्यमुं जलनिधिमार्य कार्य[2]वार्नोधित्वरस्ततमिव संकथारसम् ॥ ३६ ॥

न संभ्रमस्त्रिदशरिपौ दशानने न वारिधौ न विबुधधाम्नि चोत्त[3]मे ।
अयं तरस्तरलितविष्टपस्य भोः सुतो युवा सदृशबलोऽस्मि वालिनः ॥ ३७ ॥

अयं व्रजाम्युपरि महासरित्पतेः पतत्पतेरपि जनयामि विस्मयम् ।
क्षुण्[4]ण्मि तं हतपिशितात्पतिं क्षणान्मरुत्पतिः सुतशिशुकेन मोदताम् ॥ ३८ ॥

स्थितः स्थिरे मलयमहेन्द्रयोर्द्वयोर्महीध्रयोः क्षणमितरस्य मूर्धनि ।
पताम्यहो[5] त्रिशिरसमाद्रिमुद्धरन् दशा[6]र्ध्यहं दशशिरसः शिरोमणीन् ॥ ३९ ॥

निरुध्यतां क्षणमतिसोत्सुकं मनो वनौकसा परिषदवेक्ष्यतामियम् ।
उपैमि वः स्वजव[7]सखो निरीक्ष्य तां न रक्षसः पुरमिह यावदे[8]व भोः ॥ ४० ॥

पृषत्कवज्जलनिधिलङ्घनोद्यतं चमूपतिं तमिति जगाद जाम्बवान् ।
विलोकयन् प्रजविनमञ्जनासुतं स्वयं जराविगलितविक्रमोद्यमः ॥ ४१ ॥

जितोऽस्ति ते जलधिरयं तरङ्गवान् नभोऽङ्गणं तव कियदेतदङ्गद ।
न वर्तते परमियतः प्रयोजनान्महाप्रभोः स्वयमिह तीक्ष्णसाहसम् ॥ ४२ ॥

त्वमानिलिर्द्वयमिह नो जवोत्तरं विना पुनस्त्वदियमनायका चमूः ।
अतोऽनघस्तुतिसमकालमुन्मिषन्निजस्मृतिर्धुरमितरो वहत्विमाम् ॥ ४३ ॥

ऋते स्तुतेरितरवलीमुखोपमः स्मरत्ययं न किमपि रूपमात्मनः ।
लिखन्नखैस्तनुमनुदारधूसरामसंस्तुतैः कृपण इवोपहस्यते ॥ ४४ ॥

इतस्ततः करचरणं विनिक्षिपन् क्रपो[9]चितः कपिशिशुरेष संप्रति ।
भवि[10]ष्यति स्फुरितकरालकेसरो हरिः क्षणादयमतिकामविग्रहैः[11] ॥ ४५ ॥

जयत्वयं त्वदभिसरः सरित्पतिं तदु[12]द्भवं भव[13]तु यशश्चमूपतेः ।
परिश्रमः परिजनमश्नुते परं फलं विधेः परिवृढमेव धावति ॥ ४६ ॥

अयं महः किमपि किमप्ययं तरः किमप्ययं कपिशिशुवर्ष्म दैवतम् ।
कृत[14]स्पृहाधिकसुखमस्मदीशितुः किमप्ययं सुकृतमहातरोः फलम् ॥ ४७ ॥

---

१. B C D धिक । २. C वत्य । ३. A चात्र । ४. A क्ष । ५. BC हं । ६. A दिशाम्य । ७. A D न । ८. A प । ९. A त्रवो । B क्षपो । १०. A तरि । ११. A क्रमः । १२. BD दद्भुतं । १३. A तवच । १४. B क्ष ।

अहर्दिवं द्रविणपरिक्षयप्रदैः प्रयोजनं किमिव तदाऽनुजीविभिः ।
पुरः स्पृशत्यललितहेतुसंभवो[1] यदि श्रमः सुखसुकुमारमीश्वरम् ॥ ४८ ॥

अनन्तरं परममिति प्रपन्नवाननुत्तरं द्रुहिणसुतस्य तद्वचः ।
प्रचक्रमेऽभिमुखयितुं पुरःस्थितं सुभाषितैरिति हनुमन्तमङ्गदः ॥ ४९ ॥

ध्रुवं वचः स्खलति[2] महाप्रतिष्ठयोरभिष्टुतौ तव कविजीवयोरपि ।
सहस्थितिप्रणयसमुद्भवा पुनः प्रगल्भता जनयति मे समुद्यमम् ॥ ५० ॥

तवोर्जितं यदि वदति स्वयं स्वभूः सरस्वती यदि तव वक्ति वैभवम् ।
अहं पुनः क इव पितृव्यकिङ्करो दयाजडस्त्वमपि[3] न यत्र तत्र चेत् ॥ ५१ ॥

सुमेरुणा तलमिव साचलं क्षितेः बहुद्विपं वनमिव गन्धहस्तिना ।
ग्रहाकुलं वियदिव विश्वचक्षुषा सदस्त्वया सुभट चितं चकास्त्यदः ॥ ५२ ॥

न ते गतिः स्खलति मतिर्न मुह्यति द्युतिस्तिरोभवति न जातु कुत्रचित् ।
महर्द्धिभिस्त्वमनिलतुष्टये सुरैः कृतोऽणिमप्रभृतिमहागुणेश्वरः ॥ ५३ ॥

तवोपमा कमलभवेन योगतो निराकृतिं तव तरसा नयो गतः ।
त्वया परोपकृतिसुखावलम्बिना जितं जितं सुभट चमूवलंबिना ॥ ५४ ॥

तव प्रसूः कृतपृषदश्वरञ्जना सुराङ्गनासदृशविभूतिरञ्जना ।
त्वमेधितः खलु सुधया सुधाशनैः स्मरात्मनः प्रचरसि किं मुधा शनैः ॥ ५५ ॥

कुरु स्थिरं परिकरमीयतामितः समाप्यतां नृपसुतकृत्यमायतम् ।
निरिच्छस्य अकामस्य   निराशिषः सह वपुषेदमागतं विपद्गतोद्धरणमहाव्रतं तव ॥ ५६ ॥

त्वमङ्गभूर्भुवनगुरोर्नभस्वतः तथा कृथास्त्वमभिभवं विवस्वतः ।
न ते[8] ततं गगनतलं तरस्वतः किमीक्षसे दुरधिगमं सरस्वतः ॥ ५७ ॥

स पूर्यतां नृपसुतराजहंसयोः मनोरथः कपिकुलपद्मिनीरवे[9] ।
इमा दिशो दशमुखकालिकाङ्किताः कुरूज्ज्वला निजकरैं[10]जालनिर्गमैः[11] ॥ ५८ ॥

जयाञ्जनातनय तनुष्व वर्ष्म[12] तन्निहीनवल्किमवनतो विषीदसि[13] ।
विलोकयन्त्वशिथिलबाहुकन्दलीधृताङ्गना गगनसदस्तवोद्गमम्[14] ॥ ५९ ॥   दिवौकसः

१. D भ्रमो । २. A लित ३. AD सि ४. Aस्तिरस्कृतिं ५. A यु ६. BCD तिभयं ७. AB वने ८. AB म ९. B CD पतेः । १०. A रुचि ११. CD र्मलैः । १२. BCD कर्म १३. BCD मिवबतातिसीद १४. CD वाग

नमोऽस्तु ते निधिरयमीक्ष्यतामपां प्रसीद भोः स्मर महिमानमात्मनः ।
तवाहितत्रिदशभयङ्करप्लुतेः खगोचितं कियदिदमन्तरं दिवः ॥ ६० ॥

किमुच्यते बहुतरमेवमादिषु प्रयोजनेष्वनवरतं स दीक्षितः ।
विवक्षता किमपि रघूद्वहेन यस्तथा चिरं कपिवरसंसदीक्षितः ॥ ६१ ॥

इति स्तुतिप्रमुखमधीशितुर्मुखाद्वचोमधु श्रवणपुटेन पीतवान् ।
अवर्धत स्वमहिमसंमदस्फु[1]रत्प्रभागयस्थगितविभक्तिरानिलिः ॥ ६२ ॥

व्यजृम्भत व्यवहितभास्करातपं तदद्भुतं[2] भुवनभयङ्करं महः ।
द्रवन्मिथः किमपि किमप्यतर्कयच्चमत्कृतः सपदि सुपर्वणां गणः ॥ ६३ ॥

लाङ्गूलेन गभस्तिमान्वलयितः प्रोतः शशी मौलिना
जीमूता विधुताः सटाभिरुडवो दंष्ट्राभिरासादिताः ।
उत्तीर्णोऽम्बुनिधिर्दृशैव विशदैस्तेनाट्टहासोर्मिभिः
लङ्केशस्य विलङ्घितो दिशि दिशि क्रूरः प्रतापानलः ॥ ६४ ॥

अर्घायोद्‌चलत्त्रिविक्रमधिया जातभ्रमो जाम्बवान्
यत्सत्यं चकितोऽङ्गदः कथमपि स्थानात्परं न[3] च्युतः ।
जग्मुः क्ष्मामितरे तु मीलितदृशस्तारादयो यूथपाः
तस्यात्युग्रमहःप्रतानपरिधौ देहद्युतेः मूर्छति ॥ ६५ ॥

देवौ[4] गोवृषवाहनः सह गणैरध्यक्षतामभ्यगा-
द्गन्धर्वा जगुरप्सरःपरिवृताः प्रास्थानिकं मङ्गलम् ।
पेतुः खान्मधुनिर्भराः सुमनसः स्फीतो नदद्दुन्दुभि-
स्तस्य स्वस्त्ययनं चकार निकटीभूतः स्वयं पद्मभूः ॥ ६६ ॥

मूर्ध्ना जाम्बवतोऽभिवाद्य चरणावापृच्छ्य सेनापती-
[6]नाश्वास्याश्रुमुखान्मुहुः प्रियसखान्प्रेष्यान्समादिश्य च ।
आरम्भं जगृहे महेन्द्रशिखरादम्भोनिधेर्लङ्घने
रंहस्वी रघुनाथपादरजसामुच्चैः स्मरन्मारुतिः ॥ ६७ ॥

इत्यभिनन्दकृतौ रामचरिते महाकाव्ये स[7]मुद्रलङ्घनो-
त्साहितहनूमत्स्तुतिवर्णनो नाम पञ्चदशः सर्गः ।

---

१. ABC पदः स्फु। २. BC दुन्नवं ३ A तुनर्न। ४ D omits this sloka. ५. A श्लिष्य। ६. BD आश्वास्य प्रमुखान्निजप्रियसखान्भृत्यान् समादेश्य च । A. नापृच्छ्याङ्गदमादरेण सुहृदः संमान्य संभाव्य च। ७. C D omit this.

# अथ षोडशः सर्गः ॥



तं मुहूर्तधुतशृङ्गमगेन्द्रं गान्धवाहिरधिरुह्य रराज ।
हृष्टवानरगणोक्तजयाशीर्जीवितेशविजयीव महोक्षम् ॥ १ ॥

तेऽङ्गदद्विविदनीलनलाद्यास्तस्य तुङ्गिमतिरस्कृतमेरोः ।
विप्रकीर्णतपनीयकणाभाः पार्श्वतो दद्दशिरे हरिवीराः ॥ २ ॥

संबभूव नगमूर्धनि तस्मिन् सोऽथ पूरकपृथूकृतकायः ।
जातशङ्कमकरोदभियास्यन् कुम्भयोनिमपि कुम्भकवीरः ॥ ३ ॥

उद्ववाम परितः सलिलौघानुत्ससर्ज शिखराणि रराम ।
आममृन्मणिकवन्न विषेहे तस्य कुम्भकभरं स महेन्द्रः ॥ ४ ॥

लोलपुष्पविटपोल्लसितानां तुल्यकालमलिनां स निनादः ।
निर्ममज्ज गगनाङ्गणभाजां नीडदुःखरसितेषु खगानाम् ॥ ५ ॥

दृग्भिरेव गतमाकुलमेणैर्गर्भभारमसृणासु मृगीषु ।
ज्या विलग्नवनितैर्धनुरध्वन्यैर्धरोपितमकारि किरातैः ॥ ६ ॥

तेन पुण्यघटितेन ततोऽद्रेः पीडितादघततिर्निर्भृतेव ।
निर्जगाम दृषदाचितकच्छादच्छभल्लपरिषद्भिरसन्ती ॥ ७ ॥

लुप्यते स्म कृपणोचितचेष्टारम्भनिर्धुतिषु दन्तिषु दानम् ।
ते मृगाधिपतयः क्षणदुःस्थाः प्रस्थपादमपि मार्गितुमीयुः ॥ ८ ॥

अङ्कितेष्वपि करङ्कविशेषैस्तेषु चातिभयदेषु भयार्तम् ।
सानुसन्धिषु पपात विबुद्धक्षुब्धकेसरिषु कुञ्जरयूथम् ॥ ९ ॥

निर्ययै निरवकाशितरन्ध्रैरुन्मयूखमणिलाञ्छितचूडैः ।
कन्दरासु भुजगाशनकेकातङ्कलोलनयनैः कुलनागैः ॥ १० ॥

उन्नताब्धिलहरीगलहस्तक्षोभजातबहुलोत्कलिकाभिः ।
आत्तसन्नतिषु निर्झरिणीभिस्तेषु नाग्रशिखरेष्वपि तस्थे ॥ ११ ॥

---

१. AD धू । २. BD सूरक । ३. B पात । ४. D ध्यान । ५. B धनिकै । ६. D रेत्यायधिं । ७. A पुः । ८. A च्त्रभयार्थम् । ९. BC अभ्रसङ्ग ।

प्रस्खलद्भिरुपलैरुपरिष्टान्निर्विपङ्कै[1]रयपिष्टनिकुञ्जैः ।
मूलकाननतलानि तदानीं गण्डशै[2]लवहलानि बभूवुः ॥ १२ ॥

स्वन्तमेतदिति सूनृतयोक्त्या सन्निरुध्य मिथुनानि मयूनाम् ।
नाकसद्मयुवसंसदयासीदायतिं विषहते न यदृच्छा ॥ १३ ॥

स्थानभङ्गविकलैर्जलवाहैस्तत्यजे भृगुषु विग्रहभारः ।
आगतादिव समाकुलभावान्न द्रुतं रुरुधिरे मरुताऽपि[3] ॥ १४ ॥

ध्वस्तमग्रतरुपुष्पवितानं रुद्धमश्वमुखदम्पतिगीतम् ।
नीलकण्ठनिवहस्य निषिद्धं तेन ताण्डवमकाण्डभयेन ॥ १५ ॥

तत्क्षणं गगन एव निरुद्धक्रान्तवाहनवलाहकपोतौ[4]ः ।
ईक्षितातिगहना ययुरु[5]क्त्वा हा म[6]हेन्द्रमिति सिद्धकुमारा[7]ः ॥ १६ ॥

भेजुरुज्झितविचित्रशिलालीसंनिवेशविनिवेशविलासाः ।
मन्त्रणाकुलपरस्परसख्यै[8]ः प्रश्नपेशलगिरोऽप्सरसः खम् ॥ १७ ॥

मेखलासु विकलासनबन्धैर्ब्रह्मणोऽधिगमनादुपरम्य ।
मृग्यते स्म मुनिभिः क्षणलोलैर्मूलमद्रिडमरस्य तदानीम् ॥ १८ ॥

मारुतान्ममृषिरे खरवेगान्मेघनादमसहन्त महान्तम् ।
तत्र चित्रलिखिता इव सेदुर्नारभन्त शरभा अपि किंचित् ॥ १९ ॥

आपतत्सु तरुषु व्रततीषु व्याकुलासु विकलेषु मृगेषु ।
स्वोष्मणः सदृशमागतचित्तैश्चिन्त्यते स्म न किमप्यधिदेवैः ॥ २० ॥

मां पिनष्टि कपिरद्भुतरूपः कोऽप्ययं कैं[10]व बत केसरिणो[11] मे ।
इत्यनाथ इव निर्झरघोषैः घर्घराक्षरमुवाच महेन्द्रः ॥ २१ ॥

एष पश्य विपुलोर्मिरुदन्वानुन्नमन्त्यवनमन्ति महीध्रा[12]ः ।
धारणेयमनिलात्मज विश्वध्वंसिनीत्युदचरद्गगनाद्गीः ॥ २२ ॥

वेगवातविधुतप्रमुखाभ्रो बभ्रुकेसरकलापकरालः ।
उत्पपात स चिरेण महेन्द्रान्मन्दरादिव शरस्त्रिपुरारेः ॥ २३ ॥

१. A शङ्क । २. D शीतचट्टला । ३. BCD तोपि । ४. BCD तैः । ५. BD नैर्गतमु । ६. A इ । ७. BCD रैः । ८. A संभ्रमा. ९. A ह्य । १० C ग्रुवन ११. C लो । १२. BC न्द्राः ।

तेन रेचकसमुल्लसितेन त्यक्तवामनतनुर्दनुजारिः ।
स्मारितो हृदि सुरस्थविराणामप्रमेयविभवेन बभूव ॥ २४ ॥

सूनुभावसुलभादिव हार्दात्तस्य वायुरनुकूलतमोऽभूत् ।
अञ्जनेव जननी तमजिघ्रन्मूर्ध्नि मुग्धशशिबिम्बमुखी द्यौः ॥ २५ ॥

विक्रमेण सुहृदामभिकामं दिङ्मुखानि मुखदीधितिजालैः ।
पूरयन् पवनसूनुरियाय च्छाययाऽम्बुनिधिमम्बरमङ्गैः ॥ २६ ॥

उद्भटास्यरुचमुद्भयमुग्धप्रेयसीनियमरुद्धविमानाः ।
दूरतस्तमनमन्नमरार्थव्यापृतं वियति सिद्धयुवानः ॥ २७ ॥

दृङ्निरोधिनि दिगन्तरलिप्ये चम्पकाग्रकपिशे कपियूनः ।
तस्य मूर्छति मुखद्युतिराशावाह्नि वह्निरिव सन्ददृशेऽर्कः ॥ २८ ॥

तं धुताग्रजलवाहधवित्रस्तोयराशिरनिलेन जडेन ।
अन्ववर्तत सुदूरमुदग्रं कर्म कार्मणमिह प्रभुतायाः ॥ २९ ॥

दक्षिणेन स पथाऽम्बुधराणामम्बुधेरुपरि संचरमाणः ।
जिह्मगारिरमृतस्य कृते नु प्रस्थितः सुरसभामिव रेजे ॥ ३० ॥

रंहसश्च महसश्च समार्धैस्तस्य चाधिकतया स तदानीम् ।
उल्ललास पृषदश्वविवस्वद्भूभृतां विलसितानि विहस्य ॥ ३१ ॥

छायया निजतनोः स तदानीमायतप्रगुणया लवणाब्धौ ।
सूत्रपातमिव पर्वतसेतोः भाविनः पवनसूनुरकार्षीत् ॥ ३२ ॥

तस्य वीक्ष्य वपुरुन्नतवक्राः पश्चवक्रमकरा विकरालम् ।
ईयुरानतिजुषस्तलमब्धेरध्वनेभमकरप्रहतेन ॥ ३३ ॥

तं विलोक्य जलधेरुपरिष्टाददद्रयः कुलिशकर्कशकायम् ।
हेत्युदीर्य ददति स्म तदानीमात्मपक्षयुगलाय जलानि ॥ ३४ ॥

तन्मरीचिखचितो रुरुचेऽब्धिः क्षौद्रराशिरिव पिङ्गतरङ्गः ।
लावणोऽयमिति लिङ्गविशेषैः कैश्चिदेव स तदाऽधिगतोऽभूत् ॥ ३५ ॥

---

१. A पुरःस्थ । २. B रवि । ३. A न्तसु । ४. A म्ये D ध्ये । ५. BCD विचि । ६. BCD विधूतः । ७. BCD पतगराडि । ८. BC धि । ९. B ग्रु । १०. AD द्विश्वभू । ११. BD वहितस्सः ।

तं विलोक्य[1] पथि कान्यपि[2] दूरं भेजिरेऽब्धिजलवाहकुलानि ।
अव्रजत् क्षणमनीश्वरसूतस्तद्दिशैव दिवसेशरथोऽपि ॥ ३६ ॥

बाडवः किमुदधेरुदितोऽ[3]यं लम्बितः किमथवाऽम्बरतोऽर्कः ।
इत्यतर्क्यत गुहाग्र[4]गताभिः स क्षणं मलयकिम्पुरुषीभिः ॥ ३७ ॥

सन्निकृष्टमुदधेरुपरिष्टात्तस्य देहपरिणाहमपश्यन् ।
मन्दरस्मृतिभवेन[5] भयेन व्याकुलाः सलिलजन्तुविशेषाः ॥ ३८ ॥

तं विलोक्य चकितान्निजशिष्यान् पृच्छतः कलशयोनिरुवाच ।
राक्षसेन्द्रमवगच्छत वत्साः केतुनोक्तविनिपातमनेन ॥ ३९ ॥

दुर्निरीक्ष्यमुखमण्डलदीप्तिव्याप्तदक्षिणदिगन्तरभागः ।
स्वर्गवासिभिरनागतमेत्र स्तूय[6]ते स्म स दहन्निव लङ्काम् ॥ ४० ॥

इत्थमीक्षितगतिर्गगनेऽस्मिन्वीक्ष्यतां प्रतिहतः[7] कथमेति ।
उत्सुकादिति सुराः सरमाख्यां[8] मातरं तमुपरोद्धुमवोचन् ॥ ४१ ॥

साऽथ सादरनभश्चरसार्थप्रार्थिता पवनपुत्रमरुन्धत् ।
धावमानमभिवारिधि विन्ध्योपत्यकेव सुरसिन्धुजलौघम् ॥ ४२ ॥

तां वितर्ककणक्वणितनेत्रः कौणपीति कलयन् कपिसिंहः ।
लङ्घनाय लघुयत्नमकार्षीदुद्गमेन गगनावधिभाजा ॥ ४३ ॥

सा वितत्य वियदेव वितस्थे तस्थिवांसमवदत्तमिदं च ।
गच्छ गच्छ ननु वेत्सि समन्तादन्तरालमिदमीदृशमेव ॥ ४४ ॥

देशितोऽयमहतस्तव येन द्वित्रसिद्धपथिकोऽम्बरमार्गः ।
तस्य मार्गमसुनिर्गमहेतोः कर्तुमुद्यतमिदं मम शे[9]स्त्रम् ॥ ४५ ॥

एति भूतपतिरेव कदापि स्थानमेतदुपनीतबलि[10]र्नः ।
अत्र वृत्रहणमप्यनपेक्षा मातरः कवलयन्ति भवान् कः ॥ ४६ ॥

नश्य नश्य कपिशावक दूरात् कोऽसि मामकमुदीक्षितुमास्यम् ।
जायते यदवलोक्य कृतान्तै[11]ः सोऽपि दुर्भरभयज्वरवेगः ॥ ४७ ॥

---

१. B C D म । २. B थगा । ३. B गादयमब्धे । ४. B C D धै । ५. A भुवेव । ६. B C D श्रूय । ७. B C D न्नीक्षितप्रतिहतिः । ८. B ताःसुरसा । ९. D शा । १०. A लंनः । ११. A कपर्दी ।

शक्तिरस्मि जगदीशितुरुग्रा संहरामि समयप्रतिपक्षम्[1] ।
उद्धरामि च भवार्णवमग्नानीक्षितेन पशुकानुपसन्नान् ॥ ४८ ॥

विप्रतीपमित एव वलेथा विप्रराडपि न गच्छति येन ।
स्तेनवद्व्रजसि[2] कस्त्वमयं नस्तेन रे पशुक सिद्धपथेन ॥ ४९ ॥

तामुवाच हनुमाननुचिता ते वागियं वियति वीरदरिद्रे ।
अञ्जनासुतसमक्षमिदानीं कः प्रमादिनि विकत्थनवादः ॥ ५० ॥

स्पर्धयाऽथ ववृधे हरिवीरः सा तथाऽऽशु पुनरुल्लसति स्म ।
तद्वपुर्निचितसीम्नि यथाऽसौ मारुतिर्वियति नान्तरमाप ॥ ५१ ॥

गुल्फदघ्नतनुरानिलिरासीन्मातुरुग्रवपुषः सरमायाः ।
प्रेक्ष्यते स्म पुनरुन्नतिशाली तेजसा सुरगणेन स एव ॥ ५२ ॥

प्रेर्यते न महता महतीयं भिद्यतेऽणिमगुणेन कदाचित् ।
इत्यधित्वरमनास्त्रसरेणोस्तुल्यतामगमदाशुगसूनुः ॥ ५३ ॥

व्यस्य वर्ष्म विकरालमथाराद्वानरं विहरमाणमणिम्ना ।
सा तमूर्ध्ववदना न विवेद व्युत्थितेव मतिरात्मरहस्यम् ॥ ५४ ॥

तां बिभेद घनपीवरकायां वायुसूनुरणुभावगुणेन ।
भित्तिमश्मघटितामतिभारान्मुक्तसंहतिमिवाम्बुभिरिन्द्रः[3] ॥ ५५ ॥

तद्व्यतिक्रमसमुत्थितमागः स्वस्य मार्ष्टुमुपगम्य तदानीम्[4] ।
एतदानिलिरनाकुलचेताः स्तोत्रमारभत संनतिपूर्वम् ॥ ५६ ॥

ओं नमोऽच्युतविरिञ्चिबिडौजस्त्र्यम्बकादिसुरसङ्घनतायै ।
तुभ्यमद्भुतवपुर्ग्रहलीलाक्लिन्नविश्वजनघोरभयायै ॥ ५७ ॥

सर्वधर्ममयि सर्वनमस्ये सर्वशक्तिसमवायिशरीरे ।
सर्वतोक्षिमुखि सर्वशरण्ये सर्वभूतपतिपत्नि नमस्ते ॥ ५८ ॥

---

१. BCD रेप्रतिपक्षान् । २. D सून । ३. A मतितापा DB मभितापा ४. A नृजुगे । D वांशु ।
५. BC DE read three lines more after this—एतदाह विहसन्हनुमांस्तामेष यामि भवतीं प्रणिपत्य । अग्रतो गतवतोऽस्य पुरस्तात्प्रादुरास विरसं हि रसन्ती ॥ राक्षसी जनभयङ्कररूपा कापि पापघटितेव दुराशा ।—and omit protion up to 91st sloka.

दुष्टदैत्यकुलमारि नमस्ते योगविभ्रमकुमारि नमस्ते ।
चाटुकारिमदनारि नमस्ते विष्टपैकवरनारि नमस्ते ॥ ५९ ॥

त्वां जगन्मतमहां महयामि त्वां जगत्कृतमहाबलिमीडे ।
त्वां जगत्प्रसविनीं प्रणमामि त्वां जगत्क्षयकरीमुपतिष्ठे ॥ ६० ॥

ब्राह्मि वैश्रविणि वैष्णवि रौद्रि स्कान्दि चान्द्रमसि चण्डि नमस्ते ।
कस्तव प्रतिविशेषमवैति स्तूयसेऽत्र वरदेति न केन ॥ ६१ ॥

त्वं सृजस्यवसि संहरसि त्वं त्वं बिभर्षि भुवनानि भवानि ।
त्वं निमीलयसि बोधयसि त्वं त्वं विचित्रगतिरीशितुरिच्छा ॥ ६२ ॥

विप्रकीर्णविकृतिः प्रकृतिस्त्वं त्वं विकल्पमलमोक्षशुचिश्चित् ।
सिद्धिरष्टगुणपल्लविनी त्वं त्वं विशुद्धिरुपमानदरिद्रा ॥ ६३ ॥

त्वन्मयोऽयमणुसङ्घविकारः त्वन्मयोऽयमहमित्यभिमानः ।
त्वन्मयं तदपि देवि दवीयस्तत्वमोमिति पदप्रतिपाद्यम् ॥ ६४ ॥

त्वं प्रसह्य विहतप्रसवेषोरर्धमर्धहिमधामधरस्य ।
देवि दीप्तपुरुषोत्तमलीलः श्रीपतिः सकल एव स च त्वम् ॥ ६५ ॥

ते त्वयैव परितः परिणद्धाः शक्तिभावततया लतयेव ।
बिभ्रतीदमवलत्वमुपेताः सद्म पद्मवसतेः शतमीशाः ॥ ६६ ॥

उद्यता हिमवतः शिखरीन्द्रात्त्वं त्रिवर्गफलवल्लिरपर्णा ।
त्वच्च नाकिनयनोत्सवकारी कन्दलः प्रभवति स्म विशाखः ६७ ॥

याजजूकवपुषो गिरिशस्य त्वं प्रतीच्छसि यथेच्छमुपेत्य ।
तं तमृग्यजुषमन्त्रपदोक्ता देवताऽनलमुखी मखभागम् ॥ ६८ ॥

जग्रसे गजतनुर्दनुसूनुर्गाढतानवपुषा वपुषा ते ।
अब्जकोशमृदुना महिषः प्राक् चुक्षुदे स च रणे चरणेन ॥ ६९ ॥

स्मेरमुग्धमुखचन्द्रमसा वा दीर्घवक्रदशनावलिना वा ।
येन तेन हृदि तिष्ठसि शम्भोरात्तमुक्तकरुणे करणेन ॥ ७० ॥

बुद्धिरूपिणि विरूपदृशस्तत्कौशलं किमपि देवि ददासि ।
येन दृष्टविपरीतविशेषः साध्यते स कथमप्यभिरूपैः ॥ ७१ ॥

यानिमानमृतभानुवलक्षानीक्षसे कपिकुमारक रङ्गान् ।
तेऽस्त्रमांसविरहान्मरुतोऽस्तास्तृष्णया मलयमूर्ध्नि मयैव ॥ ९९ ॥

त्वामहं विधुमिवाद्य निगीर्य स्वःपिशाचजननीसमनामा ।
निर्विशामि सुहितमततामङ्गी निस्तरङ्गमिदमम्बुधितल्पम् ॥ १०० ॥

इत्युदीर्य वचनं तमुदीर्णद्वादशार्ककिरणाधिकभासम् ।
सा महाप्रलयकालदिनान्तध्वान्तराजिनिविडा निजगार ॥ १०१ ॥

हा कुमारकमकालविपन्नं हा मरुद्गणवरौघविसर्गम् ।
हा तमादिपुरुषं जननादिक्लेशखेदितमकारणमेव ॥ १०२ ॥

नन्दिकेश जगतामशुभेन स्फूर्जति स्म स तवापि न शापः ।
कस्तरिष्यति भयङ्करमेवं वानरेषु जलराशिमिदानीम् ॥ १०३ ॥

कैकयि क्षयमुपैहि नृशंसे कोऽथवाल्पमनसस्तव दोषः ।
यूपरुद्धवसुधोऽपि स शोच्यः स्त्रीजितो दशरथः क्षितिपालः ॥ १०४ ॥

नन्द पौत्रविजयेन पुलस्त्य क्वापयाम कमलासन शाधि ।
त्र्यक्ष तुष्य स विगर्जतु मत्तैस्त्वत्प्रसादरभसः पिशिताशः ॥ १०५ ॥

दत्त हस्तमृषयस्त्रिदशानामंशुमान्निकृतिपांसुनिरुद्धः ।
इत्यवोचत नभश्चरलोकः कातरः कपिकुमारमपश्यन् ॥ १०६ ॥

तां विदार्य निरियाय हनूमानंशुमानिव घनाघनवीथीम् ।
अत्यदीपि च नृसिंह इवासृग्दिग्धपाणिशिखरो हरिसिंहः ॥ १०७ ॥

अन्तरीरितसमीरसुता सा पार्श्वयोरथ पृथक्पतिताभ्याम् ।
राक्षसी विकटवप्रनिभाभ्यां व्याप दूरमुदधिं द्विदलाभ्याम् ॥ १०८ ॥

तेन विस्मयमवाप सुरौघः कर्मणा दहनसूतसुतस्य ।
रावणस्य निधनं प्रति विश्वं व्यश्वसीत् प्रमुदितं च तदैव ॥ १०९ ॥

तां वागुरामिव दृढां दृढपीनवक्षाः संप्रेर्य वृक्षमृगयूथपतिर्बलेन ।
आसीदति स्म महते बतँ विद्रवाय स्थानीयमिन्द्रपुरचारु दशाननस्य ॥११०॥

इत्यभिनन्दकृतौ रामचरिते महाकाव्ये समुद्रलङ्घनो नाम षोडशः सर्गः समाप्तः ॥

---

१. B D नी सह । A नीं हसमाना । २. A D ळूनातु समं न । ३. D वन ।

इत्युदीर्य सरमा विरराम प्रस्तुतामचलदानिलिराशाम् ।
तस्य खेदमपहर्तुमथेमं पूर्वतोऽद्रिरुदियाय पयोधेः ॥ ८६ ॥

अत्यगात्तमगमङ्गुलिकोट्या मारुतिः प्रियगिरं परिरभ्य ।
न प्रतिष्ठितसमुद्धतभाराः शीतलत्वमुपयान्ति महान्तः ॥ ८७ ॥

अग्रहीदथ समुद्रपिशाची सिंहिका हनुमतः प्रतिबिम्बम् ।
संनिकृष्टनिधना शिशुमारीवामिषं मुखजुषो बडिशस्य ॥ ८८ ॥

इन्द्रजालमतनिष्ट महीयः सा पयोधिवसतिः पिशिताशी ।
यद्बिनाऽपि नभसि प्रतिबन्धाद्गन्धवाहसुतमाशु बबन्ध ॥ ८९ ॥

संभ्रमन्निपुणदृष्टिरधस्तात् पश्यति स्म कुपितः कपिवीरः ।
तामपूर्वगगनाध्वगदेहग्रासगर्धिविवृतानननगर्ताम् ॥ ९० ॥

अभ्यभाषत च तस्करि काऽसि क्रीडसीत्थमसुभिः किमिति स्वैः ।
एष पुच्छवलयाचितकायामुत्खनत्यनिलसूनुरितस्त्वाम् ॥ ९१ ॥

उन्नमय्य मुखमुल्बणमुल्का[1]वह्लिसंवलितचञ्चलजिह्व[2]म् ।
साऽथ वायुसुतमुत्कटदंष्ट्रायन्त्रनिस्व[3]नितमित्थ[4]मुवाच ॥ ९२ ॥

वानरस्य विदितेह न तेऽहं देहिनोऽनुदिनमाहरमाणा ।
सिंहिकेति रजनीचरसिंही सिंहलावधिजलस्थलरक्षी ॥ ९३ ॥

लावणेऽहमिह वारिणि रक्षश्चक्रवर्तिनियमान्निवसामि ।
चक्षुषाऽनलरुचाऽम्बरमार्गं मार्गितव्यविबुधं विदधाना ॥ ९४ ॥

दक्षिणाद्रि शिखरान्मलयाद्रेरासुवेलमघने[5] गगनेऽस्मिन् ।
अस्ति मे पवनपुत्र निरोद्धुं तावकं जनकमप्यधिकारः ॥ ९५ ॥

रक्ष्यतेऽम्बरपथोऽन्तिकलङ्कः क्वापयासि मम दत्तकलङ्कः ।
द्रागिमं बत पिबामि रविं वः कस्त्वमत्र विधृतप्रतिबिम्बः ॥ ९६ ॥

नाकसत्सु गिरिशात् प्लवगर्ते न क्षिपामि कमिवाननगर्ते ।
संमुखीनपथिकास्त्रपिबाऽहं भीषये तमपि काश्यपिवाहम् ॥ ९७ ॥

आहरामि लवणार्णवलीनैवान्तरिक्षपथिकानविचारम् ।
जीवशुल्कनिचयार्थं विदेहानप्यहं सुरगणानिह वेद्मि ॥ ९८ ॥

---

१. CD सृक्कं । २. A ह्वा । ३. BD ष्कलि । ४. BC त्थ । ५. C घने D नघो ६. C D मू
७. C D क्रति चयाय । ८. A न्विरणाब्धि ।

यानिमानमृतभानुवलक्षानीक्षसे कपिकुमारक रङ्कान् ।
तेऽस्त्रमांसविरहान्मरुतोऽस्तास्तृष्णया मलयमूर्ध्नि मयैव ॥ ९९ ॥

त्वामहं विधुमिवाद्य निगीर्य स्वःपिशाचजननीसमनामा[1] ।
निर्विशामि सुहितमततागी निस्तरङ्गमिदमम्बुधितल्पम् ॥ १०० ॥

इत्युदीर्य वचनं तमुदीर्णद्वादशार्ककिरणाधिकभासम् ।
सा महाप्रलयकालदिनान्तध्वान्तराजिनिबिडा निजगार ॥ १०१ ॥

हा कुमारकमकालविपन्नं हा मरुद्गणवरौघविसर्गम् ।
हा तमादिपुरुषं जननादिक्लेशखेदितमकारणमेव ॥ १०२ ॥

नन्दिकेश जगतामशुभेन स्फूर्जति स्म स तवापि न शापः ।
कस्तरिष्यति भयङ्करमेवं वानरेषु जलराशिमिदानीम् ॥ १०३ ॥

कैकयि क्षयमुपैहि नृशंसे कोऽथवाल्पमनसस्तव दोषः ।
यूपरुद्धवसुधोऽपि स शोच्यः स्त्रीजितो दशरथः क्षितिपालः ॥ १०४ ॥

नन्द पौत्रविजयेन पुलस्त्य क्वापयाम कमलासन शाधि ।
त्र्यक्ष तुष्य स विगर्जतु मत्तस्त्वत्प्रसादरभसः पिशिताशः ॥ १०५ ॥

दत्त हस्तमृषयस्त्रिदशानामंशुमान्निकृतिपांसुनिरुद्धः ।
इत्यवोचत नभश्चरलोकः कातरः कपिकुमारमपश्यन् ॥ १०६ ॥

तां विदार्य निरियाय हनूमानंशुमानिव घनाघनवीथीम् ।
अत्यदीपि च नृसिंह इवासृग्दिग्धपाणिशिखरो हरिसिंहः ॥ १०७ ॥

अन्तरीरितसमीरसुता सा पार्श्वयोरथ पृथक्पतिताभ्याम् ।
राक्षसी विकटवप्रनिभाभ्यां व्याप दूरमुदधिं द्विदलाभ्याम् ॥ १०८ ॥

तेन विस्मयमवाप सुरौघः कर्मणा दहनसूतसुतस्य ।
रावणस्य निधनं प्रति विश्वं न्यश्वसीत् प्रमुदितं च तदैव ॥ १०९ ॥

तां वागुरामिव दृढां दृढपीनवक्षाः संप्रेर्य वृक्षमृगयूथपतिर्बलेन ।
आसीदति स्म महते व[2]र्तं विद्रवाय स्थानीयमिन्द्रपुरचारु दशाननस्य ॥११०॥

इत्यभिनन्दकृतौ रामचरिते महाकाव्ये समुद्रलङ्घनो नाम षोडशः सर्गः समाप्तः ॥

---

१. B D नी सह । A नीं हसमाना । २. A D त्वनातु सर्म न । ३. D वन ।

# अथ सप्तदशः सर्गः ॥

तां गान्धवाहिर्गगनस्थ एव श्रुताधिकाभोगमयीमपश्यत् ।
दूरोच्चलन्नाकवधूनिकारसांराविणीं रावणराजधानीम् ॥ १ ॥

यां सिन्धुमध्ये दिशि दक्षिणस्यां चक्रेऽलकाभर्तुरमर्त्यशिल्पी ।
सर्वात्मविज्ञानवसुव्ययेन विस्रम्भलीलावसतिं द्वितीयाम् ॥ २ ॥

या लोलकल्लोलभुजस्य सिन्धोरुत्तानसुप्तस्य गिरौ त्रिकूटे ।
ललास लीलोच्चै[१]सुवेलमूर्ध्नि मन्दोदरीवोरसि रावणस्य ॥ ३ ॥

सदा जयस्मेरै[२]निशाचरेन्द्रसंसर्गदोषादिव या विजित्य ।
द्वाराननैः सागरघोषगर्भैः दशापि दिक्पालपुरीर्जहास ॥ ४ ॥

या रत्नविन्यासविचित्रहेमप्राकारमालावलयेन रेजे ।
सन्ध्याभ्रै[३]राजीभिरिवोज्ज्वलाभिर्मध्ये कृता मूर्तिरशीतरश्मेः ॥ ५ ॥

यस्यां लसद्देवकुलोज्ज्वलायां बलिप्रयुक्तोऽपि स तूर्यघोषः ।
सन्नाहसन्देशभियं ददानो दिवं द्रवद्देवकुलां चकार ॥ ६ ॥

बीभत्सकेलीरसचञ्चलानां विलासिनामुत्सवडम्बरेषु ।
यत्रोपहासैकपदं बभूवुः ब्रह्मर्षयः स्वस्त्ययनोपपन्नाः ॥ ७ ॥

यस्यां महावेश्मसु पद्मरागग्रावोत्करस्याजिरवेदिभाजः ।
असृग्भुजामाविरभूत्प्रभाभिरसृक्पयोराशिरिवाम्बुराशिः ॥ ८ ॥

तृणोद्गमैर्भिर्गरुडोपलानां प्रतोलिकावेश्मसु रश्मिजालैः ।
यत्राजनि क्वापि सुधाशनानां सुधामहोत्साहकृतः प्रमोदः ॥ ९ ॥

यस्यां क्वचित्केतकसूचिभासश्चकाशिरे चन्द्रशिलावलभ्यः ।
विलोक्यमानाश्चिरविप्रलुप्तस्वकीर्त्यभिज्ञानरसादमर्त्यैः ॥ १० ॥

क्वचिच्च यस्यामसितोपलाट्टच्छलेन दूरोच्चलितोऽन्धकारः ।
चक्षुर्गतं राक्षसदम्पतीनामालोकमर्कैभिजनं जहार ॥ ११ ॥

१. BC वेलेव २. BCD स्वर्गीयसस्मा । ३. A अमर्त्य । D अन्योन्य । ४. ABC त्तपोभिः
५. BC ल्पा D पला । ६. BCD द्वास्वाद, । ७. BCD कर्मा ।

यस्यामकल्याणविधानकल्यः कल्याणकार्तस्वरमन्दिरेषु ।
प्रकामभीरुनकुतोभयत्वाज्जहास देवान् क्षणदाचरौघः ॥ १२ ॥

यस्यां जहुः सादरशक्रसान्त्वशीतेन सिन्धोर्लहरीरवेण ।
दशास्यदुर्वाग्विषवर्षदुःखं दिवौकसः संसरणस्थलीषु ॥ १३ ॥

यत्रासितः स्वद्युतिमोषदोषाद्ध्रुवं निरस्तो रजनीचरीभिः ।
जगाम जम्बालकुलानुकारं रथ्यासु रत्नप्रकरोऽशुलोऽपि[3] ॥ १४ ॥

विशुद्धगल्वर्कमहागृहेषु बहिर्मुखं यत्र महश्चकासे ।
आनीतमाकृष्य निशाचरेन्द्रैर्यशः सुराणामिव गन्तुकामम् ॥ १५ ॥

आलिङ्गनात्प्रागपि यत्र गाढात्प्लवङ्गलाङ्गूलहुताशनस्य ।
हैमैर्गृहाशोकवनैर्विनिद्रैर्दिदीपिरे दिग्वनितामुखानि ॥ १६ ॥

ज्वलन्महानायकचक्रवालास्ते ते परिस्कन्दगृहान्तिकेऽपि ।
भेजुर्बहिष्कारमपूर्वरागाच्चिरोषिता यत्र परिच्छदौघाः ॥ १७ ॥

आयस्तवैदूर्यमयानि यस्यां प्रांशुप्रवालव्रततीवृत्तानि[6] ।
शिरःप्रतिष्ठापितशातकुम्भकुम्भानि शाखास्वपि मन्दिराणि ॥ १८ ॥

रुचोऽधिका यत्र चतुष्पथेषु रक्तोपलानुत्किरतोऽत्यधावन् ।
निरस्तसास्रक्पिशितभ्रमेण रक्षांसि रत्नेषु निरुत्सुकानि ॥ १९ ॥

केलिक्रमायातकलाविवादनिर्विघ्नविद्याधरमण्डलानि ।
यस्यां बभुः शौर्यगुणानुरागगम्यानि पण्य[10]प्रमदापुराणि ॥ २० ॥

चतुर्दशानां भुवनेश्वराणां महोपदाश्चिक्षिपुरन्यपेक्षाः ।
यत्र स्वसंपातनिरोधदोषाद्दशाननद्वारसदः प्रवीराः ॥ २१ ॥

दुर्वारशूलाः सुलभार्धचन्द्राः तपस्विनः कृत्तिकरङ्कमात्राः ।
अशक्तयो यत्र शिवत्वमापुः वैलक्ष्यभस्मच्छुरिताः सुरौघाः ॥ २२ ॥

हिंसाधिकारं दधुरन्तकस्य यत्राधिकारम्भजुषो नृशंसाः ।
शमाधिकारं कदनप्रकारं सदाधिकारं मरुतामपाये ॥ २३ ॥

---

१. CD माद २. AB तुलानि । ३. A लोपी. D लेपी । ४. ABC पर्यङ्क । ५. A मारात्क्षणोच्चिषि । ६. A ती । ७. AD आबाधकान्य । ८. A रुस । ९. BC संराव । १०. AD पुण्यानि मन्ये ।

उपागताः पुण्यजनेश्वरेषु निरूपणायेव मिथो गुणानाम् ।
चिह्नानि चारूणि विवव्रुरुच्चैर्यत्रर्तवः स्वानि समानकालम् ॥ २४ ॥

शशिप्रभां रक्ष तमः क्षमस्व प्रसीद मुग्धासु कुमुद्वतीषु ।
चकार यस्यामिति राक्षसेन्द्रात् प्रकम्प्यमानस्तपनस्तपस्वी ॥ २५ ॥

निद्रां यथा गच्छति कुम्भकर्णः कर्णं यथा गच्छति मेघनादः ।
यथा दिशः पश्यति जम्बुमाली काली तथा यत्र सदा जगर्ज ॥ २६ ॥

अधिक्षपं सौधशिरस्तलेषु कुतूहलावर्जितविग्रहाणाम् ।
अलम्बत च्छन्दचरः सुदूरं यत्रोपधानाय विधुर्वधूनाम् ॥ २७ ॥

क्रीडाधिकारश्रमसालसाङ्गीर्यस्यां बहिर्वीथिजुषः सिषेवे ।
स्वैरानिलोत्सङ्गसलीलनीतैर्वारां कणैर्वारवधूः पयोधिः ॥ २८ ॥

जितोज्झितानां जगतां शुभाय सभां सदा यत्र पुलस्त्यमिश्राः ।
दूरोच्चलद्दुर्ललितप्रवीरामपि प्रणुन्नप्रणयाः परीयुः ॥ २९ ॥

यत्रोच्चवीचीचयचुम्बितेन्दोः सिन्धोः श्रियं कामपि तामपश्यन् ।
हर्म्यावलीनां प्रमदाः प्रदोषप्रसन्नमाकाशतलं भजन्त्यः ॥ ३० ॥

यस्यां मनस्सङ्गमनोहरेषु प्रक्ष्वेषु तस्यामपि दुर्दशायाम् ।
अचेतना इत्यमराः प्रतीयुरनुत्तरास्तोरणसालभञ्जीः ॥ ३१ ॥

ते ते जगज्ञामजयप्रगल्भाः स्वमन्दिरेषु प्रमदासमक्षम् ॥
यस्यामजीयन्त परं प्रसह्य रक्षोयुवानः कुसुमायुधेन ॥ ३२ ॥

चलेषु वायोः प्रतिघेषु वह्नेः ध्यानेषु धातुः कदनेषु मृत्योः ।
रतेषु यस्यां मदनस्य चासीदहर्निशं द्रागिति संनिधानम् ॥ ३३ ॥

रहस्समेतैः क्षणदाचरेन्द्रैरहस्समे रत्नरुचा निशीथे ।
ददे बताज्ञाऽधिसभं समन्तादवेतासंचरणाय यस्याम् ॥ ३४ ॥

तामन्तरिक्षादवतीर्य दूरं पुरीमदूरादवलोकमानः ।
सविस्मयश्चिन्तयाति स्म तूष्णीमिति क्षणं स प्रतिभानशाली ॥ ३५ ॥

ममामरावत्यनुभूतपूर्वा पुरी न साऽपि प्रतिगर्जतीमाम् ।
ध्रुवं स निर्माणकरस्य दोषो दोषाचराणां वसतिर्यदेषा ॥ ३६ ॥

१. AB शमाय । २. BCDE गे । ३. BCDE नन्तरं तो ४. ABD व । ५. A प्राणिषु । ६. A दिन ।

सौम्यः समन्तादयमम्बुधिश्चेदयं गिरिश्चेदनघः सुवेलः।
अयं पुनः किं विहितः पुरोऽस्याः पातिः प्रतिज्ञातजगद्विलोपः॥ ३७॥

मूर्तिः सुधांशोरिव लाञ्छनेन पटीरवल्लीव भुजङ्गमेन[1]।
लक्ष्मीरिवोत्कर्षवती मदेन पूर्दूषितेयं दशकन्धरेण॥ ३८॥

तामेकपत्नीं रघुनन्दनस्य निशाचरस्त्रीपरिषत्परीताम्।
आसादयिष्यामि कथं पुरेऽस्मिन्विद्यामविद्यापिहितामिवाहम्॥ ३९॥

किमित्थमेवावतरामि तूर्णमथार्णवाभ्यर्णवने[2] भवामि।
सुवेलशृङ्गेषु दिनस्य शेषं नयामि निर्वर्णितनिर्गमो वा॥ ४०॥

इमं ममाम्भोनिधिलङ्घनार्थमतिप्रवृद्धं न शरीरभारम्[3]।
जानेऽष्टदिङ्नागधृतां धराऽपि प्रतीच्छतीयं कियती पुनः पूः॥ ४१॥

संक्षिप्तमेतर्हि करोमि देहं विदेहराजस्य सुतां चिनोमि।
महान् बहिस्तिष्ठति संकटेषु क्षुद्रोऽधिगच्छत्यवकाशमाशु॥ ४२॥

इत्थं पुरेऽस्मिन्निपताम्यहं चेन्नक्तंचराः किंस्विदिति द्रवन्ति।
वीक्ष्य च्युतं मां गगनादकस्मादार्या न विश्वासमुपैति साऽपि॥ ४३॥

इदं ध्रुवं राजकुलं पुरस्तादेतानि शुद्धान्तगृहाणि नूनम्।
अमूनि मन्ये गगनं लिखन्ति श्रीमन्ति सामन्तनिकेतनानि॥ ४४॥

इमां किमह्नाय बलादरातेः सीतावशेषां नगरीं करोमि।
किमुद्धृताधारमहीध्रमूलामादाय गच्छामि यथागतं वा॥ ४५॥

अपि प्रदेशं जगतः सुगुप्तं सप्तार्चिषः सूत इव त्वरावान्।
रामस्य दूतः पुरमेतदेष्यन्नणोरणीयानथवा भवामि॥ ४६॥

रक्षो[5]वनेऽस्मिन्मनुजेन्द्रसूनोः सीतेति सन्देहमसूनुपेतान्।
अहं यते मार्गितुमभ्युपायैंसिद्धार्थबीजानि किरन् कराभ्याम्॥ ४७॥

अहो चर्या[6]ः कीकसपर्वतानामहो घनाः शोणितनिर्झरिण्यः।
अहो मनोज्ञान्यपि मन्दिराणि परीत्य घोरा कुणपाटवीयम्॥ ४८॥

१. BCDE व्यालेन वल्ली मलयोद्भवेव। २. BD जनेऽथवाभ्यर्णचरे। ३. A जाम्। ४. ABCE च।
५. A यः B यं। ६. A भर।

यत्सत्यमन्तर्जनयन्ति कम्पमस्माद्दशोऽपि प्रथमावतारे ।
कोलाहलिन्यः क्षणदाचराणामिमा महामांसपणा विपण्यः ॥ ४९ ॥

ध्रुवं द्रवद्धीरुविलोक्यमानान्याकल्पसान्द्राङ्गलवान्यमूनि ।
धारास्त्रयोग्यापिशुनानि रक्षोवीरार्भकाणां खुरलीखलानि ॥ ५० ॥

किमस्तमस्त्येव गतो विवस्वानिन्दोरकस्मादुदयः किमुच्चैः ।
किमूष्मदारिद्र्यमिदं कृशानोः किमत्र सन्तीव न तातपादाः ॥ ५१ ॥

अत्रेदमुच्चैः कदनं द्विजानां बन्दीरवः स्वर्गसदामिहायम् ।
अत्रैष निन्दारभसः श्रुतीनामनागसीह क्व पदे पतामि ॥ ५२ ॥

किमत्र पश्यामि किमत्र लीये किमत्र वाणीः करुणाः शृणोमि ।
मूलं महस्योपलभे मुहूर्तं किमत्र मादिग्नेनिवेदितस्य ॥ ५३ ॥

किमुत्सवानुत्सर्वजातरङ्गान्मन्दोच्चलद्गीतकलातरङ्गान् ।
पश्यामि रक्षोविटमण्डलीनां कृत्वा तनुं निष्कुटखण्डलीनाम् ॥ ५४ ॥

यत्रैव तत्रैव पतामि तावदस्त्येव मे पावनमेनसोऽस्य ।
द्रक्ष्यामि यत्तां जगदेकभर्तुः महानुभावां महिषीमिहैव ॥ ५५ ॥

संपूर्णकल्पेऽपि मनोरथेऽस्मिन्मनः प्रयच्छामि न संमदस्य ।
प्रहर्षलोलस्य हि लावसंज्ञाः पतत्रिणः पाणिगताः प्रयान्ति ॥ ५६ ॥

अयं चिरान्नन्दसि वालिपुत्र निवर्तसेऽद्याधिगतप्रवृत्तिः ।
सैन्यं तवोन्मग्नमयोगपङ्कात्लङ्का करक्रोडगता ममेयम् ॥ ५७ ॥

समर्थितः कोऽस्मि रघूद्वहेन किं मे सुमित्रातनयोऽद्य वक्ति ।
ध्रुवं ममैकस्य विलम्बदोषात्कपीश्वरः कुप्यति यूथपेभ्यः ॥ ५८ ॥

किं भूयसा वा मम चिन्तितेन तत्रैव तावद्दिवसं नयामि ।
यत्र स्थितः स्पष्टचतुर्विभागां पुरीं करस्थामिव रूपयामि ॥ ५९ ॥

इत्यादि स व्योमनि संप्रधार्य कार्यं मनीषी मनसैव दीर्घम् ।
सामान्यशाखामृगमात्रमासीदुत्रासनाभीर्नगसानुमूर्ध्नि ॥ ६० ॥

---

१. BC D नसाकल्यसान्द्राप्रवणा । or न्द्रश्रवणा २. A स्र । ३. BC D सन्ध्ये । ४ C. D. तुक । ५. A B लोल ६. A. पंत । ७. A क्रा । ८. A पाकमात्रस्तलास्तनाडी ।

त्रीणि त्रयीत्राणसहः[1] पुरस्ताल्लोहार्गलान्यैक्षत गोपुराणि ।
तत्रादरादत्तमहाकवाटं दृष्ट्वोत्तरद्वारमसौ जहास ॥ ६१ ॥

स पुष्पकादीनि ककुप्पतिभ्यो दशाननेन प्रसभं हृतानि ।
अपश्यदत्यद्भुतकल्पनानि विमानरत्नानि च तानि तत्र ॥ ६२ ॥

सद्यो हृताः का अपि कातराङ्गीः तत्र क्रमात् का अपि निर्विशङ्काः ।
सुराङ्गनाः का अपि सोऽभ्यपश्यत् कारासु कारुण्यविमुक्तकण्ठीः ॥ ६३ ॥

स तत्र तत्राशनिशक्तिशूलशस्त्रीगदामुद्गरखड्गपाणीन् ।
वल्गवीक्ष्य प्रमनाः प्लवङ्गः साङ्ग्रामिकान्यामिकयातुधानान् ॥ ६४ ॥

तामीक्षमाणो नगरीमकस्मात्स विस्मयाद्विस्मयमाससाद ।
यदेकतः कान्तपवित्रवेषान्विभीषणस्याभिसराँन्ददर्श ॥ ६५ ॥

अत्रापरा केयमिति ब्रुवाणो मखाग्निधूमावलिमीक्षते स्म[2] ।
तत्त्वस्पृशः क्वापि च सोऽभिलापानभीक्ष्णमाकर्ण्य शिरो दुधाव ॥ ६६ ॥

शुश्राव शय्यागृहगह्वरान्तःपुरातिरिक्तानि पुरि भ्रमन्ति ।
स कुम्भकर्णस्य जितार्णवोर्मिसंघट्टघोषाणि च घोरितानि ॥ ६७ ॥

दर्पः शरीरीव दशाननस्य तेन प्रधानप्रतिहारमूले ।
अदर्शि देवर्षिकदम्बकानां दिशन् गलेहस्तमथ प्रहस्तः ॥ ६८ ॥

महोदरेणादरदत्तपाणिर्विश्राणिताध्वा शुकसारणाभ्याम् ।
तेन भ्रमन्विभ्रमकेकराक्षो रक्षोयुवाऽदृश्यत जम्बुमाली ॥ ६९ ॥

श्यामः सुदंष्ट्रोऽरुणवञ्जुलांससन्धिः[5] सम्मुद्राहितबर्बरीकः ।
तस्याविरासीत् पुरतः प्रवीरः कुमारचूडामणिरक्षनामा ॥ ७० ॥

कथं कथंचिज्जितकोपवेगो नयप्रकोपं न कपिर्विषेहे ॥
चिकीर्षति स्म श्रुतभूतनाम्नो नरान्तकस्यान्तमसौ तदैव ॥ ७१ ॥

रोषानलः संप्रति मे घनादस्तदत्र हव्यं भव मेघनाद ।
इतीन्द्रजिद्दर्शनकोपितेन चक्रे रयश्चेतसि कोपि तेन ॥ ७२ ॥

१. BCDE मयः । २. A रन्यस्त । ३. B नुच ४. BC स वीक्षतेस्याहुतिधूमलेखां । ५. A दक्पलाशस्रग्वी । ६. A चर्वे ।

सस्मार कार्यं विजहौ विकारं हरिप्रवीरः स तथैव तस्थौ ।
विजेतुकामा हि परं परार्ध्याः स्वात्मानमेव प्रथमं जयन्ति ॥ ७३ ॥

शुश्राव तत्र स तदाऽऽभिमुखीनकार्यः पर्यन्तसंसरणदेशजुषां पशूनाम् ।
सांराविणं निकटरावणमृत्युशंसि स्मेरो विरोदनविराविरङ्गरौद्रम् ॥ ७४ ॥

वामेतरेक्षणपुटस्फुरितप्रहृष्टः शृण्वन्नदक्षिणशिवारसितानि वीरः ।
तत्रैव सोऽधिगमनीयपुरव्यवस्थः तस्थौ प्रदोषसमयं समुदीक्षमाणः ॥ ७५ ॥

इत्यभिनन्दकृतौ रामचरिते महाकाव्ये सुवेलशृङ्गाधिष्ठानो नाम
सप्तदशः सर्गः समाप्तः ॥

---

नाश्चर्यमावहति कस्य चराचरेऽस्मिन् श्रीहारवर्षनृपचन्द्रमसः प्रभावः ।
येनानिशं ललितकोमलकाव्यमूर्तिः( र्तेः )सृष्टोऽभिनन्दकुमुदस्य महाविकासः ॥

किं शीधुभिर्भवतु फाणितशर्कराद्यैः किं वा सितासहचरैः क्वथितैश्च दुग्धैः ।
दुग्धाऽब्धिलब्धसुधयाऽपि न किंचिदेव यत्राभिनन्दसुकवेर्विचरन्ति वाचः ॥

---

१ A निशीथ २ BCE read these two slokas ।

# अथाष्टादशः सर्गः ॥

अनन्तरं जम्बुकदिङ्मुखातिथेस्तमःपरिष्वङ्गसहस्य भास्वतः ।
नवास्रशोणीर्लिलिहुर्निशाचरा विलोचनैर्मूलमयूखमञ्जरीः ॥ १ ॥

स्फुटत्विषा पश्चिमसन्ध्ययाऽर्पितप्रकामबिम्बाधरमुद्रिकारुचिं ।
ददौ दशां विंशतिमंशुमल्लयोर्दशाननश्चारुणि वारुणीमुखे ॥ २ ॥

विलोक्य सन्ध्यातपलोहिनीर्दिशो दशाननः स्वं स्मरति स्म साहसम् ।
स येन चक्रे निजकन्धराटवीनिवेशितासिर्जगदस्रपाटलम् ॥ ३ ॥

अनृत्यतेवाद्भुतरौद्रमुच्चकैर्निशाचरेन्द्रं प्रति पश्चिमाशया ।
प्रदीर्घसन्ध्यारसनाग्ररोपितस्फुरत्प्रचण्डद्युतिमण्डलाग्रया ॥ ४ ॥

निवर्त्य परादपरस्य वारिधेरनुव्रतं वासरमेकबान्धवम् ।
विवेश गम्भीरमगारमप्पतेर्विनीतपादप्रसरः प्रभाकरः ॥ ५ ॥

तथोल्लसद्दीधितिजालडम्बरादलम्भि नारादपि यो विलोकितुम् ।
स एव सायं नयनैरलङ्घ्यत त्विषां निधिः को नियतेरगोचरः ॥ ६ ॥

पतङ्गबिम्बं पतदम्बरोदराद्बभार मूर्ध्ना चरमक्ष्माधरः ।
सुशिक्षिताः कर्तुमनुत्तमौजसां महान्त एवापदि पर्युपासनम् ॥ ७ ॥

रराज लाक्षारसरक्तमम्बरं बभुः प्रवालाभरणा दिगङ्गनाः ।
चकासिरे तत्क्षणमूर्मयोऽम्बुधेः पुनः प्रसर्पन्मधुकैटभासृजः ॥ ८ ॥

विलम्बमानारुणभास्कराननो निमीलितोद्दामविकासिपुष्करः ।
जगाम धीरं परिणामरम्यतामहःकरी रोधसि पश्चिमोदधेः ॥ ९ ॥

बबन्ध मुद्रामलसा सरोजिनी कुमुद्वती कोशमदर्शयन्निजम् ।
समेत्य शिश्ये कलहंसमण्डली वितत्य चक्राह्वयुगानि चुक्रुशुः ॥ १० ॥

शनैः स्वनन्निश्चलकण्ठकन्दलाश्चलत्पतत्राद्वितयाग्रपाणयः ।
विचित्रराजीरचना मनीषिणः सुखं खगाः खेन दिशः प्रतस्थिरे ॥ ११ ॥

---

१. D मी २. A म । ३. A रा ४. B D चिः । ५. A यां C D या ६. D भ्रगणा । ७. A जद्व । ८. BC श्वस ९. B ल ।

शनैरनेहःकरपत्रभिन्नयोर्मिथः पृथक्स्रस्तमृणालभङ्ग्योः[1] ।
विहङ्गयोः सङ्गमदत्तनीरयोर्भवान्तरप्रायमभूद्दिनान्तरम् ॥ १२ ॥

असृङ्नदीसंनिभसन्ध्यमुल्लसत्तमःकचश्रेणि घनोडुकीकसम् ।
विचेतुमीये[2] रभसान्निशाचरैः समाप्तसङ्ग्राममिवाम्बराङ्गणम् ॥ १३ ॥

ययौ लयं मूर्ध्न्यपरस्य भूभृतः सुवेलसानौ हनुमानिवांशुमान् ।
ततस्तिरस्कारमलम्बयद्दिशो दशाननच्छन्दमिवोध्दुरं[3] तमः ॥ १४ ॥

क्वचित् किरातीकचपाशमेचकं क्वचिच्च कक्षानलधूमधूसरम् ।
क्वचित्तमालद्रुमखण्डसंनिभं[4] नभोऽग्रहीत्क्वाप्युपमातिगं तमः ॥ १५ ॥

न पेतुरल्पेषु न भेजुरन्तरं विदूरवस्तुग्रहणोद्यमं जहुः ।
क्रमेण घोणाग्रमपि स्वगोलकान्न चक्षुषामीक्षितुमैशतांशवः ॥ १६ ॥

क्वचित्प्रसूतं क्वचिदाप्तयौवनं क्वचित्प्रवृद्धं क्वचिदुद्धुरं तमः ।
क्वचित्प्रहृष्टेष्टजनीशतांशिषां कथंचिदासीदविशेषभाजनम् ॥ १७ ॥

अतीत्य नक्तंचरतस्करावलीं पुनर्दिनेशाय समर्पयिष्यता ।
जगद्विशेषप्रचयः प्रथीयसि न्यधायि कालेन तमोनिचोलके ॥ १८ ॥

कुलाङ्गनाः स्वेदुरुपोढसाध्वसाः तदा सदीपेष्वपि धामसु ध्रुवम् ।
जगाम संकेतभुवस्तमस्वतीरदृष्टलोकद्वितयोऽसतीजनः ॥ १९ ॥

कयापि लब्धं जनसंनिधौ रहः कयापि निष्क्रान्तमभव्ययैव सुखम् ।
कयापि तत्पूर्वमचुम्बि संभ्रमादुपास्थितो जारधियाऽऽत्मनः पतिः ॥ २० ॥

जनं न पप्रच्छ निषेधपण्डितं प्रमाणमिच्छामकरोत्प्रमादिनी ।
विमार्गपातत्वरया तमश्चयं विवेश सूचीमुखदुर्लभान्तरम् ॥ २१ ॥

तमःसवर्णं विदधे विभूषणं निनाददोषेण नुनोद नूपुरम् ।
प्रतीक्षितुं न स्फुटचन्द्रिकाभयादियेष दूतीमभिसारिकाजनः ॥ २२ ॥

अपि प्रियालोकनलोलयाऽन्यया निजौकसि ज्येष्ठभुजङ्गदुर्भगाः ।
तमिस्रसन्तोषदरिद्रया धगित्यभीशवः प्रोद्गमिता निशापतेः ॥ २३ ॥

१. A B थाहःकरपात । २. B C D ष्टे । ३. A मिवावरं । B C चरस्त । ४. A मण्डितं । ५. A पांचुम्बितु ६. A दीपेष्वसतीजना । ७. A व । ८. B C थं । ९ B C यस्स । १०. D नन्य । ११. A नमार्ग.

चिरं प्रदीप्योपरतार्कपावकं[1] निशाम्बुसंभिन्नतमोमषीचयम् ।
अलंचकाराम्बरकच्छं[2]मग्रतः प्रकामशुभ्रा शशिकान्तिकन्दली ॥ २४ ॥

सितारुणैरिन्दुमहोभिरौदयैः पयोभिरच्छै[3]रिव यावकाविलैः ।
सिषेच सोच्छ्वाससुखी शतक्रतोर्दिगन्धकाराञ्जनदिग्धमम्बरम् ॥ २५ ॥

सुखेन पूर्वाद्रिललाटविस्फुरद्विधुप्रभा चन्दनपङ्कभक्तिर्नी[4] ।
रराज सा रावणमोहकारिणी निशा वृषाभ्यासवर्तीव कन्यका ॥ २६ ॥

अथ प्रथीयस्युदये महीभृति क्षणादकस्मादपि[6] दूरमुच्चयौ ।
तुषारभानुः परिपूर्णकामिनीमुखोपमावाप्तिमहामनोरथः ॥ २७ ॥

विधूदयेऽभूद्दिवसांगम[7]भ्रमः प्रकाशवेगात् खगयोर्वियोगिनोः ।
न्यवर्ति नीहारनिपातनामभिर्ज्वलद्भिरङ्गारचयैस्तयोरसौ ॥ २८ ॥

त्रिनेत्रनेत्राग्निविदाहवेदनाविनोदहेतोरिव सत्वरागतम् ।
दधानमन्तर्मदनं मृगच्छलाल्लुलास पीयूषमयूखमण्डलम् ॥ २९ ॥

अराजदारुह्य दिवं दवीयसीं शशीति जीवः स मनोभुवः स्फुटम् ।
चकार यः शम्भुललाटलोचनक्रुधेव निर्वाणमशेषनेत्रगम् ॥ ३० ॥

रराज सा चन्द्रमयूखमालिनी निशेति कालस्य गतिर्निरत्यया ।
विशुद्धबोधाभरणा मनीषिणः क्रियेव दाहश्रमशान्तिशीतला ॥ ३१ ॥

सुभूषितां मूर्तिमिवोद्गतो गुणः श्रुतप्रदीप्तामिव संविदं शमः ।
विचित्रनक्षत्रविमानमालिनीमलंचकार क्षणदां क्षपाकरः[10] ॥ ३२ ॥

मृणालकण्ठीष्विव मानसालयः सितैकपद्मः कुमुदाटवीष्विव ।
कथास्विवानन्दरहस्यै[11]विस्तरो रराज तारासु तुषारदीधितिः ॥ ३३ ॥

स्मरास्थिभिः सृष्टमिवामृतोक्षितैः स्मरद्विषः शेखरमम्बराकृतेः ।
स्मराज्ञयाऽऽलोकत सादरं न कः स्मराग्निसन्दीपनमिन्दुमण्डलम् ॥ ३४ ॥

ततोडुपुष्पं शशिपूर्णकुम्भवद्धृतान्धकारावकरं समन्ततः ।
उपेष्यतोऽर्कस्य कृते नु तत्क्षणात् कृतं त्रियामाङ्गनया नभोङ्गणम् ॥ ३५ ॥

१. A नं । २. A क्ष । ३. A स्चै । ४. A वर्णकभस्तिराजिना । ५. A विभाषावसती ।
६. A संमानिवि । ७. B दिवसंगम ८. A देहे ९. B C सुरत्नदीप्रा । १० A निशा ११. A सैकं

अपि क्षपायामभिलङ्घ्यमुच्चकैः कुतोऽन्धकारः परितो मणिप्रभाः ।
पिपेष पिष्टं पुनरस्त्रसृग्भयान्निषेदुषी वेश्मसु बालकौमुदी ॥ ३६ ॥

बभुर्विदूरादजिरेषु रेजिरे चिरं निषेदुर्निकटेषु वेश्मनाम् ।
ययुः क्रमाद्दीधितिपल्लवा विधोः वधूविलासप्रतिकर्मसाक्षिताम् ॥ ३७ ॥

नखेष्वमूर्छन् कुचयोश्चकाशिरे कपोलयोः पल्लविता इवाभवन् ।
स्मितेषु तेनुर्मृगशावचक्षुषां निशापतेः कामपि कान्तिमंशवः ॥ ३८ ॥

सखि स्वसः स्वामिनि पुत्रि पाहि नः किमुज्झसीमां जननीमवत्सले ।
इति प्रवृद्धे शशिना सहागमन्वियोगिनीवेश्मसु कातरा गिरः ॥ ३९ ॥

तथा सुधौतं वरयोषितां मनः सुधांशुना मानकषायरूषितम् ।
प्रियेषु तेष्वेव विनाऽनुनाथनैर्यथा पुनर्द्रागतिरागमग्रहीत् ॥ ४० ॥

प्रसीदतासीदत चन्द्रिकातपे चिरं मिथः संस्तुत शीधु सोत्पलम् ।
इति क्षपानाथनिदेशनादिव प्रियापराधान् प्रमदा विसस्मरुः ॥ ४१ ॥

न चन्दनं चन्द्रमरीचयो न ते न चन्द्रबिम्बप्रतिमोज्ज्वलं मधु ।
मनोऽबलानामहरन् विना प्रियैर्न चन्द्रकान्तोपलचत्वराणि च ॥ ४२ ॥

चिरं तदाऽध्यास्त मनोभवज्वराद्विमानपृष्ठं रजनीचरेश्वरः ।
मधूनि चन्द्रातपसङ्गशीतलान्यजस्रशोषैरनुशीलयन्मुखैः ॥ ४३ ॥

मधु क्षरेति द्विजराजमब्रवीन्मुखैरनङ्गज्वरधूसराधरैः ।
विचेतुमुच्चैरुपदंशकारणादियेष ताराः श्लथकङ्कणैः करैः ॥ ४४ ॥

मुखैरतुष्यन्न तदात्मयोषितामियाय तृप्तिं न च शीतरोचिषा ।
विचिन्तयामास विरूढवेपथुः स मैथिलीवक्त्रसरोरुहश्रियम् ॥ ४५ ॥

अयं विशायः सुरसिद्धयोषितां निशाचरीणां निभृतोऽस्तु संचरः ।
उपेत्य जोषं त्रिजटाऽनुयुज्यतां किमाह सा संप्रति मुग्धमानुषी । ४६ ॥

वनानि पुष्पं सलिलानि मौक्तिकं विविक्तकण्ठाः क्वणितं पतत्रिणः ।
तवाधुनोच्चैर्मलयाचलस्थली द्रुमद्रवंप्रस्रवणं प्रवर्तताम् ॥ ४७ ॥

---

१. A मेजु २. A ता ३. B C स्क । ४. B C व. ५. B C द्रुमद्रवद्स । ६. A र्ति

समानय द्वन्द्वमिदं पतत्रिणोर्न रावणः पश्यति वैशसं निशि ।
दिशन्तु वापीकुमुदेषु चोत्सवं सरोजसाधारणमिन्दुरश्मयः ॥ ४८ ॥

तमस्स्वगाधेष्विव चन्द्रमःक्रुराः कथं न कृष्णागरुधूपसिन्धुषु ।
अमी निमज्जन्तु सितालयाः क्षणं बहिर्विसर्पद्घनतुङ्गवीचिषु ॥ ४९ ॥

सह प्रगाढप्रणयैः प्रशंसति प्रदोषलक्ष्मीं क्षणदाचरेश्वरः ।
जितं भवद्भिः सुरसिद्धचारणाः प्रविश्यतां प्रस्तुतकौमुदीमहः ॥ ५० ॥

क्व दुग्धसिन्धुः क्व च तस्य वीचयः प्रविश्यतां द्वारमिदं सुराङ्गनाः ।
गृणीतं भोः सूर्यरथादनन्तरं कदापि वो दृष्टचरी न चन्द्रिका ॥ ५१ ॥

करोतु कृत्यं मणिदीपशाखिनां गिरिः सुवेलः स्फुरदोषधीगणः ।
तनोतु सान्द्रैर्निजवारिबिन्दुभिर्वितानमम्भोनिधिरम्बरोदरे ॥ ५२ ॥

प्रविश्यतां पाणविकाः फणाभृतः स्मृताः स्थ वीणानिपुणा नभस्सदः ।
तवैष तण्डो समयः स्वताण्डवं प्रणेतुमुद्गायति नारदोऽग्रतः ॥ ५३ ॥

क्षणः कलानामयमेव नर्तकाः क्व ते निविष्टा भरतान्तवासिनः ।
पृथुस्तनीं चित्ररथश्च कामपि स्वलास्यशिष्यामुपहृत्य मोदताम् ॥ ५४ ॥

कथावशः[७] किं समयं हरत्यसौ हठोपनीतः सुरनर्तकीजनः ।
सचास्तयत्नोऽभिनयेषु कोहलः क्षपाचरेन्द्रः स्खलितं न मृष्यति ॥ ५५ ॥

स संप्रति स्वातिरपाणिवेपथुस्तथोपधत्तां मुरजेषु मार्जनाम् ।
यथाऽम्बुभृद्बन्धुकुलं दिदृक्षया तनोति नेत्रैरिव चन्द्रकैर्दिशः ॥ ५६ ॥

स्मरागमान्वाचयतु स्वयं पुरः स्वरेण सौम्यश्रुतिना सरस्वती ।
घनप्रयोगं सुरवन्दिसूनवः पठन्तु पौलस्त्यभुजार्जितं यशः ॥ ५७ ॥

इतस्तृषं संजनयन्तु शीलनान्नवां नवामासवनिम्नगाचयाः ।
इतश्च सन्तानकपुष्पसंस्तरः स्मरव्ययानन्तरमेव तन्यताम् ॥ ५८ ॥

इमे न रोहन्त्विह[११] वल्लिपल्लवाः स्फुरन्त्वमी मारकता मरीचयः ॥
किमुत्सुकाः सर्पत सर्पयोषितो निषीदतेदं भुवनं न वासुकेः ॥ ५९ ॥

---

१. A स्सगन्धे । २. A रान् ३. A षत्सु ४. B D हुत C द्रुन । ५. A हृताः स्थ । ६. A दीर्घ्यं ७. A कशाः कशाः ८ A भि ९. A तला १०. B C श्वसन्ना ११. CB न्त्यहि.

इति प्रहस्तानुचरस्य कस्यचित्प्रकाशितोद्दामदशाननश्रियः ।
चराचरैः शुश्रुविरे भयागतैः गिरः प्रदोषोत्सवघोषणोद्धुराः ॥६०॥ कुलकम् ॥

मसारगल्वर्कमयेषु मूलतस्ततेषु तैस्तैश्चषकेषु किङ्करैः ।
दशाननाज्ञाचकिताः प्रचक्षुरुर्मधूनि कल्पोपपदा महीरुहः ॥ ६१ ॥

परीत्य चिन्तामणयोऽथ रावणं सुपर्वरूप्याः सुषुवुः सुराम्बुधीन् ।
वितेनुरुच्चैरुपदंशपर्वतान् स्वसात्कृतास्तापसहोमधेनवः ॥ ६२ ॥

परीयुरन्येऽप्यभिरामचाटवश्चराचराणामधिदेवतागणाः ।
निजक्षणातिक्रमदण्डशङ्किनः स्मृतेः पुरस्तादिव राक्षसेश्वरम् ॥ ६३ ॥

सुराङ्गनाः सादरमभ्यभाषत व्यलोकत प्रश्रयवानिवासुरीः ।
दधेऽनुकम्पां मुनिकन्यकाजनैः निशाचरीर्निर्दयमालिलिङ्ग सः ॥ ६४ ॥

स यक्षरक्षःसुरसिद्धयोषितां वपुष्षु विश्वासविमुक्तनीविषु ।
व्यनोदयद्विश्लथकाञ्चिदामसु स्मरज्वराकल्पकवेगवेदनाम् ॥ ६५ ॥

निपीय वक्त्राणि सुपर्वयोषितां पपात पातालवधूमुखालिषु ।
समेत्य जघ्ने जगतीपुरन्ध्रिभिः स निर्मुखैः पङ्क्तिमुखः पयोधरैः ॥ ६६ ॥

अचुम्बदेकेन वधूमुखं बलादपश्यदन्येन मृगाङ्कमण्डलम् ।
जगौ स गाथामपरेण मान्मथीं मधूनि वक्त्रैरितरैरशीलयत् ॥ ६७ ॥

निजादभैपीत् क्षणदाचरीगणान्न पश्यतः पार्श्वत एव साहसी ।
मुखैः प्रसन्नामपिबद्विभीषिकावशीकृतानां यदमर्त्ययोषिताम् ॥ ६८ ॥

ततान मुग्धासु विदग्धमानसो न मोहनाङ्गानि सुराङ्गनासु सः ।
मनोरथानां निजमत्तकाशिनीष्वगच्छदन्तं जगदन्तलालसः ॥ ६९ ॥

पुनः स सस्मार विदेहभूपतेः सुतां सतीत्वग्रहदुर्लभागमाम् ।
अवीक्षमाणस्तदवाप्तिकारणं जगाम योषित्सु मुहूर्तशून्यताम् ॥ ७० ॥

अरक्षदाकारमलक्षितेङ्गितः प्रियासु तासु प्रणयं ततान सः ।
न वञ्चयन्ति स्वमुपेतसंपदः सुदुर्लभप्रार्थनया विचक्षणाः ॥ ७१ ॥

१. BC क्या । २. A का ३. BC क्रमा ४. BCD वे ५. BCDE लक्षिता.

कयापि सार्धं विधृते ससंभ्रमं कयापि कर्पूरिणि रत्नभाजने ।
पपौ प्रशंसातरलैः स मौलिभिः कयापि चास्वादितपूर्वमासवम् ॥ ७२ ॥

इदं तदक्ष्णां द्युतिचोरमुत्पलं क वा युवत्यः स मुखोपमास्पदम् ।
शशीति पप्रच्छ मदोष्मविह्वलो विलोकमानश्चषकं च्युतासवम् ॥ ७३ ॥

तमाशु चन्द्रं चषक प्रयच्छ मे तवोत्पल क्रोडमिदं विदार्यताम् ।
ध्रुवं स पीतः सह शीधुनाऽथवा मयेति मत्तः प्रललाप रावणः ॥ ७४ ॥

किमिन्दुनेन्दीवरमप्रयोजनं मुखेषु नेत्रेषु च सत्सु वः प्रियाः ।
इति ब्रवीति स्म विलोकयन्नसौ प्रसारपारीषु निवेशितं मधु ॥ ७५ ॥

निशापतेरात्मवधूमुखस्य च द्वयोः सकम्पं चषके चकासतोः ।
चिरात्करिष्यन्निव नीचनिग्रहं दशाननः संविदधे निरूपणम् ॥ ७६ ॥

स पानमध्ये मणिमर्दलानकध्वनिष्वनुत्तालतरङ्गचारुषु ।
ददर्श नित्यं निजवारयोषितामपूर्वलीलालयरीतिरेचकम् ॥ ७७ ॥

ममार्ज मत्तः स्वयमेव पुष्करं जगौ स्वयं गद्गदकण्ठसंहतिः ।
अदर्शयत्पाणिभिरक्रमेण च स्वयं स्वहस्ताभिनयान् पुरन्ध्रिषु ॥ ७८ ॥

अमन्यतेन्दुं निपतन्तमम्बरान्महीं भ्रमन्तीमिव रोद्धुमुद्ययौ ।
ततार मध्ये तरुणीकदम्बकं स पुष्पकस्योपरि कौमुदीनदीः ॥ ७९ ॥

तमूहुरङ्गैरलसैर्निजाङ्गनाः तरङ्गवातास्तमपामवीजयन् ।
अपश्यदुत्थाय मनोरथस्थितामितस्ततः शून्यमनाः स मैथिलीम् ॥ ८० ॥

प्रसीद मन्दोदरि चन्द्रमानय प्रियस्य तापः प्रबलोऽयमद्य ते ।
इति प्रमीलापगमेषु दारुणं जगाद भूयः स मनोभवज्वरम् ॥ ८१ ॥

पुनः प्रसन्नां पुनरातपं विधोः पुनः स मुक्ताफलदामसंहतिम् ।
पुनः प्रसूनं मलयोद्भवं पुनः पुनः सिषेवे मृगशावलोचनाः ॥ ८२ ॥

तदङ्गनाचक्रमनङ्गलालसं मुखानि तस्यैकमहाविलासिनः ।
पपौ प्रसूनानि मधुव्रतीकुलं मधोरिवादौ नवचूतशाखिनः ॥ ८३ ॥

क्षताधरं सव्रणमेखलातलं[3] घनार्धचन्द्रोच्छ्वसितोन्नत[4]स्तनम् ।
उपाचरत्तुल्यमसौ सवेदनं रतान्तचर्यानिपुणः प्रियाशतम् ॥ ८४ ॥

१. BC वद्धृते २. BC सन्ना ३. BC पदं । ४. BC तानि

समादधे काञ्चिमकुञ्चयत्कचान् कुचावसिञ्चन्मलयोद्भवाम्भसा ।
लिलेख सान्द्रव्रणयोर्विशेषकं कपोलयोर्बालकुरङ्गचक्षुषाम् ॥ ८५ ॥

अशाययत्कामपि दोष्णु दुर्लभां स वल्लभां वक्षसि कामपि न्यधात् ।
पुनः पुनश्चुम्बितपाणिपल्लवामरोपयत्कामपि कण्ठकानने ॥ ८६ ॥

व्यलोकयत्कामपि कर्कशस्तनीमभाषयत्कामपि कोमलस्वराम्[2] ।
त्रपावतीं कामपि पर्यहासयन्न्यवेशयत्कामपि सत्वरोत्थिताम् ॥ ८७ ॥

कयाऽप्युपालभ्यत मन्युगद्गदं कयाप्यसूयाकुटिलं व्यलोकयत ।
कृतापराधोऽपि कयाप्यमृष्यत स्फुटं कयापि प्रणयादभण्यत ॥ ८८ ॥

चकार कस्यामपि चाटुमुत्तमं जगाद कस्यामपि कैतवं बहु ।
ममार्ज कस्यामपि पूर्वखण्डनां ततान कस्यामपि मण्डनान्तरम् ॥ ८९ ॥

अयाचतैकामधरो[3]ष्ठपल्लवं निनाय वक्षःस्थलमात्मनोऽपराम् ।
अभीक्ष्णमन्यां कुचयोरयोजयन्निमीलिताक्षीं नखमार्गराजिभिः ॥ ९० ॥

करी करेणुष्विव सल्लकीवने गवां पतिर्गोष्विव गोष्ठचत्वरे ।
शशीव तारासु तदा नभोङ्गणे विमानपृष्ठे स बभौ पुरन्ध्रिषु ॥ ९१ ॥

मघवति परदारश्रद्धयेव प्रदीपमघवति मधुगोष्ठीं तन्वतीत्थं दशास्ये ।
रजनिचरसह[4]स्रैरुत्सवः पानशौण्डैरजनि चरति नीचैरात्मजे मारुतस्य ॥ ९२॥

इत्यभिनन्दकृतौ रामचरिते महाकाव्ये दशाननापानकेलि[5]-
वर्णनो नामाष्टादशः सर्गः समाप्तः ॥

---

आचन्द्रसूर्यं निदधे जगत्सु व्यासस्य यद्वज्जनमेजयेन ।
एषोऽभिनन्दस्य महाप्रबन्धः क्षोणीभुजा भीमपराक्रमेण ॥

[6]तस्यैकस्य निकामदानरभसप्रोल्लासिनः शोभते
श्लाघ्ये वस्तुनि यत्र तत्र पृथिवीपालस्य कौतूहलम् ।

रुद्धाः सर्वदिशो मनोरथपथातीतर्द्धिभिः पुस्तकैः
सत्काव्याभिरतेन रामचरितं येन प्रतिष्ठापितम् ॥

---

१. D न्नुवाच २. A मञ्जुभाषिणीं । ३. BC कांपुन ४. A दस्रै ५. D प्रदोषचन्द्रोदयमद्यपानसु-
रतक्रीडा । ६. A only reads this ।

# अथैकोनविंशः सर्गः ॥

तं केलिचञ्चलविलासिजनं प्रदोषं नीत्वा सुवेलशिखरे प्लवगप्रवीरः ।
लङ्कां शशाङ्ककरचुम्बितचन्द्रकान्तप्रासादपृष्ठसलिलस्नपितां विवेश ॥ १ ॥

तत्राणिमादिगुणसंश्रयणादशब्दलब्धान्तरश्चिरमगारपरम्परासु ।
साक्षाच्चकार चकितश्वपकोपधाना: पौरीः प्रियौघपरिरम्भसुखप्रसुप्ताः ॥ २ ॥

तासु श्लथोत्तरवरांशुकपल्लवासु प्रत्येकमीक्षणयुगं निपुणं निपात्य ।
तत्याज तत्क्षणजमाधिमवीक्षणेन रामासु रामगृहिणीतनुलक्षणानाम् ॥ ३ ॥

तासां प्रकामतनुकान्तिजलाचितानामुद्भिन्नपीनजघनोरसिजस्थलानाम् ।
हेलाविलङ्घितमहाब्धिरपि प्लवङ्गः पारं ययौ न स पुरन्ध्रिशरन्नदीनाम् ॥ ४ ॥

भेजेऽर्धपीतमधुगर्भमसारपारीसंबाधपानवसुधामणिकुट्टिमेषु ।
रत्नप्रदीपशतनिर्मलदिक्षु रक्षःसामन्तसङ्घवनसद्मसु संनिधानम् ॥ ५ ॥

एकत्र मत्तशयितोत्कटयातुधानसंवाहनार्तमलकाधिपयामिजातम् ।
तत्रापरत्र च कठोरकशानिपातनिष्पन्दमिन्द्रपुरबन्दिजनं ददर्श ॥ ६ ॥

अन्यत्र चाभिनवमाल्यचितं चचार च्छिन्नापविद्धमणिदामलवानुकीर्णम् ।
रङ्गाङ्गणं मणिमृदङ्गसुखोपकण्ठनिद्राणपुण्यजनचारणचक्रवालम् ॥ ७ ॥

एकत्र पूर्वसुरवीरपरिग्रहाणामुद्ग्रीवतां विधुतमृत्युभियां नुनाव ।
मिथ्याविपर्ययविलक्षमुखं हनूमानन्यत्र चाहिमहिषीनिवहं शुशोच ॥ ८ ॥

दृष्टिं निनिन्द नमितामसितानुभावसंविष्टधृष्टमिथुनेषु निकेतनेषु ।
निर्वृत्तवारवनिताजनसीधुसत्रास्तत्रास्पृशन्निव चचार स चन्द्रशालाः ॥ ९ ॥

वीथीषु वेदिषु चयेषु चतुष्पथेषु रथ्यासु रत्नभवनेषु च वानरेन्द्रः ।
सुप्तं सुरासुरभिणाऽऽननपङ्कजेन स्त्रैणं तृणीकृतसुरस्य रिपोश्चिकाय ॥ १० ॥

स क्वाप्यपश्यदसतीरसतां नियन्ता पर्यन्तकुञ्जभवनादभिनिष्पतन्तीः ।
क्वापि प्रसाधनकसौरभसूचितानां संचारशब्दमशृणोदभिसारिकाणाम् ॥ ११ ॥

---

१. B C D च स कम्पमानः । २. C E य । ३. B C D जामि E जाति । ४. B C D नि ।
५. B सर्वेषुद्द । D सव्येष्ट । ६. D सू । ७. A श्वकार । ८. D कान्त ।

व्याक्रोशनादपि कटु क्षणदाचरीणामाश्वासनं क्वचन निर्विविदे निशम्य ।
शुश्राव कुत्रचन किंपुरुषाङ्गनानां गीतादपि श्रुतिसुखप्रदमार्तनादम्[1] ॥ १२ ॥

विश्वाचि[2] विश्वसिहि किं निहतो दशास्यः सह्यं घृताचि मरुतः किमुपेयिवांसः[3] ।
रम्भे रमस्व रभसान्नलकूबरः किमुन्मील मेघवति किं मघवाऽग्रतो मे ॥ १३ ॥

मेने निमील्य नयने नय वासराणि क्ष्मामङ्गिणा लिखसि किं सखि चित्रलेखे ।
त्रासं मृदूकुरु तिलोत्तमिकेऽनुभूतः क्रुद्धो हिरण्यकशिपुः सदसि त्वयाऽपि ॥ १४ ॥

चित्राङ्गदे चिकुरमाहर वेल्लतु भ्रूः ते विभ्रमाः क्व तव संप्रति चित्रसेने ।
क्लान्ताऽसि कान्तिमति चन्द्ररुचः प्रतीच्छ वत्से विलासवति वीत इवायमाधिः ॥ १५ ॥

जाँने सखि ज्वलति पूः सकलेयमद्य विद्युत्प्रभे परममित्यवधारयैतत् ।
सीतेति मा वद[4] कियच्चिरमेवमास्तां मध्येविशुष्कतृणराशि शिखिस्फुलिङ्गः ॥ १६ ॥

सानूनि सानुमति संनिहितानि मेरोः किं रोदिषीन्दुमति नन्दसि मन्दरेऽद्रौ ।
एषाऽधुनोदयसि भानुमति प्रसीद पर्वः स्वयं पतति विश्रवसः सुतोऽयम् ॥ १७ ॥

कालस्तरङ्गवति मङ्गलमन्द्रकाणां मूर्छन्त्यनङ्गवति मन्मथवर्धमानाः ।
अद्य प्रपञ्चयति चारुमति त्वदीयं वीणायुगं नुतिमयुग्मविलोचनस्य ॥ १८ ॥

वीणावति त्वमुपवीणय राक्षसेन्द्रं कामं[10] कलावति कुरुष्व तदीयमाशु ।
वैदग्ध्यवञ्चितवलादिमहासुराया मायावति क्व तव कैतवकोविदत्वम् ॥ १९ ॥

उत्ताम्यसि प्रततमद्य किमाविभातात् पुष्पावलि स्फुटसमृद्धफलास्तवाशाः ।
क्रीडाधिरूढजलवाहकिशोरपत्रा पत्रावलि त्वमुपयाहि[11] दिवः प्रदेशान् ॥ २० ॥

ईषद्भिनत्तु हसितद्युतिरोष्ठमुद्रामुन्निद्रबालशत[12]पत्रदलायताक्षि ।
मोदस्व[13] नर्मरसपारणया मुहूर्तं नारायणप्रियसुते सुतरां कृशाऽसि ॥ २१ ॥

पर्यश्रुलोचनदलं श्लथकण्ठनालं पर्याकुलालकषडङ्घ्रिकुलं किमेतत् ।
अत्यार्ति मार्गरजनावतिवाहितायां हेमे हिमाहतसरोजनिभं मुखं ते ॥ २२ ॥

किं पुत्रि कामवति कातरतामुपैपि किं मातुलानि मदिरावति मुह्यसीत्थम् ।
मातस्त्वमप्यधिकमद्य किमातनोषि निश्वस्य दीर्घमलके कलपक्ष्मोर्मीन्[16] ॥ २३ ॥

---

१ BC खंप्रमदार्तं । २. B D श्रावि । ३. A मपेतबाधाः । ४. BC तो मया ५. C D ते । ६. BC E चेतसि । ७. A कृशात्कृशानोः । ८. A रक्षः C पत्युः । ९ A संगम १०. BC छन्दं ११. A मपयासि १२. E नील १३ BCDE सौन्दर्यं । १४ A प्यन्तिमाप । BE न्यार्तिमाघ १५. AD वि । १६. A त्वान् ।

आलम्ब्यतामिह स धैर्यतरुः प्रगाढं पौलस्त्यचण्डवचनानिलघूर्णितोऽपि ।
व्यावर्तते वि[1]कलमुत्कलिकाकुलत्वात्तन्वी तवाङ्गलतिकेयमनङ्गलेखे ॥ २४ ॥

मञ्जुस्थले जयसि यासि मदालसे त्वमालि प्रसीद मुकुले कुशलं कुले नः ।
किं मञ्जुकेशि वदसीत्थमनर्गलेव मार्गन्ति रात्रणचराः पुरकिंवदन्तीः ॥ २५ ॥

तेन प्रसुप्तसकलक्षणदाचरेषु कारागृहेषु हरिणा हरिसुन्दरीणाम् ।
अन्योन्यमन्युभरवेगविनोदनानि लीनेन दूरमिति शुश्रुविरे वचांसि ॥ २६ ॥

तासां तदैव शुचिसूनृतकृष्टचेताः काराविमोक्षविधये न[2] बुधः ससार ।
स्तोकावशेषितसमाप्तिमहोत्सवाना[3]मासीद्दर्शैः[4] कथमपि प्रभुदेशनानाम् ॥ २७ ॥

तस्मिन् समाहतसुरासुरसिद्धसाध्यस्त्रीरत्नसारनिचिते नगरे स वीरः ।
सर्वत्र जातजनकेन्द्रसुताभिमानश्लिष्टेषु विस्मरणसाध्वसवानिवासीत् ॥ २८ ॥

प्रत्यङ्गणं प्रतिगृहं प्रतिवृक्षवाटि पर्यन्वियेष[5] महिषीं जगदीश्वरस्य ।
कुत्रापि तत्रभवतीं न पुनर्ददर्श दर्शक्ष[6]पामुख इवेन्दुकलां कपीन्द्रः ॥ २९ ॥

सन्दर्भकल्पितमपानुपहेतिगर्भमत्यद्भुतं तदथ पुष्पकमित्यपश्यत् ।
ईपल्लसद्ध्वजदुकूलपटाञ्चलाग्रसंमृज्य[8]मानशशिविम्बतलं विमानम् ॥ ३० ॥

क्रीडाचलानुपवनानि सभाः सरांसि प्रेक्षागृहाणि सुरचैत्यचयान् प्रतोलीः ।
शुद्धान्तसंजवनमाजिखलानि तस्मिन्निच्छाविमानमधिरुह्य हरिश्चचार ॥ ३१ ॥

अल्पीयसीमकलयद्वरुणालयां तां नाकं निकृष्टमिव चेतसि निश्चिकाय ।
तं वीक्ष्य यक्षपतियानवरं हनूमानाकृष्टशोभमहिविष्टपमप्यमंस्त ॥ ३२ ॥

मोघं विहृत्य स ततोऽवततार वीरः स्वैरं पपात परितश्च पुनः पुरीं ताम् ।
निर्वेदिनामपरिनिश्चितदेशकालः सिध्यत्यलं न खलु दूरमनीषितोऽर्थः ॥ ३३ ॥

शाखापुराणि[9] पुनरुक्तवराङ्गनौघसंबाधसौधशतरोपितसंशयानि ।
पर्यभ्रमद्वितथमेव विचक्षणोऽपि सिद्धेर्नबाधकभयरतिमितोऽङ्कमेति ॥ ३४ ॥

भूयश्चचार चयचत्वरमन्दिरेषु रत्नौघमग्रहणकीर्णमुदीक्षमाणः ।
साक्ष्[10]येण राक्षसपतेर्विभ[11]वस्य तेन तेपे स दीर्घमसमाप्तनियोगरुद्धः ॥ ३५ ॥

---

१. A जैतीव फ । २. A स । ३. BC D समुत्सुका ४. A द्यशः D ड्डुरा ५. A यातोऽ ६. D लोकः ।
७. D स्पृश्य ८. A न्मकरा ९. . BC D थ्य. । १०. BC D क्षे । ११. A वाश्रि । BC वेन

सार्वर्तुकस्तबकशालितरुप्रवेकं सर्वाभिरामरुतपण्डितपत्रिजातम् ।
सर्वस्वभूतमथ तद्दशकन्धरस्य दूरादशोकवनमैक्षत गान्धवाहिः ॥ ३६ ॥

देवस्य दाशरथितां भजतः समीपं पादान्तिकं भगवतो मृगवाहनस्य ।
अध्यास्य चाङ्क्रमनघं न तथाऽञ्जनायाः प्राभञ्जनिस्तदवलोक्य यथा जहर्ष ॥ ३७ ॥

लिङ्गं न किञ्चिदभिकाङ्क्षितवस्तुसिद्ध्यै शुद्धाशयः कलयति स्म कपिप्रवीरः ।
निस्संशयं निवसतीह नृपात्मजेति तस्य प्रसन्नमनसः प्रतिभा तु जज्ञे ॥ ३८ ॥

शाखासु पर्वसु दलेषु दलान्तरेषु स्कन्धेषु चेक्षितुमधः प्रहिताक्षिपातः ।
तत्रेतरप्लवगगन्धकपिश्रमेण[1] बभ्राम स प्रतिमहीरुहमप्रमत्तः ॥ ३९ ॥

ग्रस्तामिव[2] त्विषमयोगमलच्छटाभिः श्लिष्टामिव श्रियमकार्यरसत्वराभिः ।
व्याप्तां विपद्भिरभिजातिमिवादरेण[3][4] क्रोडीकृतां मुदमिवाधिपरम्पराभिः ॥ ४० ॥

अद्भिः सुधां व्यवहितामिव लावणीभिः मृद्भिश्चितामिव विदूरशिलाशलाकाम् ।
पुण्याग्निदीधितिमिव स्थगितां समिद्भिरिन्दोः कलामुपहितामिव कालिकाभिः ॥ ४१ ॥

हेमाब्जिनीं वलयितामिव यामिनीभिः छन्नामजन्यमहिकाभिरिवार्कभासम् ।
धूलीभिरन्तरितशुद्धगुणामिव द्यां विद्यां विकल्पपटलीभिरिवानुविद्धाम् ॥ ४२ ॥

कीर्णामवर्णकणिकाभिरिव प्रसिद्धिं मायाभिरन्वयविशुद्धिमिवोपगूढाम् ।
लीढामिवोच्छ्वसितवृत्तिमनित्यताभिः नीतामिवान्तमनवस्थितिभिः प्रतिष्ठाम् ॥ ४३ ॥

निर्भर्त्सनाभिरिव सत्कृतिमार्त्तकेशीं[11] मैत्रीमिवाधिगतसन्धिसपाक्रियाभिः ।
ग्रस्तां[12] कथामिव कुपण्डितचोदनाभिः संभूय रुग्भिरिव रुद्धरुचं चिकित्साम् ॥ ४४ ॥

छिन्नामिव[13] श्रुतिमपस्मृतिसंहिताभिरुल्लङ्घितामिव कुयुक्तिभिरुक्तिमार्षीम् ।
श्रद्धामिव प्रतिहतामपसंस्क्रियाभिरुन्मूलितां धृतिमिवोत्कलिकावलीभिः ॥ ४५ ॥

छायामिवोष्णलहरीभिरुपप्लुतां तामन्तर्हितां दवशिखाभिरिव द्रुमालिम् ।
इच्छामसिद्धिभिरिव प्रतिरुद्धवेगां प्राग्बुद्धिभिर्धियमिवाधरितां[14] प्रतीचीम् ॥ ४६ ॥

ग्राहीभिरागलमभीमिव रुद्धचेष्टां[15] श्रीखण्डयष्टिमुरगीभिरिवोपजुष्टाम्[16] ।
व्याघ्रीभिरेणगृहिणीमिव रुद्धमार्गां लोहार्गलाभिरिव सिंहवधूं सुगुप्ताम् ॥ ४७ ॥

---

१. A भीमवद २. BCD च्च । ३. A त्तिम ४. CD त । ५. C वो । ६. BCDE मपीभिः । ७. A मपि । ८. BC सन्तापजन्यम । A छन्नामनल्पमि । ९. B सिद्धग १०. A नवद्याम् । CDE वनद्धां । ११. BCD व ! १२. BC ग्राह्यं १३. BC छ । १४. D र्दिशमिवाच । १५. A दत्तवे । १६. B एलाङ्ग C एकाङ्ग

लुप्तामिवाघतातिभिः सुरयानवीथीं कान्तां शिरःस्रजमिवाङ्घ्रिरजःकणाभिः ।
तत्रागतः परिगतां रजनीचरीभिः नारीं निरायतविपद्विधुरां ददर्श ॥ ४८ ॥

देहे दृशोर्दशनवाससि पाणियुग्मे चूडामणौ चरणपद्मतले च तस्याः ।
सर्वाण्यभीक्ष्णगुणितानि स तान्यपश्यदिक्ष्वाकुनाथकथितानि च लक्षणानि ॥४९॥

मूर्छान्तरोद्धुरविलोचनवारिपूरां पारं दुराधिजनितस्य गतान्तनिम्नः ।
तां सोऽवलम्बितसमीपतरैकशाखः सीतेयमित्यकथितामपि निश्चिकाय ॥ ५० ॥

स्थानेऽवसीर्देसि रघूद्वह धिग्विधातरस्यास्त्वयेक्षितमलक्षणमङ्ककेषु ।
अद्यापि जीवसि दशानन हे हनूमन् केयं तवाभिमुखवर्तिरिपोः प्रतीक्षा ॥ ५१ ॥

देवि क्षमस्व दिवसानयमेति रामः पश्याचिरात्पुरमिमां कपिभिः परीताम् ।
क्वासौ जगत्रयजयी रजनीचरेन्द्रः कुत्रेन्द्रजित्तव जितं पतिदेवराभ्याम् ॥ ५२ ॥

इत्यूचिवान्निभृतमेव स वातसूनुः गत्वा तयाऽध्युषितमूलमहीतलायाम् ।
भेजेऽग्निमन्थाशिखरादथ शिंशपायाः स्कन्धान्तरं विनयबन्धुरितेन मूर्ध्ना ॥ ५३ ॥

अत्रान्तरे मदनवातविधूतनिद्रः स द्राग्धृतान्यरचनो रजनीचरेन्द्रः ।
दिव्याङ्गनाशतगृहीतमणिप्रदीपः प्रापत्तमेव मदलोलपदः प्रदेशम् ॥ ५४ ॥

रेजे स राक्षसपतिस्तपनीयबद्धैः दोष्षु त्विषः शिरसि चाश्मभिरुत्किरद्भिः ।
सानुष्वनुक्षणसमुल्लसदोषधीकं न्यक्कृत्य नक्तमचलाधिपतिं सुवेलम् ॥ ५५ ॥

आशाः सुदूरमभवन्नधिवासभाजो निर्हारिणा परिमलेन विलेपनानाम् ।
आसीन्नभः स्फुरितशक्रधनुस्सहस्रं तस्याभितश्छुरितमाभरणप्रभाभिः ॥ ५६ ॥

दीर्घाक्षमुन्नसमरालशिरोरुहाग्रं बिम्बाधरोष्ठमवहन्मुखमेकमेव ।
द्वावेव तत्क्षणमभीषणवेषधारी भेजे भुजौ मनुजलोकपुरन्ध्रिसात्म्यौ ॥ ५७ ॥

सान्द्राः स्रजो मलयजोदकमच्छमेकं वासश्च वासवरिपुर्ममृषेऽलसाङ्गः ।
संचिक्लिशे तुलितरुद्रनिकेतनाद्रिः भारेण तत्क्षणमसौ मणिभूषणानाम् ॥ ५८ ॥

कान्त्या परप्रहरदक्षमसौ तदानीं कन्दर्पमिन्दुसखमिन्दुमुखो जिगाय ।
सीतानुबन्धविषमज्वरवेगयोगादुद्धूसराच्छहरिचन्दनपङ्कलेपः ॥ ५९ ॥

---

१. A त्रैक । २. A वक्ष D हस्त ३. B विषी । ४. A किं वि । ५. BC D न्ने । ६. BC D मीक्षति तत्प्रतीक्ष । ७. BC D स्रस्त

आलम्बतासतटमुच्छ्रितम[1]ङ्गनानां तासां तुतोष नतु चाटुभिरन्यचेताः ।
आगच्छ तापसि भवामि तवैष दासः किं गच्छसीति विकलो वियदालिलिङ्ग ॥६०॥

पप्रच्छ पृष्टमपि गद्गदिकात्तकण्ठः शुश्राव नोक्तमपि शून्यमनाः स किञ्चित् ।
सस्मार न स्मृतमपि क्षणमात्मकृत्यं कुत्राहमित्युपगतोऽपि न संविवेद ॥ ६१ ॥

पौष्पं कलापमनुदन्नवमप्युरस्तः स्रस्तं मृणालवलयं न विवेद हस्तात् ।
हारं निनिन्द हरिचन्दनवारिधौतं शीतद्रवस्य शशिनः किरणान् जहास ॥ ६२ ॥

चस्खाल नामसु ननाम न जातलज्जः सज्जो बभूव नच सांत्वयितुं कथंचित् ।
सेवागतासु निजकामवतीष्वकस्माद्दाक्षिण्यमात्रमपि रक्षितुमक्षमोऽभूत् ॥ ६३ ॥

आत्ताभिरामसरसप्रसवोपदा[3]भिर्भेजेऽन्तिकात् प्रमदकाननदेवताभिः ।
वेगोत्थिताभिरुपसृत्य निशाचरीभिः नेमे नराधिपसुतापरिरक्षिकाभिः ॥ ६४ ॥

चन्द्रातपानुभवगाढतरा[4]भितापः पापः पदानि कतिचित्कथमप्युपेत्य ।
अध्यास्त स त्रिजटयोपहृतां महार्हामासन्दिकामभिमुखं जनकात्मजायाः ॥ ६५ ॥

कम्पं नियम्य स जगत्रयकम्पकारी कारुण्यवानिव रघूद्वहधर्मदारान् ।
व्यालोलरत्नवलयं सविलासमीषदुद्यस्य दोषमथ दक्षिणमित्युवाच ॥ ६६ ॥

जागर्षि जानकि विषीदसि किं विशेषादद्यापि ताम्यसि न तद्विजहासि वाम्यम् ।
धिग्दैवमेवमपि नाम वशंवदस्य विश्वप्रभोर्मम पुरः परिशोषमेषि ॥ ६७ ॥

उन्मीलयेक्षणयुगं त्यज कष्टशय्यां सह्यं सरोजमुखि पृच्छति रावणस्त्वाम् ।
उत्तिष्ठ विश्वसिहि भावय मुञ्च शङ्कां लङ्काजनः सकल एष तले तवाद्य ॥६८॥

आमुञ्च काञ्चनवतीर्मणिरत्नभूषाश्चुम्बन्तु रावणमुखानि तवाङ्गमङ्गम् ।
एष प्रदीर्घसरलालकराजिरास्तां न्यस्तोचितप्रतिविधानकलः कपोलः ॥ ६९ ॥

एतन्मनाग्वलतु लोचनमञ्चतु भ्रूरासीदतु स्मितसखो मुखमुक्तिलेशः ।
अध्यापितं कठिनतां हृदयं त्वदीयमेकानुबन्धि किमनेन कुचद्वयेन ॥ ७० ॥

किं सीदसीत्थमधिगच्छ मनीषितानि नष्टः[7] स ते भृशमयोगदशाधिकारः ।
दुःखानि विस्मर दिशामुपदाः प्रतीच्छ प्राप्ताऽस्युदग्रसुखभागिनि भोगभूमिम् ॥७१॥

---

१. BC D मस्थितिर । २. BC D श्रुत्वा । ३. BCD त्करा । ४. A संभृतगाढ । ५. BC जाड्यं ।
६ A न्तमृद्वि । ७ A क्षिप्तः ।

यन्नास्ति धाम्नि धनदस्य न वासवस्य नार्चिष्मतो न वरुणस्य न मारुतस्य ।
किं भूयसा पशुपतेरपि दुर्लभं यत् तल्लभ्यते सुमुखि मद्भवनाङ्गणेषु ॥ ७२ ॥

पक्षः सितः सुमुखि गच्छति नेह निष्ठां मासो मधुर्निगडितोऽस्ति वनस्थलीषु ।
एतां च नक्तमपि रक्तसरोजराजिं बाले न बालरविदीधितयस्त्यजन्ति ॥ ७३ ॥

चक्रीन्[1] पीडयति पङ्कजिनीर्न बध्नात्यन्तर्बिभर्ति न मृगं मृगशावकाक्षि ।
अत्रास्तमृच्छति न जातु मम प्रभावात् पर्वण्यपर्वणि च शीतरुचिः समग्रः ॥७४॥

ब्रूहि प्रकाममभितः किमुपाहरामि किं वा सृजामि विसृजामि किमग्रतस्ते ।
एकस्य खण्डपरशोर्मम चापरस्य प्रह्वो नियोगमनुधावति भूतसङ्घः ॥ ७५ ॥

त्वामर्चयन्तु चतुरन्तककुप्पतीनामेताः स्त्रियः सुतनु[2] मद्भुजवीर्यकृष्टाः ।
संसक्तराक्षसचमूडमरोत्प्लुताक्ष्याः शच्याः प्रभुत्वमवहासहतं कुरुष्व ॥ ७६ ॥

मुञ्च क्षमातलमिदं मणिमञ्चकेषु स्तीर्णोत्तरच्छदशतेषु सुखं शयीथाः ।
एतासु वा समभिरोचय चन्द्रशालास्वत्रापि तत्त्यज[3] नितम्बिनि वृक्षमूलम् ॥७७॥

एतेषु[4] हेम[5]रजतस्फटिकाश्मगर्भवैडूर्यविद्रुममयेषु निवेशनेषु[6] ।
मात्रा महेन्द्रजयिनः परिचर्यमाणा मोदस्व मानुषवधूजनदुर्लभेषु ॥ ७८ ॥

अध्यास्व सौध[7]वलभीं निविडस्तनीमां[8] मुष्णन्तु जालमरुतः सुरतश्रमं ते ।
यद्वाऽधिरोह मणिहर्म्यमिदं मदीयमालब्धुं[9]मिच्छसि करेण यदीन्दुबिम्बम् ॥ ७९ ॥

एतासु मे विकटवज्रशिलानिबद्धकूलासु रुक्मकदलीवनमालिकासु[10] ।
वापीषु पीनजघने रमतामितस्ते सोपानसुप्तमणिपत्त्ररथासु चेतः ॥ ८० ॥

वेणीं विमुञ्चतु किमङ्कजुषस्तवार्ये[11] किं वा धुनातु शयनीयतलस्य धूलिम् ।
विस्रब्धमादिश भुजिष्य इव प्रपन्नः[12] पौलस्त्य एष विपुलस्तनि किं करोतु ॥८१॥

अद्यापि चिन्तयसि किं तमभव्यमेव निर्मन्दिरः स गिरिकन्दरकाननेषु ।
दीर्घं विचित्य[13] भवतीमनवेक्षमाणो दिग्धार्तरोहितं[14] इवास्तमितस्तपस्वी ॥ ८२ ॥

तं वर्तमानमपि कल्पय वृत्तमेव कच्चित्पुरीयमभितः सुभगे सुदृष्टा ।
अत्रास्ति शक्तिरनुजैकसखस्य तस्य[15] जित्वाऽर्णवं मम समीपमभिप्रयातुम् ॥ ८३॥

१. A कंन । २. BC स्तरुणि । ३. A तत्तव । B C न्नव । ४. B C D ह्ये । ५. B रत्न । ६. A ममालये । ७. A हेम । ८. A C D E नां । ९. B रोद्ध । E C राढु । १०. BC नीषु । ११ A स्याः । १२. AB तुलां प्रसन्नः । १३. ABC चेष्टय । १४. A तिरोहित । १५. D जेतुम् ।

निस्संशयं विहितजैत्रवपुर्ग्रहेण तेनैव हेमहरिणेन हतावुभौ तौ[1] ।
चेतः समर्थय विमुक्तसभाजनां[2] त्वमात्मानमद्य सुभगे ननु विद्धि लब्धम् ॥८४॥

किं तेन मैथिलि करिष्यसि तापसेन मामेकवीरमरविन्दमुखि श्रयेथाः ।
दास्यामि वर्षमभिजित्य नृपानशेषान् पूज्याय भारतमहं जनकेश्वराय ॥ ८५ ॥

एतर्हि मामवनिपुत्रि भजैकनाथं रत्नाकरं शशधरप्रभवा नदीव ।
तस्मिन्न राजसि निरोजसि मर्त्यमात्रे मुक्तावली मृतशरीर इवावनद्धा ॥ ८६ ॥

म्लानाकृती मलिनचीरधरौ नरौ तौ नीराजनार्थमिव मे[3] विहितौ विधात्रा ।
उद्युक्तनैकरजनीचरयोधगुप्तं[4] प्राप्ताववरण्यमनरण्यपदं प्रपित्सू[5] ॥ ८७ ॥

सार्धं मयाऽद्य विहरेह गिरौ सुवेले[6] वेलावनेऽथ मलयेऽथ यथाभिकामम् ।
देवद्रुमस्तवकबद्धजयावतंसस्त्वां देवरो नमतु मैथिलि कुम्भकर्णः ॥ ८८ ॥

तेनाथ नाथदुरुदाहरणातपेन सौम्याऽपि नाम परुपत्वमभिप्रपन्ना ।
जज्वाल तीक्ष्णविशदाः सहसोद्गिरन्ती वागर्चिपस्तपनकान्तशिलेव सीता ॥ ८९ ॥

आः पाप निस्त्रप निशाचर गच्छ दूरं वीरोऽसि चेत् किमकृथाः परदारचौर्यम् ।
तत्स्मर्यतां कृपणमुक्तमभूत्त्वया यत्संपातिपुत्रमुखगोचरतां गतेन ॥ ९० ॥

दग्धव्यमेतदचिरान्नगरं त्वदीयं त्वं च ध्रुवं निधनमेष्यसि सानुबन्धः ।
सीतेति मूढमनसा भवताऽऽत्मनैव[7] कृष्टाऽस्मि राक्षसकुलक्षयकालरात्रिः ॥ ९१ ॥

कारौकसि त्वमुपितश्चिरमेष यस्य निर्वापितो युधि स येन सहस्रबाहुः ।
तस्यार्पि रे पुरभिदाऽखिलमस्त्रवेदमध्यापितस्य विजयी मम जीवनाथः ॥ ९२ ॥

इत्यन्तरं प्रकटमेव कथं न वेत्सि यद्दुर्जसीत्थमबलाजनमध्यवर्ती[8] ।
शिष्टाः खरादिषु न केचन किं ब्रवीमि[9][10] येभ्यः शृणोषि पुनरार्यसुतस्य धैर्यम् ॥९३॥

त्वन्मूर्धभिः क्षुरमुखाशुगपातवेगच्छिन्नोद्गतैरपुनरुद्गतये पतद्भिः ।
इत्थं गताऽप्यवनिमीक्षितुमर्च्यमानामाशंसितार्यसुतबाहुबला बलामि[11] ॥ ९४ ॥

---

१. AB ष्या । २. AB तुवु । ३. A तौ । ४. D युक्तं । ५. B C D पदमलामयि प्रविष्टे । ६. BC सुवेलशैले । ७. B C D E तामिमूढ । ८. A चेत्तु । ९, B योग १०. BC वि । ११. BC बलानि ।

इति परुषमुदीर्य राजपुत्री मरणवितीर्णमनाः पपात भूमौ ।
त्रिभुवनरिपुरुज्जगाम पीठात् झटिति विमोचितचन्द्रहासकोशः ॥ ९५ ॥

कृतकुलिशकठोरमुष्टिबन्धः कपिरुपकण्ठमियाय शिंशपाग्रात् ।
नियतियमितसाहसो दशास्यः परमसिमुद्यमयाञ्चकार दूरात् ॥ ९६ ॥

अलमलमसिनैषा भूमिर्वशे भुवनप्रभोः तव कतिपयैरेवाहोभिर्भविष्यति मानुषी ।
इति निगदितः स्त्रीभिःस्वाभिर्जगाम यथागतं कपिरपि तरौ तत्रैवासीत्तथैव तिरोहितः॥९७॥

इत्यभिनन्दकृतौ रामचरिते महाकाव्ये सीतारावणसंवादो नाम
एकोनविंशः सर्गः समाप्तः ॥

---

१. D पति ।

# विंशः सर्गः ॥

सम्यग्गुणग्रहपवित्रधियां प्रभूणामेकः परं जयति संप्रति हारवर्षः ।
दोषं नवत्वमवधूय दधे प्रसह्य येनैष रामचरितं प्रति पक्षपातः ॥

---

गमितेऽबलाभिरथ रावणे ततः शयितासु तासु रजनीचरीषु च ।
च्युतविघ्नभीतिरुपविश्य निस्सहा हृदयं बबन्ध मरणाय मैथिली ॥ १ ॥

लतिकाभिरात्तविटपाभिरन्तिकात् करगोचरे शिरसि शिंशपातरोः ।
घटयांचकार गलपाशमात्मनस्तरलं मनो हनुमतः प्रकुर्वती ॥ २ ॥

सचमत्कृतिर्द्रुतममोचयत्कपिस्समुपेत्य पाशमणुतातिरोहितः ।
चकितेव चन्द्रवदना मुखे दिशां दिशती दृशौ वचनमित्युवाच सा ॥ ३ ॥

इममत्र यत्नमधुनाऽपि निस्त्रपाऽऽस्त्रिदिशा निवारयथ किं वृथैव मे ।
उपनामितः प्रियतमस्य कर्हिचिन्न भवद्भिरन्तिकचरोऽपि मारुतः ॥ ४ ॥

प्रहिणोतु नामरगणः स मारुतं प्रहितोऽस्ति मारुतिरयं प्रियेण ते ।
इति स ब्रुवन् कपिवृषः कृताञ्जलिर्जनकाधिराजदुहितुः पुरोऽभवत् ॥ ५ ॥

अपि सत्यमाह कपिरेष पेशलः प्रियवार्तयाऽयमभिनन्दयिष्यति ।
कथमागतः कथमिह प्रविष्टवानिदमिन्द्रजालमथ मे मतिभ्रमः ॥ ६ ॥

परितः पयोनिधिरयं सुदुस्तरः क्व च निस्सहत्वपिशुनेयमाकृतिः ।
अविचिन्तनीयगतिरेष कोऽपि वा कपिरार्यपुत्रमुपसन्नवान् कथम् ॥ ७ ॥

घटितं किमप्यथ चिरात्पुराकृतैरियती कुतः शुभसमृद्धिरद्य मे ।
इति चिन्तयाऽऽकुलमनाः समादधे न तदा किमप्यवनिपालसंभवा ॥ ८ ॥

अवदद्वितर्कतरलां विलोक्य तामुपपादयन्निजसमागमश्रमम् ।
तदहार्यमूर्ध्नि रविसूनुरामयोः शिखिसाक्ष्यपावनमजर्यमानिलिः ॥ ९ ॥

अथ तां ततस्तत इति प्रजल्पितां पुनरब्रवीन्निधनमार्यवालिनः ।
क्षणबन्धुरां सपदि चाभ्यनन्दयत्कपिचक्रवर्तिसमवायसम्पदा ॥ १० ॥

---

1.D omits this sloka २. A णपूत । ३.B C पाल्य । ४.AC धृतं । ५.A. कथितं पृथिव्याम् ।

ककुभामुवाच विचयं तमुच्चकैः शनकैः स्वमब्धिविजयं न्यवेदयत् ।
हृदयेशवाचिकशतानि तानि च प्रणयादचीकथदभिज्ञया समम् ॥ ११ ॥

प्रियनामचिह्नमवलोक्य लोचनस्रुतवारिधौतमलमङ्गुलीयकम् ।
प्रमिमील दीर्घमनघा महात्मनः प्लवगस्य तस्य परिचर्ययोदगात् ॥ १२ ॥

शिरसि न्यधादुरसि दीर्घमादधे मुदमाप कण्ठमुपनीय कामपि ।
तदभीक्ष्णमीक्षणविचुम्बितं चिरादकरोत्कपोलतलयोस्तलोदरी ॥ १३ ॥

क गतोऽसि राम परिहाय मामितः स्मरसीव संप्रति न मामनागसम् ।
हृदयानि धिक् परिमृदूनि योषितां कठिनाय सत्पुरुषचेतसे नमः ॥ १४ ॥

कुरुतामियं किमथ नाथ मैथिली शिथिलं कुलायमसवस्त्यजन्त्यमी ।
शरसंक्रमं घटय शीघ्रमम्बुधौ यदि मां निनीषसि निशाचरालयात् ॥ १५ ॥

प्लवगेश किं प्रसुसुहृत्तमः स वो विशिखैर्वितत्य न पयोधिमागतः ।
किमियां न वेत्ति नगरीमसृग्भुजः श्रुतवानितो नयति मामनन्तरम् ॥ १६ ॥

वद वीर सन्दिशति किं रघूद्वहः स च तस्य किं वदति लक्ष्मणोऽनुजः ।
कपयः क्षपाचरसमीकसत्वराः कति वारिधिं त्वमिव जेतुमीशते ॥ १७ ॥

कति मन्त्रिणः कति रहस्यरक्षिणः कति शिल्पिनः कति च विक्रमोद्धुराः ।
कति कूटयुद्धजयिनः कति त्वया समरंहसश्च रघुनाथसैनिकाः ॥ १८ ॥

किमनेन कायविभवेन वारिधिर्विजितस्त्वयाऽथ परिवर्तितं वपुः ।
अणिमादयस्तव कथं महागुणाः कतमस्य रामतपसः फलं भवान् ॥ १९ ॥

न जहामि देहमवशाऽपि संप्रति त्वदुपागमादधिगतावलम्बना ।
कियतश्चिरात्कथय सत्यमानिले नलिनाननौ नृपसुताविहैष्यतः ॥ २० ॥

त्रिजटेति राक्षसपतेरियं स्वसा मम सत्सखीव निरुणद्धि साहसम् ।
हनुमन्निहापि सुकृती विभीषणस्त्वमिवार्यपुत्रचरितं प्रशंसति ॥ २१ ॥

त्वमिहैव दीर्घमवनीरुहि स्थितः श्रुतवानसि प्रलपितानि रक्षसः ।
तदलब्धघोरविरहज्वरावधेर्मम धैर्यमार्य तरलं त्वयेक्षितम् ॥ २२ ॥

इयमभ्युपैति परितः परिक्षयं न तथा वियोगदहनेन जानकी ।
हनुमन्नुदग्रयशसो यथेशितुः पिशिताशलङ्घनकलङ्कमन्युना ॥ २३ ॥

अधिवासकष्टमटवीषु तादृशं पिशिताशिनः परिभवोऽयमीदृशः ।
प्रगुणेन पश्यति न मे मनः शिवं यदि धैर्यमार्यसुतमत्र रक्षति ॥ २४ ॥

मम कारणात् पितृसखस्य[1] तस्य च श्रुतिमागतेन कृतवान्रघूद्वहः ।
किमुपार्जितेन रजनीचराधमात् कदनेन पक्षपुटयोर्जटायुषः ॥ २५ ॥

विरसत्पिशाचमुखरासभव्रजः खगराज रावणरथो वृथैव सः ।
तव चण्डचञ्चुपुटकोटिताडनाज्झटिति[2] त्रुटन्निपतितो नभस्तलात् ॥ २६ ॥

नियतिर्जयत्यसुमतां न पौरुषं प्रसभप्रहारकृतसिद्धसंमदैः[3] ।
मदभाग्यदेशितनिगूढमर्मणा[4] कृपणेन तेन यदकारि स व्यसुः ॥ २७ ॥

विहगेश पाहि सुहृदः स्नुषामिमां[5] किमु मां जहासि विरहात्पतत्रयोः ।
अपरित्रमम्बरतलं विलोकयाम्यवलम्बतां क इव मां भवानिव ॥ २८ ॥

सुतरां सुदूरमपि तं पुरःस्थवत्प्रतिपन्नशूरमवलोकयाम्यहम् ।
नियतं मदर्प्यधिकमाधिनाऽमुना[6] हनुमन्न विन्दति शमं रघूद्वहः ॥ २९ ॥

इममुत्तरेदुदधिमुद्धरेदरिं स भवद्विधैः सुसचिवैः समागतः ।
पितुरस्य राक्षसहतस्य किं पुनः पवनात्मज प्रियतमः करिष्यति ॥ ३० ॥

कथमेवमादिभिरजस्रमाधिभिर्ध्रियतां धृतोर्[7]सुकरयोऽपि राघवः ।
अनिलैरनारतहतः कियच्चिरं न महीरुहस्त्यजति मूलमात्मनः ॥ ३१ ॥

धिगुदारतां धिगनुरोधशालितामतिमानुषीं धनुषि धिक् च तां क्रियाम् ।
उपमातिगां धिगथं रूपसंपदं स यदायते[8][9]र्जनवदस्ति भाजनम् ॥ ३२ ॥

कपयः किमाहुरवलोक्य तं जनं तव च स्थितं मनासि मान्य किं पुनः ।
प्रकटीकृतः स खलु कोपि लक्षणैर्व्यसनानि मानुषतनुस्तरिष्यति ॥ ३३ ॥

जगतीक्षितेह पवमानसंभव प्रियजीविताऽहमिव धिक्कृताऽङ्गना ।
दयितस्य दीर्घविरहेऽपि जीविता द्विपतः शृणोति गलगर्जितानि या ॥ ३४ ॥

मिथिलेशपुत्रि रघुनाथवल्लभे हतपार्थिवि[10] क्षममिदं कथं नु ते ।
अधिरोप्य चेतसि किमप्यसंभवं यदरेः पराभवशतैर्न पीड्यसे[11] ॥ ३५ ॥

---

१. BC द्विट् । २. BCD त्तडिति । ३. A द्विसंमतः E सम्मदा । ४. BCD संगमनिरू । ५. BCDE मिमं ६. BCD सदस्य । ७. B. तामुहुः । ८. A जयो । CE जितो । ९. A गतु B गिव १०. BCDE यशसांपति । ११ A तेन पात्यसे ।

गमिताश्चतुर्दश वनेषु ताः समाः समयः स्वगेहमुपगन्तुमद्य नः ।
हनुमन् व्रज त्वरितमानय प्रियं नयतु प्रसह्य निजगेहिनीं स माम् ॥ ३६ ॥

अवलम्बयैनमवशं निजाग्रजं व्रज गाढतां किमसि लक्ष्मण श्लथः ।
भरतस्य मातुरुपदेशदायिनी निकटं तवापि किमियाय मन्थरा ॥ ३७ ॥

महतामनास्थमबलाजने मनो मम कारणात् किमिति नाथ सीदसि ।
अधिरोपयामि न भवन्तमत्ययं दयितं यशो यदि निहन्यतामरिः ॥ ३८ ॥

इति मे रहस्यमिदमञ्जनासुत श्रवणान्तिकं प्रियतमस्य लम्भय ।
परिकुप्यतीव परुषेण चेन्मनागनुनाथयैनमुपगृह्य पादयोः ॥ ३९ ॥

अयमार्यपुत्रचरणाब्जसन्निधावुपधीयतां मम शिरोमणिस्त्वया ।
स जनः सदैव निजसिद्धिसंशयी प्लवगेश विश्वसितु वीक्ष्य मामिव ॥ ४० ॥

त्यज संशयं श्वसिति सा तव प्रिया हृदयं कठोरमिदमेनया कृतम् ।
इति भाषमाण इव तस्य पादयोरयमश्रु मोक्ष्यति महश्छलान्मणिः ॥ ४१ ॥

चरणौ कुरुष्व विवृणुष्व मूर्धजान् धनुराशुगांश्च निकटे निवेशय ।
विरहातुरस्य मम पत्युरत्ययं मणिरत्न यत्नपरमो निवारय ॥ ४२ ॥

जननीति सा न परमेव कैकयी विधुरस्य हेतुरियतस्त्वानिशम् ।
दयिताद्वयाऽहमपि संप्रति प्रभोः क्षिपतीव दुःखशतमाहरामि ते ॥ ४३ ॥

इति रामभद्रसहधर्मचारिणीं धरणीं गतां गिरमुदीर्य मूर्छया ।
उपचारसंभृतमुहूर्तयापनैः कपिरब्रवीन्मधुरशीतलं वचः ॥ ४४ ॥

त्यज देवि संशयमधीश्वरं प्रति त्वमिव त्वदेकहृदयः स ताम्यति ।
प्रतिकारयष्टिशिखरावलम्बनाद्ध्रियते कथंचन परिस्खलन्नपि ॥ ४५ ॥

इयमेति मन्युकुपितेयमीक्षते हसतीयमुल्लसति चेयमन्तिकात् ।
इति स ब्रुवन्नहसि रूढवेपथुर्भवतीमयं भुवनमेव पश्यति ॥ ४६ ॥

कृपणं न लक्ष्मणमपीक्षतेऽधुना नच वानरेन्द्रमपि सन्दिशत्यसौ ।
जयति प्रपन्नविधुरोचितव्रतो बत जानकीति परमक्षरत्रयम् ॥ ४७ ॥

१. BCDE सुचिरेण । २. A C D E मयमेव तद्गतम् । मिदमेतया हृतम् । ३. B ते । ४. BCD तोऽथ । ५. A कापि संप्रति । ६. BCDE चारिणी तदा । ७. A पुनः । D पित्तः ।

नलिनीष्वनिद्रनलिनासु निश्वसित्यलिनीषु मञ्जुमणितासु मुह्यति ।
रजनीषु चन्द्रधवलासु धावति स्फुटमत्र तत्रभवतीं विलोकयन् ॥ ४८ ॥

स परिस्खलन् परिसरेषु तेष्वपि प्रततानवप्रथमसस्यराजिषु ।
श्लथमुष्टिकृष्टविशिखासनः शनैरनुजेन तेन रुदताऽवलम्ब्यते ॥ ४९ ॥

स विलोलबाहुयुगलः स्खलत्पदो हृदि दत्तपाणिरनुजन्मना मुहुः ।
अवलोक्यते हरिणकैरुदश्रुभिस्तत्र कारणेन करुणां दशां गतः ॥ ५० ॥

घटमानबालघनकोमलाम्बराः प्रतिदिग्विजृम्भितकदम्बवायवः ।
अगमन्नगाग्रतरुषु त्वदीशितुः दिवसाः कथञ्चिदवशेषितासवः ॥ ५१ ॥

तव सुप्रवृत्त्यधिगमोद्यमामृतप्रतिरुद्धघोरमदनाग्निवेदनः ।
अधुना स चिन्तयति मन्त्रिभिः समं समरापदानमवलम्बमात्मनः ॥ ५२ ॥

कमलासनप्रतिसमः स जाम्बवान् विनतो नतश्च कविजीवसंनिभौ ।
तव यान्ति भर्तुरपरे परश्शतां वितते वितर्कतमसि प्रदीपताम् ॥ ५३ ॥

सुरशिल्पिसूनुरसुतस्य शिल्पिनामधिपो नलः कमलपत्रलोचने ।
शिखिनः सुतो नयति नील इत्यसौ नियुतं शतेन हतमुत्तमौजसाम् ॥ ५४

नवतिग्मदीधितिकडारलोचनो नवतिप्रतीतपृतनापतीश्वरः ।
जयति च्छलप्रधनविभ्रमातुलः प्रैतलायुधो दधिमुखश्च मातुलः ॥ ५५ ॥

श्वशुरः सुषेण इति चास्मदीशितुः गणनादरिद्ररणलालसानुगः ।
व्रणमाशु रोपयति भीषणं दृशा निषधादिसर्वकुलशैलसानुगः ॥ ५६ ॥

रणदोहदोद्धृतपद्ममहीधराः शरभादयः प्रथमयूथपाश्च ते ।
हसितप्रभञ्जनजवास्तव प्रियं प्रणमन्ति शङ्कुहतपद्मसंख्यया ॥ ५७ ॥

प्रसरन्ति संप्रति परीत्य राघवं प्रथयन्त्यमी किमपि देवि लाघवम् ।
निधनं नयन्ति युधि पश्य रावणं समतीत्य सिन्धुमधुनैव लावणम् ॥ ५८ ॥

अहमङ्घ्रिरेणुरपि काननौकसां न भवामि रामपरिपार्श्ववर्तिनाम् ।
बहिरेवमादि विरलेशदर्शनः शनकैर्निहीनकरणीयमारभे ॥ ५९ ॥

१. D शम्प । २. BC वि । ३. BD पिनिस्तमं E पुनः समं । ४. B तमाकुल । ५. A पद्ममुखि ।

शिशुचापलाच्च रविमभ्युपेयुषः कुलिशायुधेन कुलिशाहतिव्यसोः ।
अमृतोक्षितस्य ललतो ममाहृताः पवनाङ्गयेन महता महर्द्धयः ॥ ६० ॥

प्रतियामि रामगृहिणि क्षणादहं तमुदीक्षसे नियतमस्मदीश्वरम् ।
दशकन्धरान्धतमसच्छिदे चिरादुदितं समेत्य महसामिवोत्करम् ॥ ६१ ॥

मणिरुन्मयूखततिरेष तावकः प्रियवागहं च हरिवीरशावकः ।
त्वदिनं[1] विनोदयति जातनिश्चयः स रुचामुदीरितजयध्वनिश्च यः ॥ ६२ ॥

कथयामि संनिहितमेव किंतु तं समुपेतमौलकापिचक्रमङ्गदम् ।
दिशति द्विषां कथमपि स्मृतिं गतो हृदि यो भयाख्यमनुपक्रमं गदम् ॥ ६३ ॥

अलघुष्वमीषु नगनिम्नगोदधिक्षितिलङ्घनादिषु निदेशवस्तुषु ।
अगणेयवीरहरिवाहिनीपतेरहमस्य हस्तविशिखो वलीमुखः ॥ ६४ ॥

नरदेवि देहि नियमं करोमि किं किमिमाः क्षिपामि विकृताः क्षपाचरीः ।
प्रकटीकृतात्मतनुरुत्खनामि किं निखिलानशोकवनिकातरूनिमान् ॥ ६५ ॥

प्रणिहन्मि कानपि किमस्त्रपानहं कतिचित् पिनष्मि किमरेः शिरांसि वा ।
पुरमुद्धरामि किमिमां सपर्वतां प्रतियामि मूर्ध्नि भवतीं विधाय किम् ॥ ६६ ॥

न ममात्ययः क्वचिदपीह कश्चन क्षितिपुत्रि विश्वसिहि देहि मे गिरम् ।
करवाणि रावणशिरोमणीनितः स्वपदोपमर्ददलितप्रभाङ्कुरान् ॥ ६७ ॥

मुदितेव राजतनया तमब्रवीद्व्रज साधय प्लवगराज मा चिरम् ।
अभिकाङ्क्षितानि भवते महर्द्धयो ददतु द्युमार्गचलिताय देवताः ॥ ६८ ॥

न विरोदिमि श्वसिमि नोष्णमप्यहं न मुहुर्विरौमि न करोमि साहसम् ।
असुहेतवो हि मम संनिधापिताः सुतरां त्वयाऽऽर्यसुतपादपांसवः ॥ ६९ ॥

[3]कपिराज गच्छ पुनरेहि राघवद्वितयेन तेन सह तीर्णतोयधिः ।
नय मां तथा सति यथेच्छमिच्छति प्रियमङ्गना हि कृतकृत्यमीक्षितुम् ॥ ७० ॥

कथय प्रतिश्रुतमहार्जिकर्मणे मम लक्ष्मणाय पुनरुक्तमाशिषः ।
तव राज्ञि तत्र मदधीशवल्लभे न बहिर्भवन्ति वचनानि किन्तु मे ॥ ७१ ॥

---

१ C त्विदिर्ति । D त्वदितं । २ A स्व ३. B C D E व्रजवत्स तिष्ठ । ४. A ष्मि ५. A न्तु

व्रज सिद्धये हतसमस्तशात्रवः करवै नमश्चिरविपत्कृशाऽत्रै[1] वः ।
नय तं जनं निजविधानैर्[2] तत्रितां स्मर माँ[3]मयोगजनिताहितीव्रताम् ॥ ७२ ॥

रजनी समाप्तिमियमेति मारुते रजनीचरा इत इतश्चरन्त्यमी ।
हृदयं मँमाधिगतमेव गम्यतां गहना पुरीयमवधीयतामिह ॥ ७३ ॥

शिखिनं प्रदीप्तमनु तं सतीमयं प्रणतिं प्रदक्षिणवतीं विधाय सः ।
प्रचचाल पादपशतप्रणोदनैः परिबोधयन् परिसरेषु रक्षिणः ॥ ७४ ॥

पुनरुच्यते स्म परिबोधसंभवो निनदः कुलायकदनेन पक्षिणाम् ।
अभिधावतां तमनु रक्षसां रवैः पिदधे प्रभातपटुरानकस्वनः ॥ ७५ ॥

हृदि संनिधाप्य कुलदेवताशतं परिचिन्त्य मङ्गलशतं पुनः पुनः ।
प्रतिपन्नसाहसरसाय सा सती शिवमाशशंस पवमानसूनवे ॥ ७६ ॥

स जगाम निर्गमनमार्गतोरणं कपिरुत्पिपेष च विमार्गतो रणम् ।
रजनीचरानतिचिरार्द्रवैरसावुदये ममज्ज तदसृग्द्रवे रसा ॥ ७७ ॥

सचिवात्मजानथ निनाय पञ्च तान् प्रधनप्रपञ्चकुशलान् स पञ्चताम् ।
रणभोज्यमूर्ध्नि मुमुदे[8] स निर्भरं कवलान्निवृत्त इव पञ्चमाधिकात् ॥ ७८ ॥

रुरुचे[9] घनक्षतजनिर्गमोज्ज्वलप्रतिपक्षशस्त्रपदवीकदम्बकैः[10] ।
स्तवकाविशेषविभवामिवोद्वहन्निखिलामशोकवनिकां वलीमुखः ॥ ७९ ॥

धृ[11]तिरोपितव्रणशतः स तत्क्षणात् क्षणदाचराश्चिरमसृक् प्रचक्षरुः ।
किमिवानघस्य गदिनो न भेषजं करजक्षतान्युदधयः प्रमादिनाम् ॥ ८० ॥

जगृहुर्दशापि दशकण्ठसैनिकाः क्षतजोद्गमेन ककुभस्तथाऽरुणाः ।
न तदा विवेद स यथा महामतिः परितः प्रवृद्धमपि सान्ध्यमातपम् ॥ ८१ ॥

फलमर्धपक्वमिव पाणिनाऽपिनद् प्रमुखागतं झटिति जम्बुमालिनम् ।
युवराजमक्षमवहेलयाऽवधीदवधिर्यथा विविधैर्[12] वध्यसंहतेः[13] ॥ ८२ ॥

प्रजहास वासवजितं विलोक्य स प्रववल्ग दूरवैं[14]लितोच्चवालधिः ।
अपरोऽस्त्यभीष्टयशसां महौजसां न महोत्सवः प्रतिसमाह्वादृते ॥ ८३ ॥

---

१. BC नशात्र D द्वशा । २ B C D धन ३. B C D न्ममवोनि ४. A हि । ५. B C D स ।
६. B C D सुतरांबभू वुरंथवि । ७ A ग्र । ८. A सुमुदेन । ९. B C D जेऽथ । १०. B C काम ।
११. A धृ । १२. A यया विवन । १३. B तिं १४. D व ।

प्रहरन्तमायुधविशेषवृष्टिभिस्तलमुष्टिदन्तनखपुच्छसाधनः ।
तमुदग्रशृङ्गमृषभैः[1] स दर्पवान्[2] कपिरुच्चशृङ्ग[3]ककुदः समासदत् ॥ ८४ ॥

तदपास्तनिष्फलनिजास्त्रयोस्तयोर्घटनं नियुद्धकरणैरशोभत ।
प्रलयप्रभञ्जनजवप्रविष्टयोः कनकाद्रिकज्जलमहीध्रयोरिव ॥ ८५ ॥

अनयन्निपात्य पवितेजसं शयं कपिरिन्द्रशत्रुमपि जीवसंशयम् ।
चरमं स तेन जगृहे चिरोपितक्षतजापगाभिमुखवीचिरोषितः ॥ ८६ ॥

पितुरग्रतस्तमुरुसाहसो दधौ समितिर्ममज्जे[4] सहसा हसोदधौ ।
स वहन्बभौ न विनयं वनालयः प्रथमोद्धतस्य हि विडम्बनालयः ॥ ८७ ॥

मम बाल्य एव स गतः समक्षतां कुपितः प्रसन्नवदनश्च वासवः ।
अयमद्य चोत्तमशिरःपणार्जितत्रिजगत्प्रभुत्वरभसो दशाननः ॥ ८८ ॥

इयती कुतः सुरपतेरुदग्रता न च संपदां धनपतेरियान् भरः ।
स्फुरितं प्रचण्डमहसोऽपि नेदृशं नच भीषणत्वमिदमन्तकस्य वा ॥ ८९ ॥

क्व सुखं मुहूर्तमपि सर्वशङ्किनो नर्य[6]यन्त्रितस्य मरुतामधीशितुः ।
सुदृढैकदण्डविनिबद्धसंपदः परमस्य विश्वजयिनः सुजीवितम् ॥ ९० ॥

अयमाहिताद्रितनयाचमत्क्रियः पुरतो हरस्य हसितोज्ज्वलाधराम् ।
दहने घनास्रगुरुभिर्जुहूमुखैः जुहवांचकार मुखराजिमात्मनः ॥ ९१ ॥

अयमेव भूमिनिहितैकजानुना जनयन्निनादमयमम्बरोदरम् ।
भयविद्रुतप्रमथमुक्तकन्दरं गिरिमुज्जहार हरकेलिमन्दिरम् ॥ ९२ ॥

वरुणोऽयमस्ति निभृतोऽङ्घ्रिसंनिधौ[12] वरुणोऽयमानमति भक्तिमानिव ।
मम तातमप्यनिशमादिशत्ययं ममताऽनलस्य विहताऽसुनोष्माणि ॥ ९३ ॥

तमसे नमः सरजसे ययोरयं निचयस्त्रिलोकविजयी विराजति ।
परमा विभूतिरिह चार्थकामयोरवशस्त्रिवर्गयुगपूर्वराडयम्[13] (?) ॥ ९४ ॥

इति चेतसैव तमुदीक्ष्य मारुतिः स्तुतिपेशलामिव जगाद भारतीम् ।
अपकर्तुमप्युपगता महाशयाः स्फुटपौरुषेषु न भजन्ति मत्सरम् ॥ ९५ ॥

---

१. A भं । २. A स्यवत्क । ३. A सत्त्व । ४. B D तिंममार्जे ५. A यतस्य न । D द्धव ।
६. C D च । ७. A भटै । ८. BC रवाम् । ९. B D मितेन । १०. A यान्न ११. A दयम् D हसम
१२. D हियामया । १३. A योर , १४. A उ ।

विध्वस्तं विपिनमनेन तत्समस्तं ते नीताः प्रलयमनेन मन्त्रिपुत्राः ।
अत्रान्तं झगिति जगाम जम्बुमाली दीप्तेऽग्नाविह शलभत्वमाददेऽक्षः ॥ ९६ ॥

ओघो मे शर[1]सरितामनेन तीर्णः तन्नो[2]च्चैः फलितमिहासि[3]कानन मे[4] ।
वीरात्मा [5]ह्ययमहरन्ममासिधेनू[6]ः लब्धं मे विवरमनेन बाहुयुद्धे ॥ ९७ ॥

यत्सत्यं जयति समीरणं जवेन क्रुद्धोऽयं लघयति पावकं प्रभाभिः ।
नैतस्य प्रतिसदृशो मयाऽनुभूतः संप्राप्तः कथमपि मायया मयाऽयम् ॥ ९८ ॥

सामान्यप्लवगधियं न तातपादाः कुर्वन्तु प्रकटविशेष एष कोऽपि ।
इत्युक्त्वोपहितनिराकुलप्लवङ्गः स स्वस्यां भुवि निषसाद मेघनादः ॥ ९९ ॥

---

एँकः परं संप्रति सत्क्रियाभिः मनीषिषु व्याकुरुते विशेषम् ।
निबन्धनिर्वाहपरिश्रमज्ञो महाकविश्रीयुवराजदेवः ॥

किँ शीधुभिर्भवतु फाणितशर्कराद्यैः किंवा सितासहचरैः कथितैश्च दुग्धैः ।
दुग्धाऽब्धिलब्धसुधयाऽपि न किञ्चिदेव यत्राभिनन्दसुकवेर्विचरन्ति वाचः ॥
नाश्चर्यमावहति कस्य चराचरेऽस्मिन् श्रीहारवर्षनृपचन्द्रमसः प्रभावः ।
येनानिशं ललितकोमलकाव्यमूर्तेः सृष्टोऽभिनन्दकुमुदस्य महाविकासः ।

---

इत्यभिनन्दकृतौ रामचरिते महाकाव्ये हनुमद्ग्रहणो नाम
विंशतितमः सर्गः ॥

---

१. BCDE उच्चोऽब्धिः सच । २. BC च्चो । D तेनो । ३. BC D स्ति ४. B C D ते । ५. A धाराला अ । ६. BC नुं । ७. BCDE omit this sloka. ८. B C D read these two slokas.

# अथैकविंशः सर्गः

वीरैर्महार्हाभरणैर्मणिपीठनिषादिभिः
अवाप्तपूजं[1] पुरतः पुरुहूतजयोद्धुरैः ॥ १ ॥

विदूरतः प्रतीहारमन्दादरनिवेदितै[2]ः ।
दिक्पालदूतनिवहैरुपनीतमहोपदम् ॥ २ ॥

अलब्धासनमादित्यैर्दैत्यैः प्राप्तसभाजनम् ।
स्वैरोक्तशापं पितृभिर्मातृभिः स्तुतसाहसम् ॥ ३ ॥

अप्रवेशितकीनाशमसंभावितपावकम् ।
अनुदीक्षितनिष्क्रान्तसप्तविष्टपनायकम् ॥ ४ ॥

घोराभिचारमीमांसामुखरब्रह्मराक्षसम् ॥
निष्कास्यमानकरुणामूकब्रह्मर्षिमण्डलम् ॥ ५ ॥

प्रकामास्तृङ्मधुक्षीबैस्त्रिजगत्क्षयदीक्षितैः ।
रक्षोयुवभिराक्षिप्तं महाभैरवडम्बरम्[3] ॥ ६ ॥

विलासहसितस्वर्गं लीलाजितरसातलम् ।
समवेतमहायोधभरबन्धुरितावनि[4] ॥ ७ ॥

कथा कैव नृशंसानामधिभित्ति लसत्करैः ।
रत्नैरपि[5] गलेहस्तं दूरादेव ददे दशाम्[6] ॥ ८ ॥

निष्कनायकपादाग्रविमृष्टाशनिलाञ्छनैः ।
उदीर्णपाकाजितपाकं प्रवीराणामुरःस्थलैः ॥ ९ ॥

आयस्तस्फटिकासन्दीविटङ्करुचिवीचिषु ।
आमौलिनायकान्मग्नप्रधानरजनीचरम् ॥ १० ॥

यथाश्रेणि निविष्टानां रक्षसां रसनालिभिः ।
प्रत्युक्तासिलतापालीपरिक्षेपपरम्परम् ॥ ११ ॥

---

१. BC जां । २. B भिः । ३. BC मण्डलं । ४. BCD निम् । ५. A प्र । ६. A रेव । ७. A दद् ।

सज्वालमिव केश्याभि[1]: सव्यालमिव बाहुभिः ।
सज्योत्स्नमिव दंष्ट्राभिः सविद्युदिव दृष्टिभिः ॥ १२ ॥

अत्यर्पितबलात्कारमतिसंस्तुतसाहसम् ।
अतिशीलितपारुष्यमतिशिंक्षितवैकृतम् ॥ १३ ॥

अनुभूतान्वयामोदं व्यतिरेकभयोज्झितम् ।
उद्दामविक्रमगुणं प्रणुन्ननययन्त्रणम् ॥ १४ ॥

उल्कामुखशताकीर्णं विद्युज्जिह्वशताचितम् ।
दंष्ट्रालशतसंबाधं करालशतसंकुलम् ॥ १५ ॥

दूरदन्तप्रभापीठं[2] दंष्ट्रासङ्कटमन्तिकात् ।
न केवलं प्रहरणैर्घोरमाभरणैरपि ॥ १६ ॥

यत्सत्यं रावणास्थानमालोक्य हनुमानपि ।
तत्पूर्वातिथिभावाय साध्वसाय ददौ मनः ॥ १७ ॥

स्थितं विनीतमिव तं मेघनादोक्तविक्रमम् ।
कपिं ददृशुरुद्ग्रीवा दशग्रीवसभासदः[3] ॥ १८ ॥

हनुमद्दर्शनक्षुब्धा सा रक्षः[4]परिषद्बभौ ।
संवर्तपवनावर्तघूर्णितेव घनावली ॥ १९ ॥

बहवस्तं सभाशूराः क्रीडाकपिमकल्पयन् ।
अन्ये निश्चिक्युरन्यायविपाकं तमुपस्थितम् ॥ २० ॥

अश्रद्धयेव काक्षेण मकराक्षस्तमैक्षत ।
वासवद्विपि विश्वासाद्धूम्राक्षो न व्यतर्कयत ॥ २१ ॥

कदनेन कुमाराणां शुकः शोकं समाविशत् ।
सारणः कारणान्वेषी चिरं चिन्तापरोऽभवत् ॥ २२ ॥

सीताहरणपुष्पस्य फलबन्धः कियानपि ।
जातोऽयमिति संचिन्त्य विषसाद विभीषणः ॥ २३ ॥

१. D केश्यासि० । २. A राद्दन्तप्रभावाटं । ३. BCD मालोकयाश्चकुरुद्धितर्कोः । ४. B रक्षसः ।

इन्द्रजित्पाशनिष्पन्दे कपिन्द्रे तत्र सीदति ।
निकुम्भो निधनारम्भमनायासमचिन्तयत् ॥ २४ ॥

विससर्ज विरूपाक्षः क्षोभमल्पे वनौकसि ।
शोणिताक्षस्तमक्षस्य तत्वरे नेतुमध्वना ॥ २५ ॥

अपि तं मुक्तसंरक्षमपि रक्षःपुरस्कृतम् ।
अपि नम्रमपि प्रांशुः पिशाचो न व्यलङ्घयत् ॥ २६ ॥

केयमिन्द्रजितः श्लाघा सखे शाखामृगं प्रति ।
इत्यवादीन्महाकायमतिकायः समुल्लसन् ॥ २७ ॥

सुपार्श्वं पार्श्वतोऽपृच्छन्महापार्श्वो महाबलः ।
अयं स वाली न भवेद्येन लङ्केश्वरो जितः ॥ २८ ॥

अद्मयहं वानरमिमं नराणां सुहितो भवान् ।
इति सोत्प्रासमसकृद्धसो विघसं[1]मब्रवीत् ॥ २९ ॥

हस्तिकर्णहयग्रीवौ राक्षसौ राजवल्लभौ ।
युगपद्भासरभसावग्रतस्तममार्गताम् ॥ ३० ॥

अपूर्वः प्रातराशोऽयमद्य मे समुपस्थितः ।
ववल्ग विवृताकृतिरितिवादी महोदरः ॥ ३१ ॥

किं न पिष्टः शतघ्नीभिः गुम्फणैः[2] किं न सूदितः ।
इत्यवोचत्समुच्छ्रस्यै[3] दशकण्ठसुहृच्छठः ॥ ३२ ॥

अभि तं कपिमार्तण्डमास्थानगगनोदरे ।
प्रजगर्ज घनाघोषो[4] विद्युन्माली[5] निशाचरः ॥ ३३ ॥

विचित्रवेषाकृतयस्तास्ताः कौणपजातयः ।
ताभिस्ताभिर्विकृतिभिर्दूरतस्तमतर्जयन् ॥ ३४ ॥

आहरन्नपरे तस्माद्विस्मयक्षणपातिताम् ।
स्ववीर्योष्मारुणां दृष्टिं वज्रदंष्ट्रादयो भटाः ॥ ३५ ॥

---

१. D द्वशोविन्ध्यस । २. A ल्मासैः । ३. A तमुद्दिश्य । ४. B C D भोगो । ५. B C लि ।

विद्युज्जिह्वादयस्ते च तीक्ष्णास्तं हरिपुङ्गवम् ।
अपूर्वौत्सुक्यसंयुक्तपर्यायाः[1] पर्यवारयन् ॥ ३६ ॥

तत्क्षणोढप्लवङ्गास्याः स्वास्यभङ्गैर्व्यडम्बयन् ।
मायाविनः स्वलाङ्गूलैस्तल्लाङ्गूलमतर्जयन ॥ ३७ ॥

गन्धमाघ्राय रामस्य क्षुब्धाः पवननन्दने ।
विवव्रुः क्रूरमाकारं ताटकायाः सनाभयः ॥ ३८ ॥

त्रिशिरःखरमारीचदूषणस्मरणोद्भवम् ।
मन्युमैच्छन् कपौ तस्मिन्विमोक्तुं[2] निकषासुताः ॥ ३९ ॥

आरूढव्रणबीभत्समुखी शूर्पणखीति सा ।
स्वसा राक्षसराजस्य वैरानलमदीपयत् ॥ ४० ॥

अनाश्रयो वृद्धगिरामयं मे दुहितुः सुतः ।
तद्गच्छामीत्युवाचान्तः सशल्य इव माल्यवान् ॥ ४१ ॥

सहस्रमरुणाक्षाणामयुतं हरिचक्षुषाम् ।
कोटिस्तं कोटराक्षाणामीक्षांचक्रे वलीमुखम्[3] ॥ ४२ ॥

रामदूतः कपिरयं रक्षोभिर्बत लुप्यते ।
किं नः सांप्रतमित्यूचुरशक्ताः सुरचारणाः ॥ ४३ ॥

एधयित्वा तमाशीर्भिर्मुनयः शङ्कितात्ययाः ।
ययुस्त्वरितमालोक्य पौलस्त्यं[4] पुलहादयः ॥ ४४ ॥

वञ्चयित्वाऽऽननश्रेणीं रावणस्य शनैः शनैः ।
ववल्ग वीणां विश्रम्य रणकेलिकलो मुनिः ॥ ४५ ॥

राक्षसेन्द्रनियोगेषु द्रष्टुकामाः कपेः क्रियाः ।
उपाविशन् पुनर्देवाः प्रहस्तोत्थापिता अपि ॥ ४६ ॥

तस्य साहायकं रुद्राः करिष्यन्त इवापदि ।
कारणान्तरमालम्ब्य व्यलम्बन्त सहाम्बिकाः ॥ ४७ ॥

---

१. A मर्यादाः ।, २ B C D त्रिम्रो । ३ B C नौकसं । ४. स्त्य । ५. B C D पौलस्त्योत्सारि ।

लसद्भिर्विविधोष्णीषरत्नालीकिरणोत्करैः ।
वितानान्तरमातन्वन्निव चित्रपटीमयम् ॥ ४८ ॥

दंष्ट्रानिभादिन्दुकलाः कलयन्नसि[1]तैर्मु[2]खैः ।
कुण्डलीकृतमार्तण्डमण्डलैरिव राहुभिः ॥ ४९ ॥

मुखैर्वलीमुखालोकसघृणैः संहरन्निव ।
रयं रुपामसदृशं दशभिर्दशनोज्ज्वलैः ॥ ५० ॥

स्वासिलूनपुनर्जातां यशःकुसुमवासिताम् ।
हारनिर्झरिणीं शुभ्रां बिभ्राणः कन्दराटवीम् ॥ ५१ ॥

प्रसिद्धैः स्वभुजस्तम्भैर्विंशत्याऽवहसन्निव ।
मणिस्तम्भानसंख्यातान् सभायां सर्वतोदिशम् ॥ ५२ ॥

तुङ्गैरङ्गदपर्युप्तपद्मरागमरीचिभिः ।
दीप्तदर्पदवज्वालमिव बाहुवनं वहन् ॥ ५३ ॥

निष्कोपलच्छेविच्छन्नदिव्यास्त्रग्रामवर्त्मना ।
वक्षःस्थलेन रुन्धानो यशःपूरं मरुत्पतेः ॥ ५४ ॥

सप्तानामपि सिन्धूनां गत्वा पारमिवागतम् ।
निजं यशो हारनिभाद्विशालेनोरसोद्वह[3]न् ॥ ५५ ॥

हरिचन्दनविच्छित्तिमङ्गैः स्वेदद्रवां दधत्[4] ।
कैलासादिव संक्रान्तां धातुपङ्कतरङ्गिणीम् ॥ ५६ ॥

अन्तः सीतां[5]नुबन्धेन बहिः कश्मीरजन्मना ।
हृदयं हृदयोत्तीर्णो वहन्रागवलात्कृतम् ॥ ५७ ॥

आरूढो मणिपर्यङ्कमातङ्ग[6] इव सज्जनम् ।
नीलकौसुम्भलक्ष्येण कामक्रोधाविवोद्वहन् ॥ ५८ ॥

विशेषितावलेपोष्मा दुर्निवाराघमाक्षिकः ।
दोधूयमानैरनिशं तैर्वालव्यजनैरपि ॥ ५९ ॥

१. A मि । २. B C D रुचि । ३. BD साव । ४. BD वं वहन् । ५. A B शी । ६. B ङ्ग ।

विषवल्लीष्विव स्त्रीषु विषक्त[1]भुजपादपः ।
दत्ताङ्घ्रिः शीलशमयोरिवोर्ध्वे[2] रत्नपीठयोः ॥ ६० ॥

क्रूरोदारमहाकल्पे सुभ्रातरि[3] महोदरे[4] ।
भावमासञ्जयन् गाढं रूढो रागं[5] इवांहसि ॥ ६१ ॥

घनसर्वांगमोद्गारदीप्तिपूत[6] विकत्थनः ॥
अत्युदग्रतपस्सिद्धिरुद्धपापक्रियाफलः ॥ ६२ ॥

विकार इव शोभावान् प्रमाद इव सिद्धिमान् ।
प्रज्ञावानिव संमोहः कलहः सान्त्ववानिव ॥ ६३ ॥

संभोगवानिव व्याधिरुद्वेगो धृतिमानिव ।
अविवेक इव श्रीमानन्याय इव युक्तिमान् ॥ ६४ ॥

क्षेमवानिव दुष्कालः प्रलयो लोकवानिव ।
कीर्तिमानिव दुर्वादो निरयः स्वर्गवानिव ॥ ६५ ॥

रत्नाकल्पविशेषैस्तैस्तैस्तैरङ्गैश्च भीषणैः ।
अक्ष्णां निर्वार्णनिर्वेदावपर्यायं समर्पयन् ॥ ६६ ॥

स्वैरमाकृष्य नेत्राणि वक्त्रेभ्यः सुरयोषिताम् ।
पर्यवस्थाप्य कष्टेन मनः सीतासमुत्सुकम् ॥ ६७ ॥

धैर्यवानिव संक्षोभं संनिरुध्य सभासदाम् ।
वक्तुमैच्छत्स्वयं रुष्टो रामदूतं दशाननः ॥ ६८ ॥ कुलकम् ।

प्रागेवापिदधुः कर्णौ कराभ्यां मुनयो निभात् ।
सतां सुदुर्निवारं हि दुरुक्तश्रवणाद्भयम् ॥ ६९ ॥

विभीषणादयः सभ्याश्चिरमन्तश्चकाम्पिरे ।
सूक्तं समर्थयामासुर्न तस्य कटुभाषिणः ॥ ७० ॥

स्वैरं प्रहस्तहस्ताग्रनिषेधनिभृताननाः ।
लिखिता इव तत्कालं तस्थुस्त्रिदिवचारणाः ॥ ७१ ॥

---

१. B नि । २. BD वार्धे । ३. D स । A स्व । ४. A reads for this line विजृंभमाण-निकटाल्कुंभकर्णे कनीयसि । ५. B C D चाढं स्फुटो रोग इवागसि । ६. B C D मोहसर्वांगमाहारदीप्तपुत्र । ७. A भृ । ८, B प D द । ९. BC षु । १०. BCD व ११. B CD आ ।

आभिमुख्यं प्रपन्नेन मुखेनैकेन सोऽब्रवीत् ।
प्राश्निकैरिव पार्श्वस्थैरितै[1]र्मौनमाददे ॥ ७२ ॥

कुतः कस्त्वं कथमिह प्रविष्टः केन हेतुना ।
वद वानर निश्शङ्कमङ्के वत्सस्य वर्तसे ॥ ७३ ॥

आवर्जितः शक्रजयी त्वयाऽयं पुण्यवानसि ।
गच्छ मुक्तोऽसि दुष्टोऽपि मा पुनश्चापलं कृथाः ॥ ७४ ॥

किमभाङ्क्षीः क्षितिरुहान् किमक्षमवधीः शिशुम् ।
अनुयोगक्षमो नासि कपिजातेः[2] परिप्लवा[3]त् ॥ ७५ ॥ —आप्लवात् ।

कच्चिद्वालिसगन्धस्त्वं साध्वभून्न हतोऽसि यत् ।
सत्यं मानुषमात्रेण मित्रं तन्मे निपातितम् ॥ ७६ ॥

न जातु पुरुषो हन्ता निहन्त्री नियतिः परम् ।
यत्त्वमप्यवधीर्योधं जम्बुमालिनमाहवे ॥ ७७ ॥

निशीथ एव किमितो न गतोऽसि यथागतम् ।
कामकारः कुमारेषु कोऽयं सर्वङ्कषस्[4]तव ॥ ७८ ॥

अलीनां कोकिलानां च तन्मे साधारणं वनम् ।
तत्र कश्चिन्न विशतो दोषः शाखामृगस्य ते ॥ ७९ ॥

स्तेनवत् किं प्रविष्टोऽसि धाष्टर्यमस्ति रणेषु चेत् ।
चरन्तीत्थं गृहच्छिद्राण्याखवो न वलीमुखाः ॥ ८० ॥

यदि त्वमर्थलोभेन प्रविष्टो नगरीमिमाम् ।
तन्नः प्रार्थय दीयन्तां कति ते रत्नकोटयः ॥ ८१ ॥

मर्तुमिच्छोः कपिच्छद्मा नूनं कस्यापि दिक्पतेः ।
प्रणिधिः प्राणवात्सल्याच्छन्नश्चरसि नः पुरीम् ॥ ८२ ॥

यत्सत्यं रामदूतस्त्वं लक्ष्यसे यदितः शनैः ।
विमार्गन्निव वैदेहीमशोकवनिकामगाः ॥ ८३ ॥

१. BC राननैः २. BD तिः ३. BD वा । ४. A सुकुमारेषु कस्त ।

भूयिष्ठं त्वयि जिघ्रामो वानरे नरसंगतिम् ।
कथय स्फुटमस्मासु निह्नवे दण्डमर्हसि ॥ ८४ ॥

तदैव दैवहतयोः तयोः श्लथमिव श्रुतम् ।
पणपूर्वकमस्माभिः सख्यं सुग्रीवरामयोः ॥ ८५ ॥

स्वीयानामिव मे धाम्नामध्यक्षाश्चारचक्षुषः ।
चतुर्दशानामभितो विष्टपानां प्रवृत्तयः ॥ ८६ ॥

वधबन्धादयस्तास्ताः कारणैः कृपणस्य ते ।
पुनरुक्ता इवाभान्ति परिक्षिप्तस्य मद्भटैः ॥ ८७ ॥

कुम्भकर्णः किमत्राह किं ब्रवीति विभीषणः ।
किं चेतसि प्रहस्तस्य मेघनादः किमिच्छति ॥ ८८ ॥

भो भो भटाः स्फुटमयं विषमो वानरश्वरः ।
सदृशं क्रियतामस्मिन्नित्युक्त्वा गिरमारमत् ॥ ८९ ॥

ध्वनिः स तस्य गम्भीरः सभां संपूर्य निर्ययौ ।
त्रिलोकीमिव कल्पान्तमेदुरस्य पयोमुचः ॥ ९० ॥

प्रशशंसुर्नृशंसास्ते न परं तस्य तद्वचः ।
प्रकाशयन्तोऽनुगतिं दूरतस्त्रिदशा अपि ॥ ९१ ॥

अहो[1] भयं नाम महत्तदानीं मरुतोऽपि यत्[2] ।
मारुतेरत्ययावेदि तद्वाक्यमुपतुष्टुवुः ॥ ९२ ॥

अयमार्यो महाराज[3] श्रूयतां तावदाह किम् ।
इति वाचि समस्तानामन्वयुङ्क्त स तं पुनः ॥ ९३ ॥

प्रश्नेषु तस्य बहुषु कृत्वा किंचिदिव स्मितम् ।
अजातसंभ्रमो वाक्यं वानरः स्वैरमाददे ॥ ९४ ॥

प्रज्ञावानसि पौलस्त्य त्वयेदं साधु तर्कितम् ।
कस्यापि दिक्पतेर्नाहं रामस्याहं जगत्पतेः ॥ ९५ ॥

१. BC दो । २. D द्द । ३. A जः ।

महेन्द्रस्य गिरेः शृङ्गात् प्लवङ्गो हनुमानहम् ।
उल्लङ्घिताब्धिर्वैदेहीं त्वां चान्वेष्टुमिहागतः ॥ ९६ ॥

मत्तसुप्तेषु रक्षःसु विचित्य निखिलां पुरीम् ।
सा शोकविधुरा देवी दृष्टाऽशोकवने मया ॥ ९७ ॥

स दृष्टस्तव दु[1]ष्टस्य तस्यामुपगमादरः ।
निर्भर्त्सनाविमनसो निर्गमश्च ततः पुनः ॥ ९८ ॥

देहत्यागोद्यतायां च तस्यां निष्पतिते त्वयि ।
मयोक्तो रामसन्देशः प्रतिसन्देशहारिणा ॥ ९९ ॥

रामसुग्रीवयोः सख्यं श्रुतवानसि रावण ।
उक्तस्त्वयि कथं नायमस्माद्दिग्विचय[2]श्चरैः ॥ १०० ॥

वने विन्यस्यति पदं कियन्मात्रं शिखी पुरा ।
स जायते पुनस्तावान्यावन्मात्र[3]मिदं नभः ॥ १०१ ॥

तेजस्विनो वितन्वन्ति प्रारम्भेषु न डम्बरम् ।
[4]स्फुरत्प्रतापाश्चरमं क्रममाणाश्चकासति ॥ १०२ ॥

उदायुधानि पुर[5]तः संपतन्ति पतङ्गवत् ।
रक्षांसि रजनावेव निहतानि मया तव ॥ १०३ ॥

नोक्तं त्वयै[6]व कृपणं तव रावण सैनिकैः ।
कथं तानवगच्छामि कुमारांनतिकर्कशान् ॥ १०४ ॥

अपि[7] निर्बन्धरुष्टेन मया समरमूर्धनि ।
विक्रमोत्कर्षवात्सल्यादयं ते शेषितः सुतः ॥ १०५ ॥

स्वयमुत्पत विस्रब्धं वीरान्वा पुनरादिश ।
पुरः प्रतिनिविष्टस्य यत् क्षमं तत्कुरुष्व मे ॥ १०६ ॥

ऊढोऽयमिन्द्रजित्पाशस्तवापि बलमीक्षितुम् ।
दत्तभङ्गः प्रहर भोः प्रभुकृत्यं विलम्बते ॥ १०७ ॥

---

१. C ष्ट. D तु । २. BC द्विधविधि । D द्विविधविस्तरैः । ३. A न्यावतोऽल्पमिदं । ४. A दप्त ।
५. A परि । ६. A यै । ७. AC इति । ८ AC ति

श्रुतमस्मद्वचः सभ्याः समृद्धं च कुतूहलम् ।
हन्तव्याः संप्रति वयं किं नोत्तिष्ठन्ति घातकाः ॥ १०८ ॥

कृतं न किंचिदक्षेण रजोऽस्तं जम्बुमालिना ।
इदं मे मेघनादेन ग्रीवायां सूत्रमर्पितम् ॥ १०९ ॥

दर्शयिष्यामि युष्माकमपि प्रौढिं सभासदः ।
अङ्गदार्यै[1] गतः पारमङ्गैरक्षतरोमाभिः ॥ ११० ॥

अस्तु रामोऽस्तु सौमित्रिरस्तु राजा रवेः सुतः ।
एकस्य तच्चमूरेणोर्बलं रावण पश्य मे ॥ १११ ॥

हितं वा शृणु मे वाक्यमोमिति त्यज्यतामियम् ।
जानकी जगदीशस्य रामस्य पत पादयोः ॥ ११२ ॥

सुव्यक्तं स्वयमन्धोऽसि देशका अपि ते द्विषः ।
यैरयं पात्यसे कूपेष्वनाथः शुचमर्हसि ॥ ११३ ॥

रामस्य रामजयिनः स्वस्यार्जुनजितस्य च ।
व्यक्तं पश्यान्तरं तावदारभेथास्तथा सति ॥ ११४ ॥

पुरुषः सदृशारम्भी फलैः पौलस्त्य युज्यते ।
किमद्रौ विन्दाति पतन् प्रतिघातादृतेऽनिलः ॥ ११५ ॥

विद्वानसि दशग्रीव रामे किमपराध्यसि ।
अचेतनोऽपि नमति पश्य स्रोतसि वेतसः ॥ ११६ ॥

तेजोदरिद्रं रजनावाक्रामति जगत्तमः ।
नेष्टे तद्गृहमात्रेऽपि दीपे शुभदशाजुषि ॥ ११७ ॥

वलत्यत्युच्चमासाद्य[2] नद्योघैः[3] सुमहानपि ।
प्रतिस्खलन्निहास्मासु त्वमपूर्वो जडाज्जडः ॥ ११८ ॥

त्वं हि पौलस्त्य विदितो वेदवानग्निमानिति ।
कथं बत विमग्नोऽसि परस्त्रीहरणागसि ॥ ११९ ॥

रामं मनुजशार्दूल जिगीषन्न विलज्जसे ।
विजेता यस्यैं[4] ते भस्मीभूतो मदनगर्दभः ॥ १२० ॥

१. BD दा । २. A चलत्युच्चं समासाद्य । D वलवत्युच्चमासाद्य । ३. C घोषः । ४. A पश्य ।

अतिक्रान्तास्त्वयाऽन्धेन शीताः सद्गुरुशाखिनः ।
क्व दुर्नयातपक्रान्तो विश्रान्तिं लभसेऽधुना ॥ १२१ ॥

किं ते कृतं सुरगणैर्यत्तान्मथ्नास्यहर्निशम् ।
अजितो रिपुरात्मैव तं मूढ न जिगीषसि ॥ १२२ ॥

नियतिं प्रतिपश्यद्भिर्यापितोऽसि जि[1]तात्मभिः ।
तत्रैव तव दुर्बुद्धेर्जितबुद्धिरजायत ॥ १२३ ॥

जाना[2]सि वालिनो वीर्यं तत्समस्तत्सुतोऽङ्गदः ।
अधिको वा युवत्त्वेन युवराजः स तेऽन्तकः[3] ॥ १२४ ॥

पारा[4]द्ध्रुवं वारिनिधेर्वालिसूनुरसौ बली ।
उन्मूलनाय भवतो मद्विलम्बादिहैष्यति ॥ १२५ ॥

नीलं[5]स्तमनु सेनानीरानालिः प्रलयाय ते ।
कालाग्निरिव संक्रुद्धः क्षणार्धादागमिष्यति ॥ १२६ ॥

इति वदति पुरस्ताद्वानरे नेतरीव त्रिभुवनरिपुरट्टं[6] रोषवेगाज्जहास ।
सदृशनियमहेतोः पश्यतः स्वायुधीयान् स बत हत हतेति व्यक्तमेवादिदेश ॥ १२७ ॥

जलमुच इव धारावारिभिर्वारणेन्द्रं नगमिव नदपूरास्तीरभाजन्तरङ्गैः ।
कपिवृषमभिजघ्नुर्यातुधानास्तदानीमसिमुसलभुशुण्डीमुद्गरब्रह्मदण्डैः ॥ १२८ ॥

पटलमिव हिमानामह्नि मध्यस्थभानौ विहसितमिव साधौ निष्पकम्पे खलानाम् ।
रजनिचरभटानामस्त्रजालं तदुच्चैः स्वयमवसितमासीन्मारुतौ वज्रकाये ॥ १२९ ॥

विकलसकलकाया मोघसर्वास्त्रमोक्षाः क्षतजनदपरीताः प्राणसंदेहभाजः ।
दहनसखसुतस्य स्पर्शमात्रेण रोम्णामवनिमवनिपेतुस्ते शतं यातुधानाः ॥ १३० ॥

इत्यभिनन्दकृतौ रामचरिते महाकाव्ये
रावणसल्लापो नामैकविंशः सर्गः ॥

---

[7]आचन्द्रसूर्यं निदधे जगत्सु व्यासस्य यद्वज्जनमेजयेन ।
एषोऽभिनन्दस्य महाप्रबन्धः क्षोणीभुजा भीमपराक्रमेण ॥

---

१. BD य । २. D ज्ञाता । ३. A न्तिकात् । ४. D दा C रा । ५. B C D E omit this sloka ६ AD पतिरट्टं । ७. C omits this sloka.

# द्वाविंशः सर्गः ॥

शकभूपरिपोरनन्तरं कवयः कुत्र पवित्रसंकथाः ।
युवराज इवायमीक्षितो नृपतिः काव्यकलाकुतूहली ॥[1]

---

तदादिना तेन[2] महाभटानामकाण्डभङ्गेन विघूर्णमानम् ।
अबोधयत्पङ्क्तिमुखं हनूमान्निपातमिच्छन्निव तस्य रोद्धुम् ॥ १ ॥

जितास्तवामी सुभटाः पुरस्तान्मयैकशाखामृगशावकेन ।
विरम्यतां रावण वैरबन्धाद्भरं विसोढाऽसि न यूथपानाम् ॥ २ ॥

भयादमी ते न वदन्त्यमात्या न रामदूतस्य भयं ममास्ति ।
अतो हितं कारुणिकत्वदोषाद्दशानन त्वामनुशास्मि भूयः ॥ ३ ॥

विलोकितं बाहुबलं भटानां विलोकितं स्थाम कपेर्ममापि ।
विधेहि विद्वन्नधुनाऽनुरूपं किमध्वना गच्छसि शालभेन ॥ ४ ॥

अपि प्रयुक्तापकृतौ त्वयीत्थं न मे हृदि प्रत्यपकर्तुमिच्छा ।
प्रधावितानक्षमयाऽल्पसत्वानुदारसत्वाः क्षमया जयन्ति ॥ ५ ॥

प्रदीप्तमेतज्जगदक्षमस्य क्षमस्य सर्वत्र मनः प्रसन्नम् ।
स भीतिवेगो यदुपेतमग्रे कटुस्वनः श्वा भषते महोक्षम् ॥ ६ ॥

अतो न मेऽस्ति त्वयि काप्यसूया शमस्य पृच्छ स्फुटमभ्युपायम् ।
न मादृशाः शासति युष्मदादीनपि प्रहर्तुं प्रसृतान[3]पथ्यम् ॥ ७ ॥

रजोजुषः सत्यपराङ्मुखस्य स्वकन्धरालीकदनं कियत्ते ।
तमुग्रपाकं मखदीक्षितस्य स्मरानरण्यस्य वधं नृपस्य ॥ ८ ॥

स्मर स्मरारिप्रमथस्य शापं बत प्लवङ्गेषु जिजीविषा चेत् ।
तपः कुसृत्यैव तवापकृष्टं तटीतरोः पत्रमिव स्रवन्त्या ॥ ९ ॥

गतः स कालस्तुलितो यदाद्रिस्त्वया जगद्द्रोहपरायणेन ।
तवाद्य पापोष्मविलीनशक्तेस्तृणान्यपि व्याकृतगौरवाणि ॥ १० ॥

---

१ A reads this. । २ B D दिनान्ते । ३ B D पुत्रप्रणया ।

न चेदिदं रावण वानरेण मयेत्थमाक्रम्य कटूच्यसे त्वम् ।
शृणोषि तच्च प्रणमद्भिरास्यैः खगेन्द्रसंपातमिवोरगेन्द्रः ॥ ११ ॥

न सर्वदाऽऽशाः पिदधाति काली न सर्वदाऽऽपः श्लथयन्ति सेतून् ।
न सर्वदार्कस्तपति क्षितिध्राञ्च सर्वदाऽग्निर्दहति द्रुमालीः ॥ १२ ॥

कृतं त्रिलोकीकदनं कदापि त्वयैकवीरत्वमुपागतेन ।
निषीद संप्रत्ययमन्तमेषि वयं कृतान्ताः कपयः शतं ते ॥ १३ ॥

रिपुः सखा वा भव नो दशास्य प्रतीच्छ रामस्य शिरोभिराज्ञाम् ।
द्राविष्यति द्रोहपरेऽपि स त्वय्यपेतमात्सर्यमना महात्मा[1] ॥ १४ ॥

प्रहर्तुमिच्छाऽस्ति भटाः पुनश्चेत् समेत्य शस्त्रान्तरमाददीध्वम् ।
विधूय गच्छामि तदप्यखेदान्मरुत्तरूणामिव पाण्डुपत्रम् ॥ १५ ॥

तवैककस्य क्षणदाचरेन्द्र मयेह बाहुद्रविणं न दृष्टम् ।
विलोकयिष्यामि तदप्यदूरादयं पुरो दाशरथेर्भवामि ॥ १६ ॥

इति ब्रुवाणं प्लवगं तमूचे निशाचरेन्द्रस्त्वपसे[3] न धृष्टः ।
अनेन हेलोज्झितहस्तहेतिप्रमाथमात्रेण विकत्थमानः ॥ १७ ॥

विलासिनीनामिव मोहनेषु विलोलधंमिल्लकुरुण्टकानि ।
मयि व्यलुप्यन्त महाहवेषु ककुप्पतीनां परमायुधानि ॥ १८ ॥

कदाऽपि चक्रेण हरेरवाप्तं न मर्म वर्मक्षतनेमिना मे ।
बहिर्व्यतिक्रान्त्यसहेन सारं कुतस्करेणेव महालयस्य ॥ १९ ॥

प्रदीपमालास्विव नश्यति स्म क्षणेन खद्योतकतामुपेत्य ।
असौ ममोष्णीषमणिप्रभासु सहस्रनेत्रस्य सहस्रधारः ॥ २० ॥

किमङ्गनानां भुजकन्दलीयं प्रसूनगर्भच्छददाम किं वा ।
विकल्प्य कण्ठेष्विति जन्यमूर्ध्नि मयाऽनुभूतो वरुणस्य पाशः ॥ २१ ॥

व्यलीकमन्युष्विव कामिनीभिः श्लथोज्झितस्यै स्मरदुर्बलाभिः ।
पतन्ममाङ्गेषु तुलामवाप मृणालकाण्डस्य यमस्य दण्डः ॥ २२ ॥

१. C प्रसी २. D लो हमात्मा ३. A स्स्ववशेन ४. B C स्व । ५. D प । ६. BCD महायु ।
७. A वामा ८. BC श्लाघ्योद्य ।

मिथोऽस्नपानोन्मदयक्षरक्षःसमाकुलेषु प्रधनाङ्गणेषु ।
समापतत्खेचरहस्तमुक्ता गदाऽग्रजस्य स्रगिवोत्तमाङ्गे ॥ २३ ॥

इतीदमुक्त्वा तमसौ तदानीं तदुत्तरोक्तिश्रुतिनिर्व्यपेक्षः ।
प्रदीपयामास भटान्वचोभिरुपोढहेतिव्यसनव्यलीकान् ॥ २४ ॥

श्रुतं वचोऽस्य क्षणदाचरेन्द्राः क्षतो न शस्त्रैर्निशितैरयं वः ।
विचिन्त्यतामाशु वधोऽस्य बुद्धया दुनोति जल्पन्मुखरः शिरांसि ॥ २५ ॥

कपिब्रुवः कोऽप्ययमप्रियोक्तिरुपागतः स्वस्य वधं विमार्गन् ।
अनर्गलेनाननवर्त्मनाऽऽशु निवेश्यतां संप्रति जाठराग्नौ ॥ २६ ॥

निरायतास्वाद[1]मनोरथान्तमुपैतु वास्मिन् रसनावली वः ।
प्रदत्त यद्वा[2] दशनाङ्कुराणामनेन वल्लूरसुखं सखायैः[3] ॥ २७ ॥

विबोध्यते किं बत कुम्भकर्णः त्वमेव रे [4]कुम्भ कुरु प्रयत्नम् ।
अशक्नुवन्वा देहशतं विधाय भवा[5]न्निकुम्भाद्य कृतं भयेन ॥ २८ ॥

ययौ यतः कुम्भभवं[6]स्य कुक्षौ जरामुरभ्राकृतिरिन्द्रशत्रुः ।
क एष कस्यापि नराधमस्य निदेशकारी बत वानरो वः ॥ २९ ॥

न रोचते वः कृपणः कपिश्चेदयं महामांसभुजोऽस्मदीयाः ।
उदीर्णनैर्घृण्यगुणाय तर्हि वितीर्यतां सर्वभुजेऽनलाय ॥ ३० ॥

वसादिकस्नेहविशेषदिग्धपिनद्धकार्पासिकवाल्कफालः ।
विलोक्यतां वालविलग्नवह्निरयं किमह्नाय कपिः करोति ॥ ३१ ॥

इतीरिते तेन रदान्वितेने विलोकयामास मुखानि तेषाम् ।
भयेङ्गितज्ञाः किल ते हताशाः हुताशमादाय तमभ्यगच्छन् ॥ ३२ ॥

पुरस्तथापीक्षितुमास्यभासं न सेहिरे तस्य दशास्यदासाः ।
अदीपयन् पृष्ठजुषोऽशुकान्तं कथंचिदानीय ललामलग्नम् ॥ ३३ ॥

भयात्तदानीं किल सोऽतिमात्रं तथाऽणिमानं प्लवगः प्रपेदे ।
प्रपुप्लुवे मोचितकण्ठपाशः यथा क्षणादङ्गणवेदिकायाम् ॥ ३४ ॥

---

१. A तस्वाद २. AC पद्या ३. AC मुखं सुखाय । ४. A चेत्कु । ५. ABD अशक्नुवन्देहाखितं भवेऽस्मिन्नलं । ६. D चर ७. BCD चार्मांधि ८. B ली ।

विधूय लाङ्गूलमथ स्फुलिङ्गैस्तदङ्गणं पिङ्गलदिग्वितेने ।
ववल्ग विक्षिप्तसटाकलापस्ततस्तटित्पुञ्ज इवाञ्जनेयः ॥ ३५ ॥

ततश्च मुक्त्वा कपिरट्टहासं प्रदीप्तविस्फोटितपुच्छदण्डः ।
पपात पृष्ठेषु महागृहाणां गृहीतकालानलरुद्रलीलः ॥ ३६ ॥

सरेचकैः[1] कुत्रचिदङ्गहारैश्चचार चारीभिरिव क्वचिच्च ।
क्वचिच्च पुच्छान्तविदाहवेगाद्वियद्वितेने करणैर्विलङ्घ्यैः ॥ ३७ ॥

मुमूर्षुरेष प्लवगस्तपस्वी विचेष्टतेऽर्चिःपरिविष्टकायः ।
किमीक्षणेनेति विभीषणाद्याः कृपालवः कोमलकण्ठमूचुः ॥ ३८ ॥

चचार चीरान्तविलोलमर्चिर्न तस्य लोमान्यपि पुच्छभाञ्जि ।
सुरार्थरुद्धो बहिरेव सोऽग्निर्ललन्यथालब्धविधैः[2]स्मरोऽभूत् ॥ ३९ ॥

परीत्य पौलस्त्यसभामियाय प्लुतैः प्लवङ्गः पटलानि धाम्नाम् ।
जगाम सीताश्रवणोपशल्यं स दाहपर्यायमहानिनादः[3] ॥ ४० ॥

स्थितं ददर्श स्वयमेव देवी कपिं तमन्तःपुरसौधपृष्ठे ।
विलोलपुच्छान्तविसारिणीभिः शिखाभिरग्नेः परिवेषवन्तम् ॥ ४१ ॥

हताऽस्मि हा दैव हुतोऽयमग्नौ न युक्तमग्ने भगवन् प्रसीद ।
वियोगदग्धामपि मां दहेमां विमुच्यतामार्यसुतस्य दूतः ॥ ४२ ॥

भवातिशीतः प्लवगे प्रियोक्तौ तपन्तु मामेव शिखास्त्वदीयाः ।
तपस्विनीयं प्रणमामि दूरादनातुरो गच्छतु वानरेन्द्रः ॥ ४३ ॥

अवन्तु गङ्गायमुनासरय्वो हुताशनव्यापादि वानरेन्द्रम् ।
तनोत्वमुष्मिन्नमृतस्य धाराः स धर्ममेघः स्वपितुः सनाभिः[4] ॥ ४४ ॥

अमुं तपो रक्षतु लक्ष्मणस्य तदार्जवं रक्षतु चार्यसूनोः ।
वलीमुखं रक्षतु संशयस्थममायमन्तःकरणं ममापि ॥ ४५ ॥

इतीरितेनेव पतिव्रतायाः प्लवङ्गमस्याङ्गमबाधमानः ।
समन्तसंचारितचञ्चलार्चिः सोऽग्निर्दशग्रीवपुरीं परीये[5] ॥ ४६ ॥

१. A र २. BC नूनंयथालब्धपि ३. DB विरावः । ४. A ध पितुः समाधिः । ५. A पुरीं परियेष शिखी सशाखाम् ।

मुखारवः प्रादुरभूत्पुरस्तात्तिरोदधे येन समुद्रघोषः ।
इतस्ततः प्रस्फुटतां मणीनां ममज्ज सोऽपि ध्वनिधूत्कटेषु ॥ ४७ ॥

क्वचित्पताका इव कार्दमिक्यश्चकाशिरे धामसु धूमरेखाः ।
शिखार्चयोल्लोचकराजिरुच्चैः क्वचिच्च माहारजनीव रेजे ॥ ४८ ॥

रुचिं क्वचिद्विश्लथवेष्टनानां ततान धूमोर्मिचयः कचानाम् ।
क्वचिच्च मूले विदधुः कृशानोः श्रियं शिखाः काञ्चनकर्तरीणाम् ॥ ४९ ॥

शिखी स लङ्काहुतिलालितार्चिः न सिन्धुवेलावनमप्यहासीत् ।
सुवेलमारुह्य लिलेह नाकं शिखाभिराब्रह्मनिकेतमूलात् ॥ ५० ॥

तथा न पूर्वं त्रिपुरेन्धनोऽग्निर्गभस्तिजालैर्गगनं वितेने ।
यथा स तर्हि क्षणदाचराणां पुरे प्रगल्भोच्चशिखो हुताशः ॥ ५१ ॥

अलङ्घयद्व्योम शिखावलीभिर्विलीनमेघावलिभिः स वह्निः ।
अकाण्डसंजातयुगान्तशङ्कैः सुरैः समाधिव्ययदृष्टमूलः ॥ ५२ ॥

फलद्विचित्रोपलदीप्तिरेखः शिखी स लङ्कापुरदाहदक्षः ।
खमानशे लोलशिखासहस्रः सहस्ररश्मेरभिभूय भासम् ॥ ५३ ॥

सपुष्पभारैरिव कर्णिकारैर्मरुद्विकीर्णैरिव हेमशैलैः ।
तदाऽभिलङ्कं युगपज्जजृम्भे जगत्क्षयारम्भ इवाश्रयाशः ॥ ५४ ॥

क्वचिज्जपाभाः क्वचिदब्जभासः क्वचिच्च कुन्दद्युतयोऽग्नयस्ते ।
विवव्रुरभ्रंलिहतामुपेताः सुरेषु वैचित्र्यमुपाश्रयाणाम् ॥ ५५ ॥

जलैर्जहासे विधुतैर्दिदीपे हतैः प्रतिघ्नन्नधिकं चुकोप ।
स कोऽपि सामीरिललामलम्बी लिलेह लङ्कामभितो हुताशः ॥ ५६ ॥

जलं जलं यावदुदीरयन्ति निशाचराः क्वापिच तावदासीत् ।
समाप्तकृत्यस्य विशुत्वशंसी सिततरो वातरथस्य पन्थाः ॥ ५७ ॥

अपि प्रदीप्तानि हिरण्मयत्वान्न भस्मभूयं भवनानि भेजुः ।
ययौ रसावर्तविलम्बितार्चिर्लयं न लङ्कापुरधूमकेतुः ॥ ५८ ॥

विजित्य पौलस्त्यभटावलेपं कपेः स्थितस्य स्फटिकालयेषु ।
स्फुटानलार्चिःपटलीच्छलेन यशः प्रतापौष्ण्यमिवौष्ण्यमापे ॥ ५९ ॥

१. B खोच । २. A लोचन ३. A न्ति । ४. A पोष्णमिवोल्लास ।

इतस्ततो दाहवशात्तथाऽऽसीदिभाश्वसांराविणमुज्जिहानम्[1] ।
यथा वचस्त्राणवनीपकानामसौ शृणोति स्म न वानरेन्द्रः ॥ ६० ॥

अभून्न भूतं शिखिनस्तदाऽन्यत् क्रिया न दाहादितराऽऽविरासीत् ।
गतव्यपेक्षा जगदुः प्रकामं दशास्यदोषादपरं न पौराः ॥ ६१ ॥

तथा न रेजे पुटपावकान्तः[3] क्षपाचरौघः कुलमन्दिरेषु ।
यथा वहिस्तत्प्रभवासु मज्जन् विटङ्करत्नद्युतिनिर्म्नगासु ॥ ६२ ॥

चिरं तस्थिरे केवलमर्थहार्दान्निशाचरेन्द्राः सदनोदरेषु ।
ज्वलद्भिरङ्गैर्निरगुः कथंचिन्न किंचिदादातुमलं बभूवुः ॥ ६३ ॥

जवेन केचिज्जगृहुर्दिगन्तान्ययुर्ज्वलन्तो जलराशिमन्ये ।
असृग्भुजो निर्झरशीकरालान् सुवेलसानून्परे परीयुः ॥ ६४ ॥

कपिः स दग्धो न विलोक्यतेऽग्नावदग्धमस्मिन्नगरे न किंचित् ।
अयं बतोत्कीर्ण इवाग्निगोलाद्वलीमुखः क्रामति नः क्षयाय ॥ ६५ ॥

अयं मरुद्वह्निरयं यमोऽयमयं कटुर्नो दुरितस्य पाकः ।
दहेदितोऽस्मान् सुतलेऽपि लीनानसंशयं दुस्सहदीप्तिजालः ॥ ६६ ॥

बत ज्वलत्येव तरङ्गमाली तिमिङ्गिलानामपि डिम्बमुच्चैः ।
हतः शिखाभिर्मलयोऽपि नूनं पुरैव लङ्कातिलकः सुवेलः ॥ ६७ ॥

न बोधितः किं बत कुम्भकर्णः किमिन्द्रजिन्नोज्झति वारिदास्त्रम् ।
क्व स प्रहस्तः क्व स पण्डितो वा विभीषणः शास्तु कुलस्य शान्तिम् ॥ ६८ ॥

इति ब्रुवाणा विधुरं विचेलुर्विचेलबीभत्सशरीरभाराः ।
इतस्ततस्तत्र हुताशडिम्बे कुटुम्बिनस्त्यक्तकलत्रपुत्राः ॥ ६९ ॥

परस्य दाहश्रवणादसाधुः स्वदेहदाहेऽपि धृतिं बबन्ध ।
अमोदत व्यापदि तर्ककाणामपेतमाप्त्वेव धनं कदर्यः ॥ ७० ॥

अचिन्तयल्लाभसमं दरिद्रः समृद्धसाधारणमात्मदाहम् ।
समस्तदाहं[7] विमर्श न स्वं जहर्ष विद्वद्व्यसनेन मूर्खः ॥ ७१ ॥

---

१ B D दानीं । C थसिद्दिगास्य । २ C ना ३ B AD चभेजे पुटपाकमन्तः । ४ A ङ्किरत्नद्युति । BC च्छवि । ५ CD स्रस्त । ६ D सेवचनम । ७. A नाशं ।

विदह्यमानौ युगपत्तदानीं पतिप्रियौ स्वालयपावकेन ।
अनुव्रजन्त्या तनुजीविताभ्यामभव्यया भव्यमिव व्यराजि ॥ ७२ ॥

पुरः पतीनामसतीजनेन तदाऽऽत्मगेहापदि संपदूहे ।
उपागमेन प्रतिवेशियूनामदुष्टकण्ठग्रहणेन काऽपि ॥ ७३ ॥

अभीष्टयाऽन्यः सह जोषमग्नेः शिखानिकुञ्जोदरमध्युवास ।
वधूं विदग्धामुपगूह्य गाढमथापरो मुर्मुरमध्यशेत ॥ ७४ ॥

विवेश बालः शिखिनोऽन्तरालमरालकेशीमवलम्बमानः ।
विवेद बिव्वोकवतीं विचुम्बन्युवा न बिम्बाधरलग्नमग्निम् ॥ ७५ ॥

तथा न भीतं कुलबालिकाभिर्विशृङ्खलाभ्योऽग्निशिखावलीभ्यः ।
यथा तदोत्पिञ्जलदुर्निवारैर्विडम्बनाभ्यो विटमण्डलीभ्यः ॥ ७६ ॥

जहार जीवेशहृदि स्थितानां शिखी सुखौघप्रभवं न शैत्यम् ।
न चापि विप्रोषितभर्तृकाणां ततान तापान्तरमङ्गनानाम् ॥ ७७ ॥

ममावलम्बस्व करं वरोरु प्रसीद जीवेश्वर निस्सराग्रे ।
इति ब्रुवन्वेश्मनि संप्रदीप्ते मिथोऽनुरागान्मिथुनं विपन्नम् ॥ ७८ ॥

द्रुतं द्रुतं दानवि धेहि पादौ महीयमर्चिःप्रतिबिम्बतप्ता ।
तवापि किं खेचरि खे दमन्तः विशन्त्यमी निष्कुटवह्निकूटाः ॥ ७९ ॥

रुणत्सि किं मां कलहंसि मुग्धे मृताऽस्मि मातः स मृतोऽन्यपुष्टः ।
अयं विमुक्तोऽसि दिशन्त्वभीष्टां गृहाण हारीत रुतं श्रुतं ते ॥ ८० ॥

कुमारि कीरं करयोः कुरुष्व त्वरस्व तन्वि स्तनभारधीरे ।
गताऽसि गन्धर्वि मृताऽसि मातर्न पारितो रक्षितुमेणशावः ॥ ८१ ॥

कुलालिकां मार्गति मत्तहंसी बिसाङ्कुरच्छेदमिदं किमर्चिः ।
दृशौ रुणद्धीव न पश्यसीदं निराकुले राजकुलं प्रदीप्तम् ॥ ८२ ॥

न वेद्म्यहं धीमति कोऽभ्युपायः प्रियंवदे जीवसि हा हताऽस्मि ।
विलिख्य भित्तावधुनैव गाथामियं विपन्नेव सखी न वक्ति ॥ ८३ ॥

१. A प्रपेदे २. B D श C श्म । ३. B C D म्वन्विचक्षणो न क्षणमग्निदाहम् । ४. A जातहास ५. D टाङ्क । ६ C. त्वमेव । ७. BD read for this line–त्वमग्रतोनिस्सर कातराक्षि त्वमेव जीवेश्वर निस्सराग्रे । ८. BCD रोधा । ९ A न्त्यमीषां १० BC स्मिमन्येन । ११. B C D पुत्रि । १२. A दिशा । १३. B C थैम् । १४ A शारवा ।

भवोत्थिता देवि दहत्युपान्ते स्वयं तवोपाश्रयमाश्रयाशः ।
धुनीहि धंमिल्लमलातमेतच्च्युतं वितानादिह दह्यमानात् ॥ ८४ ॥

अहं गमिष्यामि सहालयेन स्वमालयं गच्छत सौविदल्लाः ।
कुतोऽपि कुब्ज व्रज यत्र जीवस्यशक्तिके किं न बहिः स्थिताऽसि ॥ ८५ ॥

विमुञ्च बालव्यजनं भुजङ्गि स्फुलिङ्गमाकर्षति मारुतोऽस्य ।
किमातपत्रेण तरङ्गि नूनममी ममालातचयास्तपन्ति ॥ ८६ ॥

नमोऽस्तु ते चित्रमनोभवाय भवान्तरे कौतुकवेदि भूयाः ।
क्व सालभञ्जि त्वमुदीक्षितव्या गतास्मि भव्यां[1] भवनं तवैतत्[2] ॥ ८७ ॥

तपन्त्यमूर्कशिलावलभ्यः[3] प्रसीद वामोरु विमुञ्च वाम्यम्[4] ।
यथा भजेथाः शशिकान्तवीथीमदूरधारागृहशीकरेण[5] ॥ ८८ ॥

अयं न हारः शिशिरोऽधुना मे धिनोति नेदं हरिचन्दनाम्भः ।
विलीनमङ्गेषु मृणालमालि स्फुटानलज्वालमिदं गृहं मे ॥ ८९ ॥

कुतस्त्यमोजः सहसेदमग्नेः क्व भक्तिशाठ्यं वरुणस्य चैतत् ।
किमेकदैवास्तमितं पुरेऽस्मिन्महो महाराजदशाननस्य ॥ ९० ॥

इति स्फुटार्चिर्भयचञ्चलानां[6] वचः पृथक्काकुतरङ्गतारम् ।
भटैः परित्रातुमशक्नुवद्भिर्विशुश्रुवेऽन्तःपुरसुन्दरीणाम् ॥ ९१ ॥

पुरमिति कृती कृत्वा स द्राक् प्रदीप्तगृहावलि
स्वगतमनलं तं नीराणां निधौ निरवापयत्[7] ।
कपिरधिगतातङ्कः सीतासमीपमगात्पुनः
विदितसुमहाश्चर्यः पश्चाज्जगाम यथागतम् ॥ ९२ ॥

इत्यभिनन्दकृतौ रामचरिते महाकाव्ये लङ्कादाहो नाम
द्वाविंशतितमः सर्गः ॥

ईति[8] लेखयति स्म लेखकैर्निजकर्माधिकवेतनाभृतैः ।
अभिनन्दनिबन्धगौरवाद्युवराजः शतकीं कथामिमाम् ॥

१. A व्यं २. BD न चै । ३. A त्यमूरार्कशिखा ४. BC बाष्पम् । ५. A गृहिणीं । B C करशां
६. A स्त्वमर्चिः । ७. B C D विनिधापयत् । ८. AC omit this sloka

# त्रयोविंशः सर्गः ॥

सीताशिषोऽन्ते[1] प्लवगः क्षणेन पारं प्रयातः[2] प्रमनाः पयोधेः ।
तत्पुच्छकोटिप्रभवश्चिरेण दार्वा[3]वसानं दहनो जगाम ॥ १ ॥

भेजे न मूलं जनकात्मजायाः तत्याज देवालयदिग्विभागान् ।
व्यावृत्य रक्षोभवनेषु भूयश्चक्रे शिखी चर्वितचर्वणं सः ॥ २ ॥

हैमैर्द्रवीभूय गृहैर्वितस्थे तस्थे कथाभिः कुथसंहतीनाम् ।
धौतत्वमासाद्य परं विरेजुस्तत्राग्निशौचांशुकमण्डपौघाः ॥ ३ ॥

निर्गत्य वेलागिरिकन्दराङ्कात्लङ्कालयाः स्वालयसंनिवेशान् ।
अप्रत्यभिज्ञाधिगमादमार्गन्मार्गेण शुद्धान्तगृहस्थलीनाम् ॥ ४ ॥

शीतातिभीतेरिव वर्जितायां तेनापि तीव्रद्युतिनाऽनलेन ।
प्रालेयसंघातशिलासभायामन्वेषकैरैक्ष्यत राक्षसेन्द्रः ॥ ५ ॥

श्रुत्वाऽपि लङ्कापुरवैशसं तत्खेदं न लङ्काधिपतिर्जगाम ।
मूढो मरुन्नन्दनदेहदाहसन्देह एव प्रमुदं बबन्ध ॥ ६ ॥

सस्मार पूज्यं मयमेति शङ्कां यस्याद्भुते कर्मणि विश्वकर्मा ।
जामातुरिच्छानुग इन्द्रजाली लङ्कां स पूर्वाभ्यधिकां चकार ॥ ७ ॥

ताः संपदस्ता विशिखाः सशाखास्ता योषितः पुण्यजनास्त एव ।
तान्येव सद्मानि तदेव सर्वं दुस्स्वप्नतुल्यः स बभूव दाहः ॥ ८ ॥

दध्युः प्रवृद्धं व्यसनं तदेव तां नोत्तमाः संपदमभ्यनन्दन् ।
सर्वस्वमादाय गते हि शत्रौ बन्धूपनीतैर्द्रविणैर्घृणैव ॥ ९ ॥

दृष्टो मयाऽसौ मलयस्थितेन स्वस्थः स्वयूथ्यैः सह मोदमानः ।
जित्वा जवित्वात्पुनरब्धिमेष जाने तवाक्रामति राजधानीम् ॥ १० ॥

वेलातटस्थेन मयाऽपि दृष्टो निर्वापयन्वालधिमम्बुराशौ ।
दृष्टः सुवेलाग्रजुषा मयापि सीतां स भूयः प्रणिपत्य गच्छन् ॥ ११ ॥

---

१ A तां सिषेवे । २. AB पपात । ३. A द्रा ४. BCD हैमद्रवैर्भूप । ५. A D सी । ६. BC कल्पः । ७. BCD चक्षुः प्रणी ।

ज्वालावलिक्षिप्तवपुःप्रकाण्डश्चण्डो न स प्रैक्ष्यत भीरुभिस्तैः ।
वल्गन्निवाग्नावनघः स दृष्टः कष्टान्मया कुड्यतिरोहितेन ॥ १२ ॥

भूतं ब्रुवाणस्य न दूषणं चेज्जीवत्यसौ तुष्यसि किं मुधैव ।
तस्यार्द्रपुच्छस्य पयःपृषद्भिर्निर्वापितेयं परितः प्रतोली ॥ १३ ॥

प्रत्येकमित्यप्रियतापराधान्न श्रद्दधे वाक्यमसौ हितानाम् ।
आभासनिर्णीतकपिप्रणाशैः प्रोत्साह्यमानः प्रखलैस्तुतोष ॥ १४ ॥

दग्धः कपिः संनिहितोऽरिदैत्याज्जातेयमह्नाय पुनर्नवा पूः ।
पौलस्त्य विश्वस्तमिहाधुनाऽऽस्स्व स्वाधीनतां सापि तवैति सीता ॥ १५ ॥

रक्षन्तु नक्तन्दिवमासुवेलादर्वाञ्चि सिन्धोः सुभटास्तटानि ।
तिष्ठन्तु सह्यादिषु भूधरेषु परेऽब्धि चाद्यप्रभृति स्पशास्ते ॥ १६ ॥

आरोप्यतां रावण सिंहिकायाः स्थानेऽधुना कापि निशाचरीषु ।
आदाय जीवं जलराशिमध्ये गच्छन्त्यविघ्नं गगनाध्वनीनाः ॥ १७ ॥

प्रस्थाप्यतां प्रत्ययितश्च कश्चित् प्रच्छन्नचारी नरयोः समीपम् ।
भेदः प्लवङ्गेषु च वालिगृह्येष्वारभ्यतां मित्रसुतोऽङ्गदस्ते ॥ १८ ॥

द्वार्युत्तरस्यामपरं नियुङ्क्ष्व क्रूरप्लवङ्गप्रतरक्षमं वा ।
तत्रैव चोर्ध्वं सुभटाः शतघ्नीरादाय तिष्ठन्त्ववधानवन्तः ॥ १९ ॥

कस्यास्ति शक्तिस्तव राजधानीमित्थं सुगुप्तां परितः प्रवेष्टुम् ।
यश्च प्रमादात्पतितः प्लवङ्गः सोऽङ्गारतां प्राप्य तदैव शान्तः ॥ २० ॥

रामः स देवासुरगुह्यकेषु कोवा तपस्वी तव येन चिन्त्यः ।
अन्तर्बहिर्वा विहर प्रकामं कस्ते जगत्कम्पकरस्य कम्पः ॥ २१ ॥

इत्यादिकं राक्षसचारणानां चाटूदितं कर्णपथं निनाय ।
नीचैरनूचुः सचिवास्तदैवं गर्भीकृतारिप्रणतिप्रकाराः ॥ २२ ॥

आह स्म तानाशयविद्दशास्यः साधूदितं काकोलिभिः कुलीनाः ।
स्वात्मासिलूनोद्धतमूर्धजालः पौलस्त्य एष द्विपदास्यमेति ॥ २३ ॥

१. A सचिवै । २ BC तादिदै । D विदैत्य । ३. A नूरु । B थो चुः । ४. A दे । ५. B पि
६ CD मा ।

हे शक्रजिज्जीव वदन्त्यमात्याः किं पुत्र तातप्रणयोचितं ते ।
तस्यारुणद्दारुणवेगमन्तः क्रोधानलं द्रागिति मेघनादः ॥ २४ ॥

पप्रच्छ वात्सल्यजडस्तमेव कर्तव्यमर्थं कपियानपक्षे ।
जगौ स मूर्ध्ना विनयानतेन जानन्त्यमी तात भुजास्तवैव ॥ २५ ॥

निस्संशयं तात गतः प्लवङ्गः संग्रामकालः समुपस्थितोऽग्रे ।
संपादिनी सत्वरमाविरस्तु रक्षोभटश्रेणिषु घोषणा ते ॥ २६ ॥

शक्तस्य युद्धादपरो न पक्षः शक्तिक्षये सन्धिमुपाश्रयन्ति ।
यानं प्रसुप्तद्विपति प्रशस्तमुत्थानवत्यासनमामनन्ति ॥ २७ ॥

अत्रैव शत्रुं तमभिप्रतीच्छ पुच्छेषु निष्पीड्य तुद प्लवङ्गान् ।
चिन्त्यः परं तात स वीतशङ्को लङ्कापुरीधिक्कपिरेक एव ॥ २८ ॥

संनह्यतामाहितलक्षणानां रक्षोभटानां क्रियतां विवेकः ।
चारप्रयोगोऽद्य गतार्थ एव दूतात्प्रतीता ह्यरिशक्तिसंपत् ॥ २९ ॥

एतर्हि सायं यदि वा परेद्युः दूतानुयोगप्रमुदः प्लवङ्गाः ।
रक्षोभटान्निर्भयमाह्वयेरन्नाक्रान्तलङ्कापरिखान्तरालाः ॥ ३० ॥

इत्थं गते कः पर्णबन्धकालः कैलासकोलाहलकारिणस्ते ।
आकस्मिकः सन्ततसाहसस्य नीतिग्रहो भीतिमिव ब्रवीति ॥ ३१ ॥

अत्रैव निष्कम्पमहस्स्वमीषु ते तात विख्यातविलोलभावाः ।
त्वद्यातुधानेषु पतन्तु लङ्कादीपेषु दिग्भ्यः कपिकीटपूगाः ॥ ३२ ॥

हे मन्त्रिणः किं नुतिरेव शत्रोर्निन्दैव नेतुश्च निजस्य नीतिः ।
मेरूपमं यन्मनुजं मनुष्वे रेणूपमं रावणमेकवीरम् ॥ ३३ ॥

वह्निः पलालेषु पविर्नगेषु नागेषु सिंहस्तपनस्तमस्सु ।
युष्मन्मते संप्रति नूनमूनस्तातश्च तेषु प्लवगाधमेषु ॥ ३४ ॥

आर्या न कार्यस्य गतिं विजानाम्येतत्तु जानामि जगत्त्रयेऽपि ।
तातस्य कृष्टासिलतस्य लूतातन्तूपमानि द्विषतां बलानि ॥ ३५ ॥

१ D णेदा २. B जात । CD जाति । ३. AD ति । ४. BCD श्च ५. BCD नाम ।

यस्यान्वयः साहसवेगभाजः तस्यैकशूरस्य शिरः सदोच्चम् ।
यस्य ध्रुवं तु[1] व्यतिरेक एव क्लीबस्तले कस्य न सर्वदाऽसौ ॥ ३६ ॥

तादात्विकात्रस्यति कोऽप्यपायादामुष्मिकात्रस्यति कोऽप्यशूरः ।
शूरः स तु त्रस्यति नैव तस्माल्लोकर्द्वयो[2]त्थादपि तातवद्यः ॥ ३७ ॥

दैवं भयाद्यस्य सदाऽनुकूलं यस्य क्रियाः कामदुघा भियैव ।
तस्येशितुः सर्वभयङ्करस्य कोऽसौ पितुर्मे नृपशुर्वराकः ॥ ३८ ॥

शास्त्रादरः सूक्तरसात्पितुर्मे न स्वाभिकामप्रतियन्त्रणाय ।
दास्यं पराज्ञानुविधानमाहुः सर्वस्य तिष्ठत्युपरि प्रभुत्वम् ॥ ३९ ॥

सं[3]श्चिन्त्यतां मद्भुजनिर्जितोऽपि स्वर्गैकवीरः स परं त्रपैव ।
कोऽसौ तपस्वी बत यस्य सोऽग्रे[4] सुग्रीवनामा वनकीटभेदः ॥ ४० ॥

पादाब्जयोर्यस्य भुजप्रतापादिन्द्रादयो दिक्पतयः पतन्ति ।
स प्राणिमात्रं प्रणमत्यमात्यास्तातः कथं जीवति मेघनादे ॥ ४१ ॥

श्रुत्वाऽथ घर्मान्तघनोपमस्य स्निग्धोर्जितं गर्जितमिन्द्रशत्रोः ।
तां राघवामर्षनिदाघतन्द्रां तत्याज रक्षोधिपदन्दशूकः ॥ ४२ ॥

अस्तूयत प्रस्तुतसङ्गरोत्कैरुत्कण्टकाभिस्तनुभिस्तदानीम् ।
योधैर्महापार्श्वमहोदराद्यैस्तद्यौगपद्याद्युवराजवाक्यम् ॥ ४३ ॥

साधूक्तमादौ हि नयप्रयोगः संग्राममकाले गतिरीदृगेव ।
इत्यूचिवांसौ[6] शुकसारणौ च तं जिघ्रतुर्मूर्धनि मन्त्रिवृद्धौ ॥ ४४ ॥

स्वाराड्जितः संयतवातसूनोरेकस्य ते राजति मेघनाद । (स्वाराट् इन्द्रः।)
इष्टार्थवृष्टिप्रतिरुद्धवेगं भर्तुः पुरो गर्जितमूर्जितस्य ॥ ॥ ४५ ॥

कार्यत्वराभिः स्खलितं न धैर्यं नौर्जित्यमस्तं विनयग्रहेर्ण ।
क्षोभोद्गमेनापि[8] गिरां प्रसादः प्रत्यक्षरं प्रागिव दर्शितस्ते ॥ ४६ ॥

जानासि तत्त्वं परमायुधानां जानासि विन्यासमनीकिनीनाम् ।
जानासि मायामरिपु प्रयोक्तुं जानासि जेतुं च रणे सपत्नान्[10] ॥ ४७ ॥

---

१. BC वस्तु । २. A ल ३ BCD स । ४. A क्रासौ दशग्रीवतलौकसां वः ५. BCD न हितः ।
६. BC सं । ७. BC द । ८. A पि । ९. BCD त्म । १०. B CD नियमात्त्वमेव ।

स्तोकं वचः कर्म तवात्युदारं तारं[1] तवैकस्य यशः किमन्यत् ।
भद्राणि पाणौ दशकन्धरस्य स्कन्धे धुरीत्थं[2] भवतोपनीते ॥ ४८ ॥

श्लाघ्यावपदानीति[3] सरोमहर्षा हर्षप्रफुल्लस्य पितुः पुरस्तम् ।
ऊचुः पिशाचप्रमुखाः सखायः किंचिन्न तूचे स विभीषणेन ॥ ४९ ॥

निर्गन्तुमिच्छन्तमसूययेव तं पूर्वजन्मा रजनीचरेन्द्रः ।
वत्स क्व यासि त्वमपीप्सितं स्वं ब्रूहीति वीप्सारभसो रुरोध ॥ ५० ॥

किं सूनृतैः शक्रजितः शिशोर्मे मर्मस्वभिस्पृष्ट इवेक्ष्यसे त्वम् ।
किं पश्यसीमाननुमोदमानान् जिह्माननो मत्सरवानिवार्यान् ॥ ५१ ॥

इत्यागतस्य प्लवगस्य मृत्योरुत्ताम्यसीत्थं मनसा किमुच्चैः ।
जीवत्यसौ तुष्य वदन्ति केचिद्यातः स जित्वा जलधिं तदैव ॥ ५२ ॥

किं कुम्भकर्णानुज[4] संनिकृष्टे रामेऽनुकम्पातिशयस्तवारौ ।
भ्रातर्यसूयातिभरो मयीत्थं प्रत्यर्थिनिर्ग्रन्थनदीक्षिते च ॥ ५३ ॥

बन्धुद्विषः शत्रुवशंवदस्य कस्तेऽधुना चेतसि वर्ततेऽर्थः ।
इत्यादि चोल्लिङ्गितगूढभावं तं रोषगर्भैर्वचनैरपृच्छत् ॥ ५४ ॥

निश्वस्य दीर्घं कुलमात्मनस्तत्कालोरगाघ्रातमुदश्रु पश्यन् ।
तेनाग्रजस्य व्यसनानुबन्धस्थैर्येण धैर्यादपनीयमानः ॥ ५५ ॥

रामाभिधानस्य हरेरधीर्य[6]नैसर्गिकेणानघतागुणेन ।
सौदर्यदोषेण दशाननेऽपि शोकार्द्रमन्तःकरणं दधानः ॥ ५६ ॥

राजन्निजेनैव गुणव्रजेन रक्षोगणस्याघवतः समाजे ।
चारुत्विषा चन्द्रकमण्डलेन केकीव काकोलकुलस्य मध्ये ॥ ५७ ॥

तस्यामतिक्षुद्रसभासरस्यामक्रूरदंष्ट्रावलिना मुखेन ।
जग्राह वीरः स विविच्य शुद्धां वाणीं मृणालीमिव राजहंसः ॥ ५८ ॥

कैवार्यं संप्रत्यपराऽस्त्यपेक्षा जातं बुधानामिदमैकमत्यम् ।
संवादिता नास्त्यबुधत्व[7]दोषादेकस्य मे तत्र न कापि हानिः ॥ ५९ ॥

१. BCD दू । २. CD त्वं । ३. BCD प्रांचैः ४. BCD गीत्र । ५. BCD र्घंगम्ये ६. A थार्यं
७. BC नुबन्ध ।

सत्यं मिथः संप्रतिपन्नपक्षाः क्षुद्रः कुलद्रोहरतः सदाऽहम् ।
राजन् क्षमासिन्धुरसि क्षणार्धमप्यक्षतः संसदि ते यदस्मि ॥ ६० ॥

इत्थं गतस्याखिलदोषभाजः स्वाजन्यमात्रादुदितेन किं मे ।
सूक्तैः शिशोरश्रुतपण्डितस्य तुष्य त्वमस्यैव समं सदस्यैः ॥ ६१ ॥

ईशः स विश्वस्य जितावजय्यौ येनात्र कामप्रतिघावराती ।
ताभ्यां जितो यस्तु स हीनसत्वः सर्वस्य दास्यं दिवसैरुपैति ॥ ६२ ॥

स्वस्सुन्दरीनाथ[1] जयेन्द्रियारीनिन्द्रेण किं नाकजुषा जितेन ।
हास्यः पुमान् दीप्तमपास्य धाम धावन्नगौ[2]ग्रानलनिग्रहाय ॥ ६३ ॥

अद्यैव योधाः शतशो हतास्ते दग्धेयमद्यैव पुरी समस्ता ।
किं विस्मृतं क्रुद्ध इवानुयुङ्क्षे यन्मां महाराज विषादहेतुम् ॥ ६४ ॥

निर्धार्यतां वा विनिवार्यतां वा निर्भर्त्स्यतां वा रजनीचरेन्द्र ।
पृष्टेन पथ्यं भवतस्तथाऽपि वक्तव्यमेवाद्य विभीषणेन ॥ ६५ ॥

अर्धं गतं संप्रति बान्धवानां व्यावृत्य पश्यन् कुरु नः प्रसादम् ।
सर्वानुयोगैर्व्यसनं विहाय पाहि स्वबुद्ध्या परिशिष्टमर्धम् ॥ ६६ ॥

यैरीषदुक्तः प्रणतिप्रकारः तानेव तातप्रतिमानुपैहि ।
पृच्छाथवा पुष्पकमर्पयित्वा[5] पूर्वापरं पूर्वजमेकपिङ्गम्[6] ॥ ६७ ॥

सख्यं तवो[7]द्रिक्तबले पुरा यज्जातं यथा वालिनि वानरेन्द्रे ।
किं दूषणं दाशरथौ तथैव क्षेमार्थमार्य क्रियतामजर्यम् ॥ ६८ ॥ संगतमित्यर्थः

धन्योऽसि पौलस्त्य सपत्नभावादभ्येति यस्त्वां पुरुषः पुराणः ।
तं सौहृदेनैव पुरः प्रतीच्छ किं मुह्यसि श्रेयसि संमुखीने ॥ ६९ ॥

उत्खातकैलासमहाचलस्य किं तेऽद्य रेणूद्धरणेऽलसत्वम् ।
मोदस्व पश्यन्विशदीकृतेन तं चेतसा रावण रामभद्रम् ॥ ७० ॥

रामो हरिर्भूमिसुताऽपि सा श्रीस्ते देवपुत्राः कपयश्च सर्वे ।
उन्मीलयतां चेतसि चिन्मयी दृक् तत्वानि ते सत्वरमुद्भवन्तु ॥ ७१ ॥

---

१. B C त्यश्रु २. A स्मिन्नरीन्नाथ । ३. CD खा ४ B C ग्य ५. BC तत्करणीयपर्वं ६ BC योगम्
७. B C थो ।

क्वायोध्यको दाशरथिः स रामः क्वारण्यकास्ते कपयः क्व लङ्का ।
दाहः[1] क्व चायं भवितव्यतायाः सृष्टिस्तवेयं कियती न जाने ॥ ७२ ॥

किं सीतया गच्छतु सा तमेव स त्वय्युपैतु प्रियतामिदानीम् ।
लङ्केयमानन्दतु वीतशङ्का कङ्कालकीर्णां किमिमां करोषि ॥ ७३ ॥

हे यातुधानेश्वर नश्वराणि लङ्काधिपत्यादिसुखान्यमूनि ।
आदत्स्व भक्त्या तमनन्तमूर्तिं सौमित्रिमानन्दमनन्तमिच्छन् ॥ ७४ ॥

अस्मासु राजा विरलप्रसादस्त्वं वल्लभः शश्वदतः शमाय ।
जित्वाऽवलेपज्वरवेगमात्रं[2] मन्दोदरीनन्दन बोधयैनम् ॥ ७५ ॥

वाक्यं पितृव्यस्य यदि प्रमाणं रामं भजस्वौमिति[3] मेघनाद । स्वौ० इत्येव साधु।
दूरं यशस्ते गतमास्स्व जोषं न भ्राजसे वत्स विकत्थमानः ॥ ७६ ॥

शूरः सुरूपो मतिमान्महेच्छस्त्वं तादृशश्चेत्तनयो जनन्याः ।
अन्यायशौण्डीर्यमपथ्यमेतदायुष्यमस्मन्मतमाद्रियस्व ॥ ७७ ॥

मोहात्पुरस्तादवधीरितस्य सिद्धौषधस्येव महामयेषु ।
विज्ञाय पश्चाद्विहितस्य दोषः को नाम कृच्छ्रेषु नयामृतस्य ॥ ७८ ॥

आर्यस्य कस्मादपि नास्ति चेद्धीश्चौर्येण किं राजसुता हृताऽसौ ।
अर्घ्योपहारः क्रियतां तयैव स्वस्त्यस्तु नस्त्यक्तरुजे कुलाय ॥ ७९ ॥

दृष्टं भटाः स्थाम च धाम चोच्चैस्तस्यैकशाखामृगशावकस्य ।
शेतामसिस्तत्प्रवरप्लवङ्गसङ्घातसङ्ग्रामसहा न यूयम् ॥ ८० ॥
आस्तां खड्गा इत्यर्थः।

विश्रान्तवानद्य जयाधिकारः पक्वान्यसत्कर्मतरोः फलानि ।
पश्यामि पर्यायमनार्यशीलाः शोकस्य वः सातिशयोत्तरस्य ॥ ८१ ॥

ध्वस्ता पुरीयं निहतस्तथाक्षः का रक्षसां संप्रति संपदाशा ।
सर्वादरान्मार्गत सङ्कटेऽस्मिन्नापत्प्रतीकारविधिं विधिज्ञाः ॥ ८२ ॥

एतावताऽपि प्रयतास्तमेव रामं यदि ध्यायत यातुधानाः ।
स्फीताः पुनर्नन्दथ चन्द्रगौरमागःक्षयाद्दिक्षु यशः किरन्तः ॥ ८३ ॥

१. B C ग्र । २. A यँ ३. A तिच ४. B C येथाः ५. D स तादृशास्तत्प्र । BC सतमिस्रा ।

हे बन्धुमित्रानुगचाटुकाराः सर्वानयं वक्ति विभीषणो वः ।
किं प्रेक्ष्यते रावण एष मज्जन्नुत्थाप्यतामापदियं गभीरा ॥ ८४ ॥

इत्युक्तिनिष्पन्दितवृद्धबृन्दं तं दर्पदोषादहसद्दशास्यः ।
वैलक्ष्यविच्छायमुवाच पश्चात्तूष्णीमितः सीद वचः श्रुतं ते ॥ ८५ ॥

गच्छाथवा रामसमीपमेव किं नस्त्वया तद्गतमानसेन ।
तत्रापि न स्थास्यसि युद्धसज्जे हा त्वां पुरस्ताद्भयकान्दिशीकम् ॥ ८६ ॥

इत्युक्तकुत्सोऽपि कुलस्य हार्दात्तं रामपादप्रणतिं ययाचे ।
निर्बन्धजातप्रतिघेन जघ्ने निघ्नः पदा मूर्ध्नि स रावणेन ॥ ८७ ॥

कृत्वा विकोशमपि खड्गमसौ निषिद्धः तत्याज न प्रणतिवादमधोक्षजस्य ।
पश्चात्तमास्यगणगोचरमग्रजस्य योधव्रजः स्ववपुषा तिरयांचकार[2] ॥ ८८ ॥

राजाज्ञया बाहिरकारि पुरात्तदैव पश्यन् प्रतीपमसकृत्कुलपक्षपातात् ।
वेलातटीपरिसरे परिलम्बमानः स्वैर्युज्यते स्म सचिवैः स चतुर्भिरेव ॥८९॥

इत्यभिनन्दकृतौ रामचरिते महाकाव्ये त्रयोविंशतितमः सर्गः ॥

---

येना[3]राक्षवयस्खलन्मदकलक्वाणोर्मिकौतूहलाः ?
प्रेक्ष्यन्ते कवयः स्फुटार्थवचसः सन्दर्भशोभारसात् ।
दृप्तानां निधनानि यो वितनुते संख्येषु संख्यावतां
निस्संख्यानि धनानि सोऽस्तु सुचिरं श्रीहारवर्षो नृपः ॥

---

१, BCD ज्ञोहित्वा । २. BC न्तरयांबभूव । ३. C only reads this sloka.

# अथ चतुर्विंशः सर्गः

एकः स पालतिलकश्चिरमस्तु सम्राट् कोटिव्ययो न गणितः प्रतिपाठकालम् ।
येनास्य रामचरितस्य समं सदस्यैरेकैकशुक्तिपरिभावनगद्गदेन ॥

विभीषणपरित्यक्तं तत्पुरं तत्यजे बुधैः ।
शरीरमिव निर्जीवमिन्द्रियैश्चक्षुरादिभिः ॥ १ ॥

ज्वलत्सु मणिदीपेषु पुष्पेषु विकसत्स्वपि ।
अनालोकमनामोदमभूल्लङ्कापुरं तदा ॥ २ ॥

अग्निभ्य इव दीप्तेभ्यः[3] फणिभ्य इव सर्वतः ।
ययुस्तदानीमपदे शङ्कां लङ्कानिवासिनः ॥ ३ ॥

उच्छेद्याः क्वाद्य सन्देहाः ख्याप्यः क्वाद्य श्रुतश्रमः ।
मोदितव्यं क्व गत्वाऽर्द्यं मोक्तव्याः क्वाद्य मन्यवः ॥ ४ ॥

द्रक्ष्यन्ति कुपितं देवाः केन द्वारेण रावणम् ।
वारयिष्यति विप्राणां विप्रकारशतानि कः ॥ ५ ॥

विभीषणगुणाकृष्टान् कोविदान्को वताधुना ।
लम्भयिष्यति विस्रम्भमदम्भैः सूनृतामृतैः ॥ ६

अद्य रक्षःपुरी लङ्का रावणो रावणोऽद्य सः ।
आधाराः सर्वदोषाणामद्य दोषाचरा वयम् । ७ ॥

लङ्के नगरि दग्धाऽसि पुनर्दीर्घेण वह्निना ।
स निर्वाणकरो दूरं गतस्तातविभीषणः ॥ ८ ॥

हा निर्मदो बन्धुगणान् हा गुणानपरिग्रहान् ।
हा वञ्चितं राजकुलं हा पुरीं मुषितामिमाम् ॥ ९॥

अहो बत महाश्चर्यं[4] यदस्मद्दुरितानिलैः ।
धुतो विभीषणव्रीहिर्न रावणकडङ्गरः ॥ १० ॥

१. CD omit this sloka २. A वंकरणैश्च । ३ BCD एकसर्वे । ४. BCD असज्जनोद्भवाः साद्भिः ।
५. BC त्कष्टम् ।

ज्वालामुखानां प्रसरादद्य को विचरेद्बहिः ।
शीतांशुवदने तस्मिन् गते गेहेऽपि कः सुखी ॥ ११ ॥

गतः स वर्त्मना येन तेनैव चलिता वयम् ।
किं नस्तद्विरहाहूतशङ्कया लङ्कयाऽधुना ॥ १२ ॥

कच्चिदुद्बुध्य कुपितः कुम्भकर्णस्तमानयेत् ।
न तं विवासयेद्भूयस्तद्वात्सल्याद्दशाननः ॥ १३ ॥

कच्चित्तस्य क्षमाहेतोर्भ्रातुः सर्वकनीयसः ।
विंशतिश्रवसं पुत्रं बोधयेद्विश्रवा मुनिः ॥ १४ ॥

कच्चित्तं दैत्यहा देवः संभ्रमेण प्रतीच्छति ।
देशः स्यादेष राजन्वान् सेत्स्यन्त्यस्मन्मनोरथाः ॥ १५ ॥

न केवलं सुमनसो मन्युमिश्रमितस्ततः ।
पुरि वीतविचारायामित्यूचुः सूचका अपि ॥ १६ ॥

जग्लौ[३] जगन्मनोज्ञाभिर्विभीषणाहितो[४]क्तिभिः ।
धन्वंघास[५] इवाम्भोदधाराभिर्दशकन्धरः ॥ १७ ॥

हा पितृव्य गतोऽसि त्वमनाथा बालिशा वयम् ।
ग्राह्योऽद्य विनयः कस्मादित्याक्रन्ददिवेन्द्रजित् ॥ १८ ॥

प्रहस्तोऽपि मुखे हस्तं निधाय निभृतश्चिरम् ।
चरणाग्रनिविष्टाक्षः प्रतिपेदे दुरासिकाम् ॥ १९ ॥

पिशाचः परमेकस्तं प्रशशंस न संसदि ।
विग्रहप्रतिषेधस्य पश्यन् कारणतां भियः ॥ २० ॥

तं निनिन्द शुकः शत्रुस्तुतिपूर्वोक्तिविस्तरम् ।
सारणस्तुष्टुवे[६] ज्येष्ठनिकारनमिताननम् ॥ २१ ॥

क्व गमिष्यति मर्मज्ञः स्थिरधीः किं करिष्यति ।
इत्यचिन्तयतामन्तर्देवान्तकनरान्तकौ ॥ २२ ॥

१. D वार्त्म । २. BCD दश । ३. A गौ । ४. BC नयो । ५. BC यापा । ६. A रावण ।

रेचयामास निश्वासान्निकुम्भोऽग्निशिखामुचः ।
गाम्भीर्यपिहितारम्भः कुम्भः कुम्भकमाददे ॥ २३ ॥

अतिकायोऽपि चिन्तावान्महाकायमुपाययौ ।
शठः किमपि वक्त्रस्य कर्णयोरवदच्चिरम् ॥ २४ ॥

विज्ञातवेदनान् ज्ञातीनथ संभृतविक्रियः ।
उवाच रक्षोऽधिपतिः क्षणमाश्वासयन्निव ॥ २५ ॥

किम्भो विषादलुलितप्रसादवदनेन्दवः ।
विभीषणकृणः कोऽसौ सति रावणरोहणे ॥ २६ ॥

हे वान्धवाः प्रमोदध्वमुद्धृतः कुलकण्टकः ।
मुदः स्थाने शुचमिमां न जाने भवतामपि ॥ २७ ॥

अद्य नन्दत निर्विघ्नमद्य गायत नृत्यत ।
गतोऽसावुत्सवद्वेषी दशास्यनयनामयः ॥ २८ ॥

अस्माभिरिव किं तेन तपस्तप्तं शतं समाः ।
उत्कृत्योत्कृत्य मूर्धानः सुहुता वा हुताशने ॥ २९ ॥

आत्तं सर्वस्वमसकृद्वित्तेशस्य बलेन वा ।
आबलीयसमारम्भं जम्भारिर्लम्भितोऽथवा ॥ ३० ॥

कृतोऽद्रिदुहितुः कम्पः कैलासोद्धरणेन वा ।
अयं वो येन मत्पक्षाः पक्षपातो विभीषणे ॥ ३१ ॥

श्रूयतां तद्गतात्मानं त्यजामि सुतमप्यहम् ।
कर्कशक्ष्मुपसंश्लिष्टं निर्मोकमिव गूढपात् ॥ ३२ ॥

नयोपदेशो विदुषां लोकयात्रानुवृत्तिषु ।
जितलोकत्रयाणां तु किं नस्तेन फलं वुधाः ॥ ३३ ॥

अतिलोकस्य को दोषः शम्भोर्ब्रह्मशिरश्छिदः ।
किमनश्यत्तनूजायां ब्रह्मणश्च तृपस्यतः ॥ ३४ ॥

१. A गामासीत् ।

गच्छतस्तुरगीं गीतः को दोषस्तेजसां निधेः ।
दत्तस्य जीवदारेषु[1] [2]कस्य राज्ञश्च का क्षतिः ॥ ३५ ॥

अनैश्वर्यमिदं प्राहुर्यदिच्छा न समाप्यते ।
ऐश्वर्येणापि किं तेन येनावद्यं न लुप्यते ॥ ३६ ॥

ऐश्वर्यं गुरु सर्वस्मादार्यास्तत्केन पात्यते ।
अपातकमतः सर्वमीश्वराणां विचेष्टितम् ॥ ३७ ॥

दुर्वारदुर्गतेरेव[3] प्राणाशङ्का[4] पदे पदे ।
पुंसः प्राप्तोत्तमगतेर्यत्र तत्रोदयः परम् ॥ ३८ ॥

जानन्तोऽपि जगत्यस्मिन्दुरितस्य दुरन्तताम् ।
ईशत्वबलमालम्ब्य विहरामो[5] यथासुखम् ॥ ३९ ॥

विस्रब्धमधिकाराणामवेक्षध्वं कृताकृतम् ।
प्रवर्तयामो वयमप्यनङ्गमहमङ्गलम् ॥ ४० ॥

ततः शुद्धान्तमविशद्विषण्णोत्तमनायिकम् ।
सरः सायमिव म्लानपद्मिनीकं महागजः ॥ ४१ ॥

निश्वसन्ति किमत्युष्णमेताः पातालयोषितः ।
वहन्ति विधुराणीव किमङ्गानि सुराङ्गनाः ॥ ४२ ॥

इतश्च मुनिकन्यानामुद्विग्नमिव किं मनः ।
मानुष्यश्च चिरानीताः चकिता इव किं पुनः ॥ ४३ ॥

किं न गायन्ति किन्नर्यो नृत्यन्त्यप्सरसो न किम् ।
किं नाक्षिपन्ति सर्वास्तान् विलासानसुरस्त्रियः ॥ ४४ ॥

खण्डिता इव खिद्यन्ते स्वेदाङ्कितमुखेन्दवः ।
यातुधान्यः किमसहाः सह गुह्यकजामिभिः ॥ ४५ ॥

उपनामितमालीभिरिमाः किं मे मृगीदृशः ।
न वीक्षन्तेऽपि नेपथ्यमपथ्यमिव सन्यथाः ॥ ४६ ॥

१. BC रतस्य निजदारे । २. BC क । ३. D नवे । ४. BCD जाताशङ्का । ५. A द्विरामो ।

इमाः किं विरतामोदाः सीदद्भिः करपल्लवैः ।
स्फुटीकुर्वन्ति निर्वेदं निर्वसन्ता लता इव ॥ ४७ ॥

किं न कुर्वन्ति मां वीक्ष्य व्रीडावत्यः स्मितव्ययम् ।
आमृष्टाः किं नु धृष्टाभिर्मदभ्यागमचाटवः ॥ ४८ ॥

किं प्रसुप्ताः परीहासाः विलासाः किमुदासते ।
वीणावेणुमृदङ्गानां किमिदं मौनमायतम् ॥ ४९ ॥

किं न प्रपञ्चो लीलायाः किं च्युतं किलिकिंचितम् ।
किं ममाद्य वराङ्गीणां वीतौ विच्छित्तिविभ्रमौ ॥ ५० ॥

लङ्कादाहरुगद्यापि किमासामसमापिनी ।
तनोति वा मन्युलवं विभीषणविवासना ॥ ५१ ॥

अमङ्गलं प्रतिहतं मोदध्वं[1]मसुराङ्गनाः ।
स्थिते गते वा कृपणे कोऽनुबन्धो विभीषणे ॥ ५२ ॥

तां तापसीं चिन्तयता कान्तास्तौः[2] कोपिता मया ।
मानग्रन्थेः श्लथीभावादिदानीमनुशेरते[3] ॥ ५३ ॥

एकैकशोऽनुनेष्यामि कामी कामवतीरिमाः ।
समं वा समसंवेगाः सौरभेयीरिवर्षभः ॥ ५४ ॥

व्याकृतानेकभङ्गीनां[4]मङ्गनानां दशाननः ।
मुखानि पातुं जानाति[5] सरितां च सरित्पतिः ॥ ५५ ॥

मूढे मानुषि वैदेहि त्वयाऽऽत्मा वञ्चितः परम् ।
आभिस्त्वद्दह[6]माच्छिन्नः संप्राप्स्यसि पुनर्न माम् ॥ ५६ ॥

नूनं समनु[7]रक्ताऽपि मृत्युं पत्युरपेक्षसे[8] ।
त्वदिच्छामनुवर्त्स्यामि प्रसृताक्षि प्रसीद मे ॥ ५७ ॥

सीते सत्यमिमाः संप्रत्यप्रिया इव मे हृदि ।
शपे तुभ्यं विशालाक्षि दाक्षिण्यादिदमागतः[9] ॥ ५८ ॥

१. BCD प्रमोदध्वं वरा । २. A स्मित् । ३. A शोच । ४. BCD ङ्गा । ५. C सि । ६. D स्छे ।
७. A ममा । ८. BC भर्तुस्समी । ९. A C दद्द ।

स्वसारं निष्फलं मन्ये साचेदनुपमा न मे।
स्वसारं त्रिजटां वन्दे यदि तां घटयिष्यति ॥ ५९ ॥

ते रम्भायाः क्व दृक्पत्रे ते मेनायाः क्व दोर्लते।
मदालसायाः क्व च ते निर्मुखे कुचकुड्मले ॥ ६० ॥

क्वास्यचन्द्रः स हेमायाः क्व रत्नायाः स्मितं च तत्।
मुञ्जस्थलायाः क्व च सा गतिः श्रोणीभरालसा ॥ ६१ ॥

उत्कलायाः क्व लालित्यं मेखलायाः क्व तन्महः।
क्व च ताः पत्रलेखायाः प्रतिगात्रविभक्तयः ॥ ६२ ॥

क्व तेऽन्तरेण संस्कारमूर्मिलाया वचोर्मयः।
सा श्रीरधरमुद्रायाः क्व चन्द्रायाः स्मितं विना ॥ ६३ ॥

कुण्डलायाः क्व तौ गण्डौ चित्रायाश्चिबुकं क्व तत्।
क्व च सा कुचशालिन्या मालिन्याः कण्ठकन्दली ॥ ६४ ॥

क्व भानुमत्याः स्फुरितं मुखस्यातिभयेऽपि तत्।
अश्रुमोक्षेऽपि सा लक्ष्मीर्मेघवत्याः क्व पक्ष्मणाम् ॥ ६५ ॥

क्व स गम्भीरविशदो बुद्बुदाया वचःक्रमः।
क्व स शोषेऽपि धीरायाः परभागपरिग्रहः ॥ ६६ ॥

तन्नैसर्गिकमङ्गेषु मुकुलायाः क्व सौरभम्।
तन्व्यास्तस्या लताख्यायाः क्व ते लावण्यपल्लवाः ॥ ६७ ॥

सा रोमावलिरुर्वश्याः क्व मध्ये वलिभङ्गिनि।
सा तिलोत्तमिकायाश्च क्व रुचिर्मेखलापदे ॥ ६८ ॥

उत्कर्षस्त्वयि रूपस्य समाप्तः सर्वसुन्दरि।
मयि वीर्यस्य विश्रान्तं तारतम्यं तनूदरि ॥ ६९ ॥

त्वया जिता युवतयो मया योधाः परश्शताः।
अस्तु नौ सदृशोर्द्वन्द्वमस्त्ववाच्यश्चिराद्विधिः ॥ ७० ॥

१. BCD गात्रं। २. BC वन्धः। ३. BC तत्क। ४. BD भूत ५ D कानना। ६. क। ७. BC भिन। ८. B. शंर्द्वंद्वमस्तंवाच्यचिराद्विधेः।

इत्युन्मत्त इवात्यन्तमन्तः संचिन्तयन्नसौ ।
विवेश मदनावेशमन्दो मन्दोदरीगृहम् ॥ ७१ ॥

तं प्रतीयेष महिषी संभ्रमेण महीयसा ।
कोऽपि देवः कुलस्त्रीणां पतिरेव पतन्नपि ॥ ७२ ॥

अवस्थाकथितोद्वेगां सुभगां तां दशाननः ।
पप्रच्छाङ्कमुपानीय मन्दं[1]मङ्गानि संस्पृशन् ॥ ७३ ॥

देवि दूं[2]नासि किमिति त्रिलोकी तव पादयोः ।
अयमादरदत्ताङ्कः[3] किङ्करस्त्रिजगज्जयी ॥ ७४ ॥

भद्रं तवेन्द्रजिन्मातर्मत्प्रिये मयनन्दिनि ।
वीरत्रयोज्ज्वलायास्ते किमद्य मलिनं मुखम् ॥ ७५ ॥

स्मितकान्तिच्छटातिथ्यं किमुच्छिन्नं कपोलयोः ।
बिम्बाधरे च किमयं रागस्ते स्तोक[4]धूसरः ॥ ७६ ॥

नामुक्ताः किमलङ्काराः प्रत्युप्तविकटोपलाः ।
ह्यस्तनान्येव तन्वङ्गि मङ्गलाभरणानि ते ॥ ७७ ॥

दुनोति व्युषितो वेषस्तवायं लोचनानि मे ।
क्व सैरन्ध्र्यः कृतं ताभिरहमेव प्रसाधकः ॥ ७८ ॥

आपाणिग्रहणाद्देवि दासस्ते दशकन्धरः ।
अयं लाक्षारसेनाद्य पादौ पल्लवयिष्यति ॥ ७९ ॥

इति पादतलप्राप्तप्रस्विन्नकरपल्लवम् ।
रुरोध त्रपमाणेव रावणं रमणी निजा ॥ ८० ॥

अनुबध्नन्तमाश्लेषैः सविश्लेषा शनै[5]रसौ ।
तमूचे केलितरलं विषादतरला गिरः ॥ ८१ ॥

देशकालोचितं देव दर्शयाकारमात्मनः ।
अस्मिन्महत्यभिसरे नैं[6] विराजत्ययं क्रमः ॥ ८२ ॥

१, BC सह्य २. BC दी । ३. ङ्कः । ४. A शोष ५. BD षशतै D षविनै ६. A न्नवसरे राजन्न

महतां निर्विषादेषु[1] हृदयेषु मुदः पदम्।
येनास्मिन्नपि ते बन्धुकदने मदनोत्सवः॥ ८३॥

कुमारमक्षमद्यापि स्मरन्त्याः कपिना हतम्।
न मे निर्यान्ति मनसि स्त्रीभावसुलभाः शुचः॥ ८४॥

तेषां मन्त्रिकुमाराणां निधनादधुनाऽपि मे।
यतस्ततः प्रचलिताद्भयं हृदयमीक्षते॥ ८५॥

अन्तर्न केवलमयं जनस्ते परितप्यते[2]।
विभीषणस्य विरहाद्[3] बहिरप्याधयस्तताः॥ ८६॥

आशंसितस्वप्रणया[4] चरणान्तमुपेयुषी।
विज्ञापयामि किंचित्त्वां यदि नाथ न[5] कुप्यसि॥ ८७॥

कपन्नपि कनीयस्त्वान्मर्षणीयो विभीषणः।
किं निरस्तो रिपुरिव प्रमादः सुमहानयम्॥ ८८॥

मनस्वी मुञ्चति प्राणान् मर्मज्ञोऽरिमुपैति वा।
स निक्रियामनुचितामकस्माल्लम्भितस्त्वया॥ ८९॥

क्षुद्रभावाच्चुदन्तोऽपि प्राप्तेन श्रियमुत्तमाम्।
संवर्धनीयाः सततं कुल्याः कल्याणमिच्छता॥ ९०॥

सोऽनघश्चेदुपरतः कुलमस्तमिदं तदा।
प्रविष्टश्चेद्रिपुं[7] दत्तो[6] विजयाय जलाञ्जलिः॥ ९१॥

आधौ परोत्थेऽस्ति गतिर्न गतिर्बन्धुसंभवे।
साध्यः काष्ठोद्भवो वह्निरसाध्यः सलिलेन्धनः॥ ९२॥

तद्ब्रवीमि गृहीताङ्घ्रिस्तमुपानय मन्त्रिभिः।
विलम्बमानो वेलायामस्तीति कथितं जनैः॥ ९३॥

याचे त्वां न महाराज रामपत्न्याः समर्पणम्।
क्षिपेन्[8] प्राणसन्देहे शान्तिस्तेऽस्तु[9] महौजसः॥ ९४॥

---

१. A न विषा। B निर्विषा। २. A ताम्यति। ३. A हृदया ४. BC यात् ५. BD नाथत्वां किञ्चि-यदि। ६. C दत्तो। ७. BCD द्विषं। ८. A कृपणः C क्षिपनः। ९. A। सन्धिस्तव।

आर्यपुत्र न ते कार्यं तयाऽत्र स्थितया पुनः ।
अनुयास्यति भर्तारं तमेव हतम[1]प्यसौ ॥ ९५ ॥

ईर्ष्यामलः कोऽपि न मे सपत्न्यः सात्मतां गताः ।
न च ते मयि हीयेत गौरवं पितृकारितम् ॥ ९६ ॥

देवदानवगन्धर्वमनुष्यो[2]रगरक्षसाम् ।
वरस्त्रीनिवहस्यास्य कृताऽहमुपरि त्वया ॥ ९७ ॥

ऐश्वर्यमुपभुक्तं ते जगत्त्रयजयार्जितम् ।
दैवं[3] प्रमाणमधुना कुरु नाथ यदिच्छसि ॥ ९८ ॥

त्वदिच्छासिद्धिषु कृतं रहःसाहायकं मया ।
उपहासाः सपत्नीनामभव्याना[4]मुपेक्षिताः ॥ ९९ ॥

प्रसिद्धाऽहं त्वयैवोच्चैर्नाथ न प्रतिकर्मणा ।
यशश्चन्दनविच्छिन्नैस्त्वं च दोर्भिः प्रसाधितः ॥ १०० ॥

एभिरस्मभि[5]रामुक्तैः किं मुक्तादिकनामभिः ।
त्वया मुक्तमकस्माच्चेत् कुलस्याभरणं यशः ॥ १०१ ॥

त्यागः शौर्यं तपः शक्तिः सत्यं धर्मो दमः शमः ।
शीलं शौचमिति प्रोक्ताः यशसो दश योनयः ॥ १०२ ॥

धर्मादिपञ्चकद्वेषः किं यशोदयितस्य ते ।
तदुपार्जनसामर्थ्यविरहस्तु कुतस्त्वयि ॥ १०३ ॥

त्वयि सर्वगुणोत्कर्षविश्रामजनितं यशः ।
द्रष्टुं[6] दोहदिनी देव दयितेयं मयात्मजा ॥ १०४ ॥

विशदीकृतविश्वस्य क्षितिच्छाया विधोरिव ।
निसृष्टां[7] कालिकाहेतोर्यशसस्तव पार्थिवी[8] ॥ १०५ ॥ पृथिवीसुता सीता

मन्ये हसति काकुत्स्थदत्तघोराधिमद्य माम् ।
अवहेलितपौलस्त्यवीर्यसंपद्भयां[9] शची ॥ १०६ ॥

---

१. BD मवस्थि C. स्थितिमत्य । २. BC पिशाच ३. BD देव ४. D स्स. ५. BC पतिरस्मा ।
६. B द्वे. । ७. A विसृष्ट । ८. A व । ९. A भयजीर्णज्वरा ।

विसदृक्[1] वीक्षमाणायाः क्व नु[2] मे हृदि सौष्ठवम् ।
धुतौ[3] यत्तव धर्मार्थौ कामेनाद्य कनीयसा ॥ १०७ ॥

प्रवेशितस्त्वयाऽऽत्माऽयं यदैवानर्थसंकटे ।
तदैवान्तःपुरमिदं तव स्वीकृतमाधिना ॥ १०८ ॥

वर्ते[4] त्राणं न पश्यामि[5] त्वत्प्रतापे हतेऽरिणा ।
शफर्य इव सूर्येण पीते पल्वलवारिणि ॥ १०९ ॥

हतोऽक्षः कपिमात्रेण गतः शत्रुं विभीषणः ।
न पश्यामि पुरः स्वन्तं कृतान्तो बलवानिव ॥ ११० ॥

प्रमाणीक्रियतां कालोऽवधिस्तस्य[6] विचिन्त्यताम् ।
जयस्तवाद्याँश्रद्धेयो हैहयारिजयोद्धुरे ॥ १११ ॥

अर्धे[8] पुंसः पुराणस्य देवौ हरिहरावुभौ ।
एकं तत्र प्रपन्नस्य प्रद्वेषः कस्तवापरे ॥ ११२ ॥

यो हरिः स हरो देवः यो हरः स पितामहः ।
नामत्रयविभिन्नेयमेकैव त्रिदशत्रयी ॥ ११३ ॥

य एतां वेत्ति स बुधो यो नमस्यति सोऽनघः ।
योऽभ्यस्यति स तत्रैव लीयते लीनविक्रियः ॥ ११४ ॥

सैद्धान्तिकसमाजेषु प्रत्यक्तत्वानि पश्यतः ।
शुश्रूषमाणया देव त्वत्त एव श्रुतं मया ॥ ११५ ॥

कुरु प्रसादं प्रह्वाऽस्मि विह्वलाऽस्मि कुलापदि ।
रजो विधूय सत्त्वस्थः पाहि पौलस्त्य बन्धुताम् ॥ ११६ ॥

न कामेषु निरुद्धोऽसि[9] नोपरुद्धोऽसि सङ्कटे ।
मया न धर्मात् कृष्टोऽसि कारणेनार्थकामयोः ॥ ११७ ॥

क्षन्तुमर्हसि जीवेश मयेत्युद्दामयेव यत् ।
कुलस्याद्य निमित्तेन श्राविताऽसि कटून्यपि ॥ ११८ ॥

---

१. A ग्रहं । २ A क्षीणं । ३. A घृ । ४. A तव । ५. BCD मित्व । ६. BD बलिस्तस्मिन् ; C वालिः ७. A य । ८. D अर्धविंशः । ९. BCD ष्वनु ।

इति मन्दोदरीवाक्यैर्निष्पन्दोऽभूद्दशाननः ।
चिरस्यं[1] तामुवाचेदं मुखैर्मुकुलितेक्षणैः ॥ ११९ ॥

तमोऽस्तं दर्शितः पन्थाः सन्तापः क्षपितो हृदि ।
त्वया नश्चन्द्रिकाभाभिराभिः सुदति सूक्तिभिः ॥ १२० ॥

प्रत्यर्पयामि वैदेहीं मानयामि विभीषणम् ।
रामे वैरं विमुञ्चामि प्रमाणं तव शासनम् ॥ १२१ ॥

द्विजेभ्यो दत्तमभयं देवेभ्यश्च कृतं नमः ।
अद्याकृष्टं परस्त्रीभ्यस्तवादेशान्मया मनः ॥ १२२ ॥

उशन्ति गृहिणीमर्धं मनुष्याणां मनीषिणः ।
मन्दोदरि दशग्रीवः समग्रो भवतीमयः ॥ १२३ ॥

त्वमङ्गानि त्वमसवस्त्वमात्मा च मनश्च मे ।
त्वमन्तश्च बहिश्च त्वं त्वन्मयोऽयं दशाननः ॥ १२४ ॥

त्वत्प्रसादे ममोल्लासस्त्वत्कोपेऽपि कुतूहलम् ।
त्वत्प्रागल्भ्ये रतिः क्वापि त्वन्मौग्ध्येऽपि घना मुदः ॥ १२५ ॥

त्रिजगद्विजयक्लेशं बाहवो विस्मरन्ति[3] मे ।
निमज्ज्या[4]मृतशीतेषु त्वदङ्गेषु वरानने ॥ १२६ ॥

इत्यादिकं स कामार्तः[5] सत्यानृतमुवाच ताम् ।
वञ्चयन्ति विदग्धा हि येन तेनापि योषितः ॥ १२७ ॥

ततः स निष्क्रम्य बली[6] बलं ज्ञातुं वनौकसाम् ।
रहसि प्रहिणोति स्म मन्त्रिणौ शुकसारणौ ॥ १२८ ॥

अन्तं ययौ न योधानां नायुधानां न वर्मणाम् ।
न खरोष्ट्रगजाश्वानां न च सारार्थसंपदाम् ॥ १२९ ॥

हेमाद्रिवलयाकारान् प्राकारान् परितुष्टुवे ।
कृतक्रूर[7]कवाटायां द्वारि द्वारि दृशं ददौ ॥ १३० ॥

१. CD विरम्य । २. A माश्वा । ३. A न्तु । ४. A ज्ञा । ५. A र्तीः । ६. BC छरावर्णि ।
७. A सज्ज ।

नाचिन्तयत्परास्कन्दं मन्दधीः परिखाशुं[1] सः ।
लङ्घिताम्बुनिधिस्तस्य कपेर्विस्मृतवानिव ॥ १३१ ॥

ददर्श दुर्निमित्तानि दुःस्वप्नानन्वभूद्बहून् ।
आरेभे न प्रतीकारं दर्पदोषाद्दशाननः ॥ १३२ ॥

वक्ष्यन्ति माममर्यादमनार्यं वा[2] मनीषिणः ।
आरब्धरावणवधं साधुकारिणमेव वा ॥ १३३ ॥

त्यजामि वा देहमिमं तपस्तीव्रं चरामि वा ।
कं पृच्छामि क्व गच्छामि गहने कृत्यसङ्कटे ॥ १३४ ॥

किमार्यं धनदं यामि किं तिष्ठे परमेष्ठिने[3] ।
मानयामि किमादेशं पुलस्त्यस्य पितुःपितुः ॥ १३५ ॥

ज्येष्ठमासन्नसंग्रामं गतो मुक्त्वा विभीषणः ।
इतीदमयशो दीप्तं को मे निर्वापयिष्यति ॥ १३६ ॥

न मां द्रक्ष्यति[4] सौमित्रिर्ज्येष्ठभ्रातृवधोद्यतम् ।
सुग्रीवस्त्यक्ष्यति व्रीडामनुरूपसमागमे ॥ १३७ ॥

भिन्नसौदर्यमर्यादे मय्युक्ते[5]भ्रातृमर्मणि ।
रामो दाक्षिण्यनिभृतः किञ्चित्ते न गादिष्यति ॥ १३८ ॥

धिङ्मामराक्षसमिव त्यजाम्यद्यापि तं न यत् ।
एकासृग्गन्धसंस्कारं[6] दारुणे[7] दशकन्धरे ॥ १३९ ॥

इति द्वापरमापन्नस्तां निशामत्यवाहयत् ।
वेलाङ्के विलुठन्खेलद्वालशङ्के विभीषणः ॥ १४० ॥

निश्चिकाय निशाशेषे सौमनस्यमुपेयिवान् ।
एकाग्रजजिघांसायामग्रजान्तरसंगतिम् ॥ १४१ ॥

सर्गं प्रहर्तुमकरोद्दोषराशौ दशानने ।
व्याधावनैकान्तिकतां गतः सोदरतागुणः ॥ १४२ ॥

१. BC तस्तु । २. BC यत्तं । ३. BCD नि । ४. BC व । ५. BCD दमप्युक्ते । ६. C क्तत्व-संस्कारो । D ग्वधसंसारो । B गुक्ष । ७. BC णो ।

व्रज रामं महात्मानं त्यज दस्युं दशाननम् ।
वेलासख्य इतीवोच्चैस्तमूचुर्वीचयोऽम्बुधेः ॥ १४३ ॥

तिष्ठ तिष्ठ दशकण्ठ हन्त्ययं त्वां निकारनिघृणो विभीषणः ।
इत्युदीर्य पुरमैकपैङ्गलीं गन्तुमम्बरतलेन तत्वरे ॥ १४४ ॥

अभजत्ततो बुध[1]मनोहृदयेन प्रणमन् पुराणपुरुषं हृदयेन ।
गगनाध्वपृष्ठ[2]मलमृज्ज्वलकायाः खचरीरलोकत म[3]होज्ज्वलकायाः ॥ १४५ ॥

इत्यभिनन्दकृतौ रामचरिते महाकाव्ये मन्दोदरीसमुपदशो नाम चतुर्विंशः सर्गः ॥

---

[4]कवीन्द्रैरुद्भूतं जितमनघशीलैः सुकृतिभिः कलावद्भिर्लब्धं फलमविकलं स्वाभिलषितम् ।
कृतेन प्रध्वस्तं कलियुगमकाण्डे बलवता कुलेन्दौ पालानामवति युवराजे वसुमतीम् ॥

किं[5] शीधुभिर्भवतु फाणितशर्कराद्यैः किं वा सितासहचरैः क्वथितैश्च दुग्धैः ।
दुग्धाब्धिलब्धसुधयापि न किञ्चिदेव यत्राभिनन्दसुकवेः प्रसरन्ति वाचः ॥

[6]ते मेघमुक्तमपि न स्तुवते हिमांशुं तेषां मनो न रमते मकरध्वजेऽपि ।
सर्वारिवीरविजयप्रसृतप्रशस्तिः श्रीहारवर्षजगतीपतिरीक्षितो यैः ॥

---

१ CDE नुजद्युतोवधि । २. BCDE परनाथपृष्ठतलमु । ३. CD सनो । ४. A omits this sloka; ५. C only reads this sloka. ६. A only reads this sloka.

# पञ्चविंशः सर्गः ॥

कालेन तेन हनुमत्कथितप्रवृत्तिः सौमित्रिणा सह पुरस्सरवानरेन्द्रः ।
यात्रां प्रसन्नकरणो[1]ऽनुगुणग्रहेऽह्नि जग्राह रावणसमाप्तिरणाय रामः ॥ १ ॥

प्रास्थानिकः कपिपतेर्मणि[2]डिण्डिमानामाडम्बरः सडमरोऽम्बरमाततान ।
सर्वाद्रिकन्दरपरिग्रहमेदुरोर्मिर्घर्मान्तसंभव इवाम्बुमुचां निनादः ॥ २ ॥

तस्याथ राघवसरोरुहसौहृदेन पुत्रच्छलादिव रवेर्ध्रुवमागतस्य ।
छेत्तुं तमो दशसु दिक्षु दशाननाख्यं चेलुः करा इव कडाररुचः कपीन्द्राः ॥ ३ ॥

शङ्खस्वनानुपदमुज्झितसर्वकार्यैर्निर्यद्भिरग्रसरयूथपयूथपेन्द्रैः ।
पूर्वाधिवासगिरिकन्दरसंस्थ एव तारस्ततार[3] तटकाननमम्बुराशेः ॥ ४ ॥

मैन्दो महेन्द्र इव सावरजश्चचाल लीलाधृतद्विविदपाणितलस्तदानीम् ।
आसीदथाम्बुनिधि[4]मार्गधरातिरिक्तं[5] नासीरसन्ततिनिरन्तरमन्तरिक्षम् ॥ ५ ॥

निश्चक्रमुर्निकटसंख्यरसादसंख्यास्से[6]नास्तयोरवनिमेव निमज्जयन्त्यः ।
भिद्योद्धयोर्नवघनागमपूरवेगादुद्दामडम्बरतरङ्गरवा इवापः ॥ ६ ॥

संघट्टपिष्टतटतालतमालखण्डैः तेने बलैः शतबले[9]ः सकलो महेन्द्रः ।
आमूलकम्पशिथिलाश्मनिवेशबन्धो[10] विन्ध्यः पृथुं भर[11]मसोढ न वाहिनीनाम् ॥७॥

प्रष्ठप्रधानकपिसंहतिसङ्कटायां तस्यां मम्रुः ककुभि केसरिणो न सेना[12]ः ।
सौजन्यशीतलमुखोऽपि सुतोऽञ्जनायाः प्रोत्सारणां गुणगणैरकरोत् प्रदीप्तैः ॥८॥

मध्येवरप्लवगनागचमूसहस्रं सस्रे सहस्रकरभासुरवक्त्रभासा ।
तत्पूर्वसंभ्रमपरिग्रहमुक्त[13]मार्गान् मार्गाद्रिसानुषु हरीन् हसै[14]ता गजेन ॥ ९ ॥

तुल्यं गवः प्रसरति स्म जलस्थलाभ्यां वल्गन्महीगगनयोर्गवयो जगाम ।
पृथ्वीभृतामचलदुन्नमितात्मशृङ्गः शृङ्गाणि भूमिसमतां गमयन् गवाक्षः ॥ १० ॥

---

१. CD णा । २. A स्तुमुलनिर्झर । ३. BD न । ४. B धर ५. AC क्त । ६. A. स्ते । ७. A च्च
८. AC भेदा ९. BCD वनसदाम् । १०. A द्धो । ११. AB न्ध्यंपृथोर्भ । १२. A सिंहाः । १३. B भुक्त
CD युक्त १४. BCD सह ।

प्रापत्पुरः कनकभक्तिलसत्किरीटः काष्ठामुखानि मुखकालिकया विलिम्पन् ।
नीलो दवाग्निरिव विन्ध्यवनाहितार्चिःसंभिन्नधूमवलयो मलयोपकण्ठम् ॥ ११ ॥

दूरप्रकाशदशनालिबलाकिनीभिराकेकरेक्षणमरीचिसटातटिद्भिः ।
आतस्तिरेऽद्रिवनमार्गतलाधिकाभिः खं कालिकाभिरिव जाम्बवतश्चमूभिः ॥ १२ ॥

ऋक्षैः कचार्धनिचितारुणभीषणाक्षैरन्वीयिरे हरिभटाः स्फुटकेसरास्ते ।
भस्मोत्करैरिव विलम्बितविस्फुलिङ्गैः कक्षाग्नयः प्रसृतलोलशिखाकलापाः ॥ १३ ॥

एके विनिद्रकनकाम्बुजगर्भगौरैरन्ये नवोदितविरोचनबिम्बताम्रैः ।
केऽपि प्रवालपटलीपरभागचौरैः केचिच्च भिन्नकुरुविन्दशिलाभिरामैः ॥ १४ ॥

केचिद्द्रुजाह्वकुसुमोत्करतुल्यवर्णैः केचित्प्रकामविलसद्गिरिकर्णिकाभैः ।
केचिच्च केतकशिखाशुचिरश्मिजालैः केचिच्च रूढशरकाण्डविपाण्डुगण्डैः ॥ १५ ॥

एकेऽश्मगर्भहरितैरपरेऽञ्जनाभैरन्ये निरभ्रगगनोदरसंनिकाशैः ।
केचिद्विचेलुरलिकोकिलकान्तिनीलैर्वक्त्रैः प्लवङ्गपतयः पतगेन्द्रवेगाः ॥ १६ ॥

केचिद्ययुर्विपुलबर्हिकलापक्लृप्तच्छत्रावलीहसितसान्द्रतमालखण्डाः ।
केचिच्च धौतविरजोंऽशुकवैजयन्तीसन्तानसंहितशरद्घनराजिरन्ध्राः ॥ १७ ॥

जग्मुः स्थलीभिरुपशैलमनोकहालीः कापेयखेलमपरे परिलोलवन्तः ।
साधारणाध्वसुलभोपगमाभिरीयुरद्भिः करामलकतुल्यतलाभिरन्ये ॥ १८ ॥

जाताः स्थलानि सरितः सरितो मरूणि रोधांसि रुद्धवनवेणिरयाणि पेतुः ।
आसन् कियन्त्यपि रजांसि च मार्गशैलाः सेहे भरः स धरया न हरीश्वराणाम् ॥ १९ ॥

अन्योन्यसंघटनखेलविलासपत्राः पुत्राख्ययाऽऽत्मसु महीतलगोचरेषु ।
ब्रह्मादयः परमदेवगणास्तदानीं तेरुस्त्रिविष्टपरुहां प्रसवं तरूणाम् ॥ २० ॥

आघ्रातवज्रधरवीर्यविशेषगन्धैरुत्कन्धराय चलते महता बलेन ।
तेने मिथः प्रमदमूर्छितगीतवाद्यैर्विद्याधरैर्वियति मङ्गलमङ्गदाय ॥ २१ ॥

रामश्चचाल मसृणं सह लक्ष्मणेन दूरीचकार ककुदानि वलीमुखेन्द्रः ।
साधारणश्रमजुषामुपकण्ठमीयुस्तेषामुपान्तनलिनीसुहृदः समीराः ॥ २२ ॥

१. A द्धना । २. D रा ३. A खा ४. A हि. ५. CD स्म ६. BC-विरेणु । ७. D पतङ्गगतयः ।
८. CD रा । ९. BCP तामुरस्सु १०. A तल ११. AB विशाल्यन्त्रः पुत्राख्यया CD विलासपत्रः ।
१२. D मद ।

चक्रुः स्वयं सहृदया हरयो विविक्तं धीरो वनान्तमरुदन्तिकमाजगाम ।
रामोऽव[1]तीर्णविरहाधिरिवादरेण पृच्छन्नियाय हनुमन्तमुदन्तशेषम् ॥ २३ ॥

नात्यादरेण जगृहे फलमङ्घ्रिपाणामासेदिरेऽतिरभसान्न च पुष्पगन्[2]धाः ।
सोऽध्वा न खेदमकरोत्कपियूथपानामध्यक्षरामचरितामृतनन्दितानाम् ॥ २४ ॥

छायाः फलानि कुसुमानि पलाशवन्ति झात्कारवन्ति गिरिनिर्झरिणीजलानि ।
संवेगिनेव सहसा दधिरेऽन्तिकेषु रामानुवृत्तिसुकृतेन हरीश्वराणाम् ॥ २५ ॥

तास्ताः पुरोगमुदिता मृगपक्षिजातीरुद्दिश्य दाशरथिना ददृशे सुषेणः ।
तावानथ प्लवगचक्रभरः स चक्रे वक्रं तृणाग्र[3]मपि नाध्वसु दक्षिणेषु ॥ २६ ॥

नेशुर्नितान्तसुभगा अपि चन्दनालीस्त्यक्त्वा वितीर्ण[4]निजवेष्टनमार्ग[5]चिह्नाः ।
पर्यायसंनिहितजैत्रमुखारवेभ्यः तेभ्यो भयान्मलयसानुषु पन्नगौघाः ॥ २७ ॥

मा भैष्ट तिष्ठत यथासुखमेष पश्चाद्देवो दयालुरुपगच्छति गायतोच्चैः ।
इत्यादरोन्नमितपाणितला वितेनुः विश्वासमश्ववदनासु वनौकसस्ते ॥ २८ ॥

ते मुक्तधैर्यनिगडा इव चूतषण्डेष्वाकर्ण्य कोकिलरवं हरयो ववल्गुः ।
रामोऽभवन्निपुणलक्ष्मणलक्षितार्तिः तं दक्षिणानिलगुरुं गिरिमीक्षमाणः ॥ २९ ॥

तासु स्थलीषु ललितासु लतासु तासु तासु प्रसन्नतर[6]वारिषु वाहिनीषु ।
सौमित्रिसंभ्रमनिवेदितवेदनौघो रामः प्लवङ्गपतिभिश्चकितैः परीये ॥ ३० ॥

निस्त्रा[7]सनायकमयं[8] मलयापगानां रामानुगाः प्र[9]ततमध्वरसा[10]दपश्यन् ।
तं शुक्तिसंपुटशतैः पयसः प्रचा[11]रमावर्ज्यमानमलसैः पुलिनोदरेषु ॥ ३१ ॥

तीरान्तिके[12]ष्वपसृताम्बुषु ताम्रपर्ण्यास्तैः सस्मितं ददृशिरे हरिवीरवृन्दैः ।
ज्योत्स्ना[13]तिशीतविशदां मुहुरुत्पिबन्तो मुक्तारुचं मरिचखिन्नमुखाश्चकोराः ॥ ३२ ॥

केचिच्छू[14]वांसि मुरलोर्मिरवैर्धु[15]न्वन् केऽप्यस्पृशन्नगनदीसलिलं सलीलम् ।
स्रोतस्सु केऽपि दृशमुत्सुकिनो वितेरुः तीरोपलाहतिविवर्तिषु वेत्रवत्याः ॥ ३३ ॥

रेमे रभः शिखरमृक्षवतोऽधिरुह्य[16] रम्भो विलोक्य मुमुदेऽम्बुधिकूलरम्भाः ।
तास्ताश्च दर्दुरनितम्बभुवोऽवगाह्य गन्तुं गृहाय रभसो[17] रभसं मुमोच ॥ ३४ ॥

---

१. C वि । २. A त्पयसांनब । ३, D चक्रं मृणालमपि । ४. A निविष्ट । ५. D वारि । ६. A त्रु । ७. D श्वा । ८. A ल्म् । ९. A प । १०. BCD वशा । ११. CD का १२. BCD वीरान्तरे । १३.D योंस्ताति । A. ज्योत्स्नेति । १४. CD पिश्र १५. CD चयैरधि । १६. BCD निरीक्ष्य । १७. B शरभो ।

दातुं[1] शशाक वनवासवनस्थलीषु नाहर्तुमाशु नयनेन्द्रियमिन्द्रपौत्र[2]ः ।
रामप्रयोजनरसः स महानहासीद्यचन्दनो मलयचन्दनकाननानि ॥ ३५ ॥

वेलाट[3]वीयवनिकाजनितान्तरस्य शुश्राव घोषमुदधेः शरभो गभीरम् ।
आरब्धनृत्त[4]मिव तं लहरीभिरारादारुह्य सह्यमृषभः प्रसभं ददर्श ॥ ३६ ॥

अन्योन्यमुत्कलितकेलिरसाः कथाभिरज्ञातलङ्घितविशङ्कटविन्ध्यपादा[5]ः ॥
आशंसिताहवमनोरथमध्वनोऽन्तमीयुः क्रमादुदय[6]कान्तमुखाः कपीन्द्राः ॥ ३७ ॥

निन्युर्निविश्य कियतीमपि केऽपि वेलामेलासु गाढफलसौरभनिर्गमासु ।
केचिच्च पाकमुखरीकृतबीजकोशान् जातिद्रुमान् दुधुविरे कपयः कराभ्याम् ॥३८॥

केचित् क्षणार्धमभजन्त भुजङ्गवल्लीः केचिल्लवङ्गमुकुलानि शनैरचिन्वन् ।
केचिच्च धूलिपटलेन मिथः सलीलमघ्नन् घनेन घनसारवनस्थलीनाम् ॥ ३९ ॥

तेन क्रमाद्विकचकाञ्चनकेतकीकं नैकक्रमोन्नतनिरन्तरनारिकेलम् ।
रेमेऽवलोक्य रघुनाथपुरोगमानां पूगेन पूगवनशालि समुद्रकूलम् ॥ ४० ॥

ऊचुः पुरः प्रतिहतप्रसरास्तदानीमेतावदेव वर्तं तत्त्वमिदं महीति ।
आश्चर्यमापुरवलोक्य पुनः कपीन्द्रास्तामम्भसश्च नभसश्च महाविभूतिम् ॥ ४१ ॥

क्वाशाः क्व भूः क्व गगनं क्व वनं क्व शैलाः कीर्णं पुरः सलिलमेव किमुत्तरङ्गम् ।
किं नः क्षमं कथमनेन गतो हनूमानित्याकुलं कपिकुलं सहसा बभूव ॥ ४२ ॥

स्तोमः स रामचरणान्तजुषां कपीनामन्योन्यमद्भुतरसाकुलमीक्षमाणः ।
ऊर्मिप्रणुन्नमणिसंकुलकूलमध्यम[11]ध्यास्त शीकरकणाचितकेसरौघः ॥ ४३ ॥

लभ्या कथं जनकराजसुतेति लक्ष्मीर्वध्यः कथं स च दशाननकालकूटः ।
इत्युत्सुकाः सलिलराशितटे निषेदुस्ते वानराकृतिभृतस्त्रिदशप्रवीराः ॥ ४४ ॥

दूरावनम्रतटसंमुखशङ्खयूथः शङ्कोन्मुखेभमकरावलिवीक्षिताशः।
तेन प्लवङ्गपतिसैन्यमहाभरेण दोलायमान इव नीर[12]निधिर्जुघूर्णे ॥ ४५ ॥

तानाकिरन् पृथगुदीरितजैत्रवर्[13]गानाशीःप्रदानसदृश[14]प्रतिघातघोषाः ।
आचारलाजविसरैरिव शीकरौघैः वृद्धाः समुद्रलहरीवनितीः कपीन्द्रान् ॥ ४६ ॥

---

१. BCD दत्तं । २. A जानुः । ३. A तटी । ४. BC त्य । ५. A कूटाः । ६. BCD क्रमानुदित-कान्ति । ७. ABC महती । ८. BC कुसुमा । ९. B नन्दन यूथपा । १०. BD तव । ११. BCD मङ्क्षमध्येर. १२. A तोय । १३. BC पा । १४. A स्वसदृक् । १५. A ततयः ।

कर्तुं प्रियं रघुपतेः स तदाऽध्युवास वेलातटं निकटदेहभरो हरीशः ।
मैनाकमम्बुनिधिमग्नमिवानुसर्तुं मेरुर्महीधरसहस्रपरीतमूलः ॥ ४७ ॥

अन्तः सदर्पविकसत्कुमुदैस्तदानीमुत्केसरैः परिवृतं हरिवीरपद्मैः ।
पारोन्मुखोत्सुकरघूद्वहराजहंसमुद्रीविलक्ष्मणमशोभत सिन्धुकूलम् ॥ ४८ ॥

मीलन्निवास शिशुकाकृतिराञ्जनेयः स्वां जाम्बवान् परिणतिश्लथतां निनिन्द ।
नीलाङ्गदद्विविदमैन्दमुखा ववल्गुः वीक्ष्याग्रतोऽम्बुनिधिमुग्रजवा युवानः ॥ ४९ ॥

रामोऽस्मरन्नपि चिरन्तनचेष्टितानि पर्युत्सुकत्वमभजज्जलधिं विलोक्य ।
न व्येति पूर्वजननानुभवाधिवासश्चेतस्यपूर्वविधिभारनिरन्तरेऽपि ॥ ५० ॥

शेषस्तथैव स तवास्ति तथैव लक्ष्मीः भक्तस्तथाऽहमपि संप्रति को नियोगः ।
कल्लोलराजिभिरितीव तरङ्गमाली रिङ्गन्नभाषत रघूद्वहपादमूले ॥ ५१ ॥

श्रोतव्यचाटुरसकोमलमञ्जुनादं पादाब्जयोरुपहितोर्चितवीचिहस्तम् ।
विस्तीर्णरत्नविसरोपदमम्बुराशिमुन्मील्य दासमिव दाशरथिर्ददर्श ॥ ५२ ॥

तस्मै तदाऽभिमुखनिर्मलवीचिवीथीविश्रान्तसालसदृशे पुरुषोत्तमाय ।
आचष्ट चाटुकुशलः स्वयमेव सिन्धोः सारं समस्तमिति वानरचक्रवर्ती ॥ ५३ ॥

पूर्वैरियानयमखानि तुरङ्गहेतोः पातालमूलमवलोकितुमुद्यतैस्तैः ।
तत्कारणं सुरसरित्पयसामपूरि तप्त्वाँऽपरेण भवतोऽयमगस्त्यपीतः ॥ ५४ ॥

लक्ष्म्याः पितैष तव पूर्वभवप्रियायाः प्रीतो हरः स भगवानिह रेखयेन्दोः ।
इन्द्राय साश्वमिभरत्नमसावसूत स्वर्गस्य भूषणमितोऽजनि पारिजातः ॥ ५५ ॥

पुष्णाति शत्रुमपि दीप्तमुदारभावादेष श्रितं शिखिनमङ्घ्रिरजातबाधः ।
अप्राप्तपक्षविपदां कुपितादपीन्द्रादत्रासते शिखरिणामभयं कुलानि ॥ ५६ ॥

अन्तर्भवन्ति पयसां पृषतेषु मेघाः पूर्णस्स्खलन्ति मणिरश्मिशिखासु भासः ।
भङ्गोदरेषु विहरन्ति महाभुजङ्गाः शैलास्तिमिङ्गिलतलेषु ललन्त्यमुष्मिन् ॥ ५७ ॥

अस्याधिगच्छति न कोऽपि तलं जलानामस्यान्तरीपमवनिः परितोऽयमेव ।
एष स्ववैभवमदोत्कलिकाविलोलः प्रेङ्खत्यजस्रमधिरोढुमिवोपरि द्याम् ॥ ५८ ॥

---

१. A वि । २. BD क । ३. D हरीश्वर । ४. BD गता । ५. A मन्द । ६. A च्छ्रि । ७. AC हयस्य । ८. C ह्लो । ९. A स्पृष्टः । B पूष्णस्तुलन्ति । D पूर्णास्तुलन्ति ।

उद्वेल्लदुग्र[1]भुजगाङ्गदवीचिबाहुः वेलोच्चलत्तुमुलतोयरवाट्टहासः ।
चन्द्रान्तलग्नपृथुफेनकपालमालो लीलामयं हसति पर्वसु भैरवस्य ॥ ५९ ॥

रोधस्यजस्रमयमोघरवो नदीनां मेघारवोऽप्यणुपरि प्रणयप्रगल्भः ।
वीचीरवस्तुमुल एष तथापि तूष्णीमास्तीर्य सर्वककुभः स्वपितीव सिन्धुः ॥ ६० ॥

पश्य प्रसीद विषमोल्लसदङ्कुरालिरोचिष्णुविद्रुमकदम्बकमम्बुराशौ ।
मीनौघ[2]पद्धतिविशेषलसत्कठोरसंस्थानभेदशतशालि मधोरिवास्र[3]क् ॥ ६१ ॥

आमृष्टशर्ङ्ग[4]रविकर्तनवज्रपाणिब्रह्मादिकत्रिदिवसद्मपरम्परस्य ।
निष्कम्पनिर्मलपयःपटलस्तवायं निद्रालयः प्रलयकालनिराकुलस्य ॥ ६२ ॥

गव्यूतयोऽस्य कतिचिन्नयनांशुगम्याः श्राम्यत्यमुष्य कलयद्विभुतां मनोऽपि ।
अस्योदितानि पुनरागमसंहिताभिर्द्वीपान्तराणि मम गोचरतां गतानि ॥ ६३ ॥

अत्र त्रयीमनुससार पुराणमीनः कूर्मो महीमिह निविष्टतनुर्बिभर्ति ।
अस्मिन्नसावसुरभारभरान्निमग्नां गामुज्जहार परिगृह्य महावराहः ॥ ६४ ॥

शून्यासु दिक्षु विपुले तमसि स्वयंभूः विश्वं सिसृक्षुरिममेव ससर्ज पूर्वम् ।
तस्याथ बीजपरिषेकनिदानमन्तर्निर्वर्ण्यते स्म जगदण्डमिहैव हैमम् ॥ ६५ ॥

अत्रोदयास्तमयभाजनमंशुमाली सोमोऽस्य वल्लभ इतीव शिवस्य मूर्ध्नि ।
अस्यान्तमेकमधिगम्य कमप्यगम्यं मीलत्यचिन्त्यमहिमा भगवाननन्तः ॥ ६६ ॥

मेघाः किरन्ति जलमस्य भुवि स्वनन्तः सोऽस्तीह मूलमणिरत्नधरास्वनन्तः ।
अस्मिन् पतन्ति पयसामविराममोघाः श्लाघागिरोऽत्र विदुषां सुतराममोघाः ॥ ६७ ॥

शश्वद्दिगम्बरपरिग्रहभीमवर्ष्मा वल्गत्ययं विशदशीकरमुक्तरङ्गः ।
विस्रंसिभस्मकणकर्बुरलोलपाणिः कल्पान्तकाल इव शम्भुरमुक्तरङ्गः ॥ ६८ ॥

उद्यन्त्यमी निकट एव महातरङ्गाश्चित्राश्च सत्त्वगतयः स्फुटमुद्भवन्ति ।
दूरादिह क्रमजिताखिलभूमिदोषे निष्कम्पमेकममृतं परमाविरस्ति ॥ ६९ ॥

आयस्तनीलमणिकुट्टिमकोमलानि केचिद्दिशन्ति हृदि मे[6] भगवन्नमूनि ।
वारीणि विद्रुमरुचिच्छुरितानि सिन्धोः सन्ध्याभ्र[7]भिन्नशरदम्बरविभ्रमाणि ॥ ७० ॥

---

१. BD मु । २. CE मीनोऽथ । ३. B श्रम् D स्रम् । ४. D पृष्टगन्ध । C शङ्कसत्वर A सत्वर ।
५. CA कश्चिद्वि । ६. BCD दये । ७. A न्ध्यांशु । ८. D डम्बरा ।

अन्तर्गताहिरिपुरत्नरुचिच्छटानामभ्युद्गमेन परितो हरितोर्मिजालैः ।
आश्चर्यमर्पयति चेतसि दृश्यमानः सञ्जातबालतृणराजिरिवाम्बुराशिः ॥ ७१ ॥

आदिश्यतामरिपुरीपरिखात्वभाजः किं युज्यते जलनिधेः प्लवगोत्तमेभ्यः ।
गत्वाऽस्य पारमधुनोपगतो हनूमान् विस्रब्धमन्यदपि शाधि सहास्तवामी ॥ ७२ ॥

इति वचनमुदारं वासरेशः सुतस्य श्रुतिपथमिव नेष्यन्नन्तरिक्षाल्ललम्बे ।
रघुपतिरुदतिष्ठत्सौष्ठवोद्भेददत्तप्रियसखपरितोषः प्रस्तुताचारहेतोः ॥ ७३ ॥

इत्यभिनन्दकृतौ रामचरिते महाकाव्ये समुद्रसन्दर्शनो नाम पञ्चविंशः सर्गः ॥

---

न त्यागशक्तिमधिगच्छति कश्चिदर्थी नास्त्येव विक्रमगुणस्य समः सपत्नः ।
अर्था विशन्ति पथि यस्य धियश्च शास्त्रमेकः स विस्मयकरः परचक्रभीमः ॥



---

१. BCD मत्युद्गमोरुरुचिरोपरिरश्मिजाल २. A वशा ।

# षड्विंशः सर्गः ॥



अथ वासरान्तविधिमम्बुनिधौ विततान दाशरथिरेकमनाः ।
चरमं प्लवङ्गपतिमित्यवदद्विनयानतं वियति तारकिते ॥ १ ॥

विधिवद्विधिः प्लवगराज ततः कृतमाह्निकं प्रियसखाः सुखिनः ।
इत आस्यतामुदधिरस्यति नः कृपणोऽतिथीनिव समीपजुषः ॥ २ ॥

अयमुच्चलत्युडुपतेरुदयान्मम दूरमाधिरिव नीरनिधिः ।
अनयोर्जयाय समवेहि सहेरसहस्तवाहमुपदेष्टुमपि ॥ ३ ॥

मितमित्युदीर्य विरराम विभुर्विमनाः ससाद पुलिने शुचिनि ।
नुनुदुस्तदङ्कमनङ्गशराः शशिनीव चुम्बितनिशे निशिताः ॥ ४ ॥

विससर्ज धैर्यमनिवार्यमनोभवरोपरोपितमहार्तिरयः ।
न जुगूह लक्ष्मण इव प्लवगेष्वपि तत्क्षणं रघुपतिः किमपि ॥ ५ ॥

अयमस्मि देव तव तल्पगृहं निगृहाण रावणमुपेहि पुनः ।
मुखमुद्बभार शशिबिम्बनिभादिति वक्तुकाम इव तं जलधिः ॥ ६ ॥

पिदधे महीमभिजगाम दिशः प्रसरैरपां गिरितटीरहरत् ।
परिचुम्बति स्म चिरमूर्म्यधरैर्दिवमर्पितेन्दुसुमुखीमुदधिः ॥ ७ ॥

प्रससार शुक्तिपुटपङ्क्तिपुरस्सरमम्बु कम्बुकुलसंवलितम् ।
विससार वालधिभिरार्द्रसटैर्झटिति प्लवङ्गमकुलं परितः ॥ ८ ॥

नवकौमुदीरभसवेगवशादवहत्तथाऽम्बुनिधिरुत्कलिकाः ।
कलुषैर्मुखैः प्रतिययुः सरितः प्रभवस्थलीस्त्वरितमेव यथा ॥ ९ ॥

सरितो यतीरनुबबन्ध रसन् परिहासवानिव समुल्लसितः ।
व्यवृतच्चिरेण परिगृह्य निजस्थितिभेदभीत इव सिन्धुपतिः ॥ १० ॥

सुबृहद्यशोमृतरसेन तदप्रतिशायिनि प्लवगदेवसभे ।
स्वयमर्पितात्मवपुषा मथनं शशिमन्दरेण जलधेर्विदधे ॥ ११ ॥

१. A ग । २. D न ३. A रा ४. BCD न्नुदयतेनु । ५. BCD खे सहसा सहो । ६. A विमले ७. A तुतु ८. तोड्डप C तैन्दव ९. BCD रुद्धगतै or राशुगतै १०. BCD अपिब ११. C धि ।

तुहिनांशुतत्प्रतिशरीरभृतोर्विततोडुफेनलवयोः परितः ।
न तदा रघूद्वहसमाजबुधैर्बुबुधेऽन्तरं गगनसागरयोः ॥ १२ ॥

रविनन्दन स्थगय चन्द्रमसं मम पश्य संप्रति सुधेति सखे ।
अयमन्तरूढकलुषः क्षिपति स्मरबाणवर्त्मसु विषं विषमम् ॥ १३ ॥

किममीभिरम्बुजदलव्यजनैः किममीभिरार्द्रकुसुमप्रकरैः ।
मम तापहेतुममुमेव विधुं तुद वालिपुत्र बलवानसि चेत् ॥ १४ ॥

इयमृक्षराज रजनी न भवत्यहरेव रौद्रमिदमुत्तपति ।
वत कौमुदीति मृगतोयमिमास्तरलीकरोति जलराशितटीः ॥ १५ ॥

नल किं मृणालवलकलाभरणैर्मणिभिः फलं किमपि नील न मे ।
कुमुद प्रयच्छ हृदि पाणितलं विरहानलः शतबले बलवान् ॥ १६ ॥

मनसः सुषेण विषमो दवथुर्वितथा वपुष्युदकयुक्तिरियम् ।
अयमुन्मिषत्कुमुदगन्धकटुः पवनः प्रवाति कथमुच्छ्वसिमि ॥ १७ ॥

कियती निशा निषध यामवती किमितीन्दुरद्य न जगत्त्यजति ।
त्वरयार्य तार सवितारमितश्च्युतचन्द्रिकातपमसौ तपतु ॥ १८ ॥

पुलिनं विनाकृतमिदं प्रियया मम सार्द्रवालुकमपि ज्वलति ।
पवमानपुत्र किमवन्ति न मामपि सिन्धुपारलहरीमरुतः ॥ १९ ॥

इति यामिनीशमहिकोर्द्गतिभिर्धगिति प्रदीप्तविरहज्वलनः ।
वदमान एव स मिमील पुमान् प्रतिपन्नतन्त्र इव चन्द्रमुखः ॥ २० ॥

निकटं निशाचरपुरं हरयः प्रभुरेष निस्सह इव स्वपिति ।
अवधाय जागृत निशीथवतीमिति यामिकानरुणसूनुरशात् ॥ २१ ॥

अथ कुण्डलाङ्गदकिरीटमणिद्युतिजालजर्जरितनीलरुचः ।
निजवर्ष्मरुद्धपवमानपथानुपतोयदानिव तटिन्निचितान् ॥ २२ ॥

धृतदीप्तशक्तिमुसलासिगदापरिघाङ्कुशस्वधितिशूलशिलान् ।
विकरालवक्रनखरप्रकराननरालदीर्घघनकूर्चकचान् ॥ २३ ॥

---

१. BCD प्रसवेषु मार्गणपथेषु विषम् ; २. D नव ३. BCD वसा ४. A माघवती ५. A गजनत्य ।
६. BO मिहिकाद्य । ७. BCD भास्करिः छत्रगचक्रम । ८. त्ख । ९ BCD हरि ।

परिमण्डलारुणविशालदृशो दशनच्छदाभ्यधिकतीक्ष्ण[1]रदान् ।
जलभिन्नसेतुविषमोच्चनसानसमञ्जसाकृतिविशेषभृतः ॥ २४ ॥

क्रमनिर्यदूर्ध्वविरलर्क्षचया[2]न् सिचयान्तचञ्चदनुवातघनान्[3] ।
प्रतिपन्नभूमिगमनान् गगनाद्वनगोचरा ददृशुरस्रभुजः ॥ २५ ॥ कुलकम् ॥

उदगुस्तदाऽस्रभुज इत्युदितप्रतिघाः प्लवङ्गपतयः प्रति तान् ।
अनुगा हरेरिति कृताञ्जलयो रजनीचराः कपिगणानवदन् ॥ २६ ॥

त्यजताहवग्रहमुदग्रभुजाः सुहृदो वयं न भवतामरयः ।
अवधौ[4] भवाम शृणुत प्रचयं विनिवार्यतामयमनीकरवः ॥ २७ ॥

रजनीचरेष्वनघ एष न किं विदितो विभीषण इति प्लवगाः ।
प्रततं पतद्दशशिरश्चरितैर्धृतमस्त्यनेन हि पुलस्त्यकुलम् ॥ २८ ॥

उचितानुबन्धसरुषाऽग्रभुवा बहु विप्रकृत्य विधुतः स्वपुरात् ।
परिचिन्त्य भूरि परिपृच्छ्य गुरूनयमेति रामचरणौ शरणम् ॥ २९ ॥

परिबोधनाभिरयमर्थपतेश्च्युतसोदरत्वमललेपलवः ।
त्वरतेऽतिशय्य भवतोऽप्यधुना निधनाय तस्य जगदेकरिपोः ॥ ३० ॥

परमास्त्रवेदविदयं विजयी विविधाजिरङ्गरचनाकुशलः ।
कुरुतां कुतूहलमरिष्वनघो रघुनायकस्य पुरतः प्रहरन् ॥ ३१ ॥

इदमस्त्रमुद्यतमरातिषु वः त्यजत भ्रमं वदत किं कुरुताम् ।
प्रहरत्स्वपि प्लवगयोधगणा न भवत्सु गच्छति विकारमयम् ॥ ३२ ॥

अयमुज्झति स्वमपि दोषवशं गुणगौरवात्परमपि श्रयति ।
बत विस्रमप्यनुसरत्यसृजः पशुरेव गन्धमभितो न बुधः ॥ ३३ ॥

अनवेतकारणतया कपयः प्रथमं प्रपन्नमनुरूपमिदम् ।
अधुना तु वत्सलतयाऽनलसाः प्रभुमाशु नः कथयत प्रभवे ॥ ३४ ॥

विवृणोतु रावणरहस्यशतान्ययमादधातु विजयं भवताम् ।
विजिगीषुमर्प्य[6]तपसं भजते न सपत्नकुल्यपरमाणुरपि ॥ ३५ ॥

---

१. A विकसिताग्र २. BC लोर्ध्वंकचा । ३. C दयितेवपक्षतघनाविव तान् । A नौ । ५. BD नुपेत ।
६. A त्प ।

कपयस्तदोमिति गिरः सकलाः परिगृह्य राघवसमीपमगुः ।
विदधुर्विभीषणसमागमनप्रचयं च तं सुवचसो विदितम् ॥ ३६ ॥

अवलोक्य सादरमथार्कसुतं स पुमानुवाच हनुमान् क्व सखे ।
अयमस्मि दास इति सोऽभ्यवदद्विदितक्षपाचरकुलप्रचयः ॥ ३७ ॥

नियमात्प्रभोः स रभसोपगतः पुरदाहपर्वणि सुदृष्टचरम् ।
मुमुदे सगन्धमिव गन्धवहप्रभवो विभीषणमुदीक्ष्य चिरम् ॥ ३८ ॥

तमुपानिनाय जनकेन्द्रसुतावचनात् प्रतीतचरितं प्रभवे ।
कथितोपसर्पणनिमित्तमथ प्रथमानभक्तिरसमास्यरुचा ॥ ३९ ॥

प्रणनाम रामचरणौ हनुमद्विनिवेदितोपनतिहेतुरसौ ।
रजनीचरः सुचिरमादरवानधिपृष्ठमेनमभृशङ्कगवान् ॥ ४० ॥

अवदद्विहस्य च वयस्यमसौ भवतः श्रमादैवकरे विधुते ।
कुलमुज्ज्वलत्वममुनाऽस्रभुजामुपयास्यति प्रकटसारतया ॥ ४१ ॥

लवणोदधेरिव सुधाकिरणं कनकारविन्दमिव पङ्कतलात् ।
अवदातशीलमवगच्छ सखे पिशितात्कुलादुदितमार्यमिमम् ॥ ४२ ॥

इयमंशुमालिसुत रत्नवती जगती न कुत्र सुकृती यदयम् ।
अजनिष्ट विष्टपबुधोऽस्रभुजामपि घोरकल्मषनिधौ भवने ॥ ४३ ॥

बत वत्सलक्ष्मण इवोपनते सुहृदि त्वयीव सुबहुप्रणये ।
सहसैव विश्वसिति शत्रुकुलादपि मे समागतवतीह मनः ॥ ४४ ॥

अभिषिच्यतामुचित एष पदे पयसा मुदा जलनिधेरधुना ।
चिरमाविरस्तु कपिचक्रपुरस्कृतिधौतरावणनिकारमलः ॥ ४५ ॥

श्रुतमृक्षराट्प्रभृतयः सचिवाः स्वमुदीर्यतां हरिभटाः स्फुरितम् ।
परवानतीव जन एष भवत्स्ववधार्य शिष्ट सुविचिन्त्य मिथः ॥ ४६ ॥

भगवन् प्रमाणमिह वायुसुतो विचिकित्स्यते किमिव तूर्णमयम् ।
उपगृह्यतामुपरतः स रिपुर्निभृतानि सूचयति मर्मविदि ॥ ४७ ॥

१. BCD वहनप्रभवः पुरतो २. A वयसः । ३. BC दि । ४. C बृ । BD धृ । ५. A प्रविबुधा ।
६. A जन ७. BC D धुनैवजलधेरमुना LBCD omit this stanza.

[1]इति वादिनः प्रमदकण्टकिताः परितः परिच्छदविशेषभृतः ।
उपसेदुरीशमिव तं निकषातनयं तदैकमतयः कपयः ॥ ४८ ॥

प्रणयप्रवृत्तसकलात्मकथाः कथयांबभूवुरतिगूढमपि[2] ।
अथ ते समानकरणीयरसाः सहसाऽब्धिपारमधितत्वरिरे ॥ ४९ ॥

समकालमेव जलराशिममुं मम सैन्यमेतदभियाति यथा ।
नल शिल्पवानसि कुरुष्व तथेत्यवदद्विधानतरलोऽधिपतिः[3] ॥ ५० ॥

घटयामि सेतुमहमत्र नगैः प्लवगेश विश्वसिहि यातु निशा ।
प्रहिणु क्षितीध्रहरणाय हरीन् प्रहरान्तरे तरसि राशिमपाम् ॥ ५१ ॥

इति विश्वकर्मसुतसंश्रवणात् प्रमुदः प्लवङ्गमपतेरपतत् ।
स्ववलेपु दृष्टिरतिहृष्टिकरी कमलेपु दीप्तिरिव चण्डरुचः ॥ ५२ ॥

अवदच्च तानुपसि यूथपतीन् व्रजताहरध्वमविलम्बमिति[4] ।
गुरुदुष्कराद्भुतविधिप्रवणा लवणाब्धिवन्धनसहानचलान् ॥ ५३ ॥

जगृहुस्तदोमिति चमूपतयश्चतुराः शिरोभिरधिपस्य वचः ।
मुमुचुर्मुखैश्च ककुभः सपदि क्षणदानुरागमरुणच्छुरिताः ॥ ५४ ॥

अयमावयोर्दहनवाणहतः सहसैव शोषमुदधिर्व्रजतु ।
रचयाव संक्रममिषुप्रकरैरथवेह यान्ति किममी कपयः ॥ ५५ ॥

इति रामलक्ष्मणवचस्यवदत् कपिराट् किमद्भुतमिदं युवयोः ।
स्वयमेव सत्स्वभिसरेपु नतु प्रथमं परिश्रमजुपः प्रभवः ॥ ५६ ॥

अथ चेलुरुच्चलितवालधयः कपयो नभस्यपसरत्तमसि ।
प्रमुखेऽह्नि संनिहितवन्धभयादिव सिन्धुराणिभृतभावमगात् ॥ ५७ ॥

प्रशशंस दाशरथिरुन्महसः सह लक्ष्मणेन कपियोधगणान् ।
प्लवगेश्वरस्य सुहृदर्थरसः स विभीपणस्य विततान मुदम् ॥ ५८ ॥

चरमं ययुः प्रणयिनः कमलान्यभिहृत्य रामचरणाब्जतलम् ।
प्रथमं समुद्धृतमहीध्रकुलाः स्थपतिं प्लवङ्गपृतनापतयः ॥ ५९ ॥

१, BCD omit this stanza. २. B धिभूय CD भिभूपमिति। ३. C कैसुतः D कमतः । ४. A तः।

हरिवीरवृन्दसकलाङ्गहृतान् परिगृह्य पाणितलयोः कलया ।
जनितेन्द्रजालमचलानुदधौ निदधे नलस्तरलमीनकुले ॥ ६० ॥

निपतन्ममज्ज न गरिष्ठमपि प्रचचाल न क्वचिदलग्नमपि ।
अभिकामसंपदमतीत्य बभौ नलशिल्पसंनिमितमद्रिकुलम् ॥ ६१ ॥

अतिशातसूक्ष्म[1]मतिनासिमुखः शिखराणि संस्थितिसमान्यकरोत् ।
न जहार कालमणुमप्यचलैर्जलधिं बबन्ध सुरशिल्पिसुतः ॥ ६२ ॥

च्युतसङ्कटत्वविकटत्वकथाः सुपथाऽऽशु तेन नलशिल्पभुवा ।
अजयन्नजातपरिखेदकणाः कपयः कुपीटनिधिमेकपदे ॥ ६३ ॥

बलितूर्यभिन्नसुरबन्दिरवां हविषा करम्बितनृमांसचरुम्[2] ।
शुचिरत्नरश्मिचयमध्यलसद्विकरालकालपिशिताशिरुचम् ॥ ६४ ॥

बहिरप्यजस्रमभिरामशतैर्दिशतीं दृशोर्निगडबन्धमिव ।
प्रतिरुन्धतीं प्रतिगृहं प्रभया नभसो[3] विनिर्गमपथं परितः ॥ ६५ ॥

सनवच्छदामरुणरत्नकरैः कुसुमोत्तरां शशिमणिद्युतिभिः ।
फलशालिनीमुपरि हेमघटैरटवीति रोपितैमतिं पुरतः ॥ ६६ ॥

विपुलोत्पताकधवलाश्मगृहामुरुहेमसालपरिवेषवतीम् ।
मणिवप्रदीप्रपरिखावलयां विमलान्तसंसरणरत्नभुवम् ॥ ६७ ॥

अगृहीतकालनियमां कुसुमैः सलिलैः सदोढकमलप्रणयाम् ।
विभवैः समन्तसुलभातिभरैरनपेक्षिताश्रयविशेषगुणाम् ॥ ६८ ॥

अधितोयराशि गिरिशृङ्गतटे घटितां महेन्द्रपुरवर्धकिना ।
भवमध्यभाजि गुणजालमयीं धियमात्मनीव[6] विभुनाऽहमिति[7] ॥ ६९ ॥

प्रतिवारि जातकनकाम्बुरुहां प्रतिशाखि मारकतमूलदलाम् ।
प्रतियातुधानभवनान्तलसत्परिमाण[9]शून्यपरिवार[10]चयाम् ॥ ७० ॥

निजकान्तिमग्नसकलप्रचयामवधानलक्षितललामच[11]याम् ।
असकृत्कराग्रपरिमृष्टदृशो ददृशुर्दशाननपुरीं हरयः ॥ ७१ ॥ कुलकम् ॥

---

१. A निशात । B तिशीत शुक्र २. BCD वसां ३. A मन ४. BC हि । ५. A धु । ६. B ने
७. BCD ताहसति । ८. D विभवान्त । ९. BCD णाम । १०. A प ११. BCD लवा ।

मणिरत्नसानुषु निवेशसहं सह तैर्वलीमुखचमूपतिभिः ।
अचलद्विभीषणमतेन शनैरचलं सुवेलमनु दाशरथिः ॥ ७२ ॥

विनिवेश्य तत्र निजमनुबलं सकलं प्रकाशितसमस्तगुहः ।
स्वयमंशुभिः कतिपयैरपरं गिरिमध्युवास दिवसाधिपतिः ॥ ७३ ॥

शिखरान्तगैरपि[1] सवेपथुभिः कपियूथपोद्गमर्मयो[2] मयुभिः ।
ददृशे दशाननपुरस्य[3] शिखिप्रतिपन्नमूल इव सोऽवनिभृत् ॥ ७४ ॥

असमोऽयमेव महिमाऽस्य गिरेः स जगाम यत्प्लवगसैन्यभरः ।
भृशमाचितैतदुपकण्ठतलः स्थलकाञ्चनाम्बुरुहखण्डतुलाम् ॥ ७५ ॥

शिखराणि मूलमुपकण्ठतटीरटवीश्च वीक्ष्य विततस्तुतिभिः ।
अपि शीलितामरनिकेतनगैः प्लवगैः सुवेलमनु संमुमुदे ॥ ७६ ॥

न्यविशन्त नीरधितटे बहवो बहवः सुवेलमवसन् परितः ।
बहवः प्रवेष्टुमनसोऽरिपुरीं हरयोऽन्तरा रुरुधिरे सचिवैः ॥ ७७ ॥

निपुणैर्विभीषणनिगूढचरैः स्वपुरोन्मुखौ दशमुखप्रणिधी ।
गलितातपेऽहनि कपिध्वजिनीकटकान्तनिर्गमपथे विधृतौ ॥ ७८ ॥

कपिभिः कृपारसदरिद्रकरैर्वपुषि प्रयुक्तबहुविप्रकृती ।
सदसि स्मितानुपदमूढघृणो भगवानभाषत सपत्नचरौ ॥ ७९ ॥

अभयं निषीदतममी गमिताः पृतनेश्वरैरसहना हरयः ।
प्रभुकारणादगणितात्ययोर्युवयोर्विधात्क इव नो महिमा ॥ ८० ॥

अवगाढ एष यदि सैन्यभरः प्रतिगम्यतां प्रतिभयं न पुनः ।
अबुधं प्रबोधयतमात्मपतिं निपतत्यनाथ इव किं विषमे ॥ ८१ ॥

अधुनाऽपि सोऽर्पयतु राजसुतां भजतां विभीषणमधीशमिव ।
सुखमस्तु मुक्तवति गर्वभरौ न शराः पतन्ति रघुवंशभुवाम् ॥ ८२ ॥

इति तौ विसृज्य दशकण्ठचरौ सचिवानुवाच विनतप्रभृतीन् ।
रणरागवेगचलितप्लवगे सदसि स्वधैर्यसदृशं स वचः ॥ ८३ ॥

---

१. BC शुगैरिव २. BC चयो । ३. A दुरन्त ४. BC भि । ५. A वलिभृत् BD निभृतः ।
६. A घनमारि । ७. CD तंश्रु । ८. BD हे । ९. A धिग ।

विजितोऽम्बुधिः परिगता नगरी रणसंशयस्थमधुनाऽभिमतम् ।
तदुपैतु कोऽपि दरदृष्टभयं द्विषमस्मदर्थमभिसांधयितुम् ॥ ८४ ॥

द्विपतोऽभियार्ति शतमेकचरः सुभटोऽनभीष्टनिजदेहतृणः ।
दयितप्रभूतपरिवारघनः प्रधनानलं विशति नैव सुधीः ॥ ८५ ॥

गुरुदूतवाक्यहतिभिर्भवतां स निशाचरश्चरणयोः पततु ।
स्पृहयामि हन्तुमधुना विशिखैर्न तमाततायिनमपि प्रणतम् ॥ ८६ ॥

प्रलघावपि द्विषति बुद्धिमतामभिकाम्यकृत्प्रशम एव गुणः ।
अधिकृत्य मृत्युरसिकानबुधानुदितो गुणान्तरविधिर्गुरुभिः ॥ ८७ ॥

शमबुद्धयः समरभारहराः शमिता कुतः प्रतिघवेगभृताम् ।
तदुशन्ति पौरुषमुदारधियः प्रथमं जयन्ति हृदि येन रुषम् ॥ ८८ ॥

अपि निश्चयाध्यवसितारिवधाः मृधमुत्तमाः परिहरन्ति पुरः ।
अधमास्तु भीतिरयमेव वदन्त्यनिबद्धभूरिभटवादनिभात् ॥ ८९ ॥

तदरेर्विचिन्तयत मन्त्रवशादवसानमप्रहरणोपहितम् ।
तदकौशलं विपुलरक्तनदां जनयन्ति येन वसुधामबुधाः ॥ ९० ॥

नियतं न तस्य नयतन्त्रमिदं मनसि प्रमादरसिकस्य रिपोः ।
प्लवगाः प्रसीदत नखाशनयः कृतकृत्यतां दधति संप्रति वः ॥ ९१ ॥

नयत क्षपामवहिताः परितस्त्यजतार्जवं प्लवगवीरगणाः ।
धृतशङ्कमाध्वमितरेतरमप्यरयः प्रपञ्चचतुराः सविधे ॥ ९२ ॥

उपरुध्यतामियमतीव पुरी कृतमाहवोत्सवविलोलतया ।
रिपुरेष दुर्विषहवामविधिस्त्वरतां रणाय मरणावधये ॥ ९३ ॥

क्रियतां पुरश्चरममूर्ध्वमधः प्रधनाय सैन्यरचनासु रयः ।
रजनीति नैव शयितव्यमिह च्छलयोधिनामनियतः समयः ॥ ९४ ॥

---

१. A ति । २. A कपि D वर ३. BCD स्तदर्पमतिसन्ध । ४. A तु । ५. A स । ६. A थम
७. A याद ८. A स ९. D सहा १०. A समता ११. A धामधर । D वामविधि ।

३०

रजनिरजनि रामस्येति जन्योक्तिभाजः सदसि सदंसिराजीवाविरासीत्तमःश्रीः ।
कपिशकपिशतास्योद्भूतमर्चिस्तदानीमरुणमरुणदुस्रैरोषधीनां सुवेलः ॥ ९५ ॥

---

प्रलम्भितः ख्यातिमसौ जगत्सु जयेतिहासो जनमेजयेन ।
एषोऽभिनन्दस्य महाप्रबन्धः क्षोणीभुजा भीमपराक्रमेण ॥

सुदृढविपुलगात्रः शत्रुकीटान्तकारी सततमुपचितायां संनिविष्टो दशायाम् ।
जगदमलमुदस्ताशेषदोषान्धकारं जनयति युवराजः पालवंशप्रदीपः ॥

इत्यभिनन्दकृतौ रामचरिते महाकाव्ये समुद्रलङ्घनो नाम षड्विंशः सर्गः ॥



१. A रणमरण C रुणमरुणदस्रै । २ A only reads this sloka

# सप्तविंशः सर्गः ॥

तदैव ताभ्यामथ रावणाय रामस्य निर्विघ्नजिताम्बुराशेः ।
स शक्तिसंपत्प्रचयश्चराभ्यामाश्चर्यगर्भैर्वचनैः शशंसे ॥ १ ॥

तस्यावलेपस्तिमितादरस्य पुरः पुरस्कारविवर्जिताभ्याम् ।
उद्योगमावेद्य रिपोस्तमुग्रं तूष्णींबभूवेऽतिचिराच्चराभ्याम् ॥ २ ॥

पप्रच्छ मिथ्यैव स मन्त्रिवृद्धान् दुर्बुद्धिजम्बालनदीनिविष्टः ।
अतिष्ठतं स्वात्मनिपातमिच्छन्न तेषु तीर्थेष्विव निर्मलेषु ॥ ३ ॥

ददर्श भूयः शुकमस्तशङ्कश्चख्यौ स रामस्य वचांसि तानि ।
भीतस्तपस्वीति वदन् सहासं स सारणेनाभिदधे यथार्थम् ॥ ४ ॥

जग्राह नासौ वचनं शुकस्य हितैषिणो नापि च सारणस्य ।
रुरोध रोषोच्चलितानमात्यान्नुनोद चाभीष्टनिषेधनित्यान् ॥ ५ ॥

विसृज्य वीरान्विमनाः स सायं प्रासादमारुह्य सह स्पशाभ्याम् ।
ददर्श तद्दाशरथेर्दशास्यः सैन्यं सुवेलस्य तटे निविष्टम् ॥ ६ ॥

आख्याश्च संख्याश्च समुद्भवश्च बलश्च बुद्धिश्च विशुद्धताश्च ।
स्थूलोच्चयानूचतुरुत्तमानां तौ रावणाय प्लवगेश्वराणाम् ॥ ७ ॥

ययौ न पर्यन्तमनीकिनीनामुद्वीक्षमाणः स रिपोस्तदानीम् ।
अवातरन्म्लानमुखप्रसादः प्रासादशृङ्गान्मनसाऽऽकुलेन ॥ ८ ॥

विसृज्य तौ रामशिरः स तूर्णं निर्मातुमादिश्य कलाविदग्धौन् ।
ययौ समीपं जनकात्मजायास्ततस्तदादर्शितहर्षवेगः ॥ ९ ॥

उवाच तां वारिनिधेरपारे नक्तं निविष्टस्य तवाद्य पत्युः ।
श्रुतं त्वया जानकि यन्मदीयैः प्रजङ्घसुप्तघ्नमुखैः प्रयुक्तम् ॥ १० ॥

पतिप्रभावस्थिरनिश्चयायाः संप्रत्ययार्थं दुहितुः स भूमेः ।
आनेतुमार्द्रं द्विषतः शिरस्तज्ज्वालामुखं किङ्करमादिदेश ॥ ११ ॥

१. BCDE अनिर्वृतः । २. D तप । ३. A दुःखान् C D दस्तान् ।

संरम्भमूहे निभृतं निकुम्भः कुम्भः क्षयाम्भोधरवज्जगर्ज ।
कालः कपीनां कलहा[1]ल्लज्जे ममज्ज मन्देऽपि कलौ कपाली ॥ २४ ॥

जिह्वोष्ठभेद्ये[2]षु भटाः कपीनां कपित्थमात्रेषु शिरस्सु कोऽर्थः । अत्र सप्तमी व्यवहारानुपातिनी न ।
अस्माभिरत्रेति हसन्नवादीद्दंष्ट्रायुधः संसदि वज्रदंष्ट्रः ॥ २५ ॥

नि[3]श्वासवाताः प्रसरन्त्यसङ्गं किमुद्यतैः शस्त्रशतैः शितैर्नः ।
आसन्नजन्यः प्लवगेषु गर्वादिति स्मितं व्याकृत वज्रमौलिः ॥ २६ ॥

ब्रह्मास्त्रकुल्यामिव तातपादैर्निपीय मुक्तामयमुतिपबामि ।
तां रामसेनामिति कौम्भकर्णिरुद्घूर्णघोरद्युमणो जगाद ॥ २७ ॥

मारीचपुत्राः सह ताटकेयैर्वैरान्तमाजग्मुरिवोल्लसन्तः ।
चिराद्यरंसीदिव शूर्पणख्याः स वक्त्रवैरूप्यकृतो विषादः ॥ २८ ॥

द्रुतं ममार्ज त्रिशिराः शरौघान् मर्मप्रहाराय सकामकारः ।
रामे स जातप्रतिघः पुरैव वधाज्जनस्थानजुषः सनाभ्नः ॥ २९ ॥

बबन्ध बन्धुत्वमपास्य दूरं त्रिभीषणायातिबलः पिपासाम् ।
जगाम संग्राममुखे नृसंख्यां निशम्य नैराश्यमिवातिकायः ॥ ३० ॥

विस्तीर्णपक्षो गगनं ततान श्येनः समागत्य कुतोऽप्यकस्मात् ।
लघ्वेवं लक्ष्मीमिव रामसेनां तामुद्धरिष्यन्नखराङ्कुशाग्रैः ॥ ३१ ॥

असंभवर्द्दिक्षु जगद्बुभुक्षोराहूतसर्वानुगमण्डलस्य ।
क्षपाचराणामपि कर्णशूलं गृध्रस्य कोलाहलमाततान ॥ ३२ ॥

कृत्स्नैव सोच्चैरथ पूरपूरि घूत्कारफूत्कारपुरोगमाभिः ।
विस्रम्भहन्तव्यरसोद्धुराभिर्मित्रघ्नसुप्तघ्नपताकिनीभिः ॥ ३३ ॥

इत्यादयो राक्षसयोधवर्याः पर्यायसंहारितसिद्धसङ्घाः ।
साहायकं भेजुरतीतसंख्याः प्रपन्नसंख्यस्य जगत्त्रयारेः ॥ ३४ ॥ संख्यं युद्धम्

ततः स्वहस्तोपहिताभिरुच्चैरान[11]र्च दूर्वादिभिरर्ह[12]णाभिः ।
यथोत्तरं स प्रभुरस्रपाणामुपेयुषः संसदि राक्षसेन्द्रान् ॥ ३५ ॥

१. BD कोलःकपीनाकलयन् । २. D भोज्ये । ३. A वि । ४. A हरन्त्य । ५. AC हृतकेतु । ६. BCD त्पू ७. AD ध्वेव लक्ष्या । ८. न्दि । ९. A गुध । १०. A वक्रू C बस्कार D ध्वाक्षारवस्कार । ११. A चर्चा १२. BCD रर्चना ।

अथैनमास्थानगतं शशास माता हितं माल्यवता सहैत्य ।
जहास तस्या अपि स प्रमादी वात्सल्यकल्लोलकलं वचस्तत् ॥ ३६ ॥

पुनः शनैः प्रेक्ष्य स माल्यवन्तमुवाच मातामहमाहवोत्कः ।
श्रुतं यदुक्तं दुहितुर्मुखेन स्वेनोच्यतामार्य मुखेन कार्यम् ॥ ३७ ॥

सहोदरौ मालिसुमालिनौ ते हतौ चतुर्बाहुभृताऽरिणेति ।
व्याप्त्याऽनयैवार्य किमेष नप्ता विशङ्क्यते विंशतिबाहुदण्डः ॥ ३८ ॥

आश्वासयन्नास्स्व मुहूर्तमेतामिहैव मातामह मातरं मे ।
स एष यावन्नरवानराणां निर्गत्य निर्ग्रन्थनमातनोति ॥ ३९ ॥

जगाद भीतां जननीं स भूयः किमम्ब कार्पण्यमिदं तवाद्य ।
तस्यैकवीरस्य सुमालिनस्त्वं रक्षःपतेस्तार्क्ष्यजितस्तनूजा ॥ ४० ॥

वीरानलैकारणितामपीत्थमुपेतया किं जननि त्वयौजः ।
पितुः कुलस्योज्झितमादरेण गृहीतमेतत्पतिवंशदैन्यम् ॥ ४१ ॥

न पक्षपातः स्वपितामहे मे[1] मातर्नमोऽस्तु प्रपितामहाय[2] ।
चराचरेऽस्मिन् प्रथमं प्रतीतो[3] हेतिप्रकर्षादिव यैः[4] प्रहेतिः ॥ ४२ ॥

स माल्यवन्तं पुनरप्यवादीद्विलोक्य वैलक्ष्यमिवापनेष्यन् ।
विवर्तते विप्रियतापराधस्तथाविधानामपि मातृबन्धौ ॥ ४३ ॥

मान्योऽसि मातामह शाधि संयत्प्रकारमेवं प्रयतः शृणोमि ।
तवापि नाकर्णयतीतरत्तु कर्णावली दुर्ललिता ममेयम् ॥ ४४ ॥

किं वृद्धभावाद्विकृतिस्तवेयं यदुज्झिताऽऽत्मप्रकृतिः प्रदीप्ता ।
स्थिताऽथवा मय्यधुनाऽपि डिम्भसंभावना नप्तरि पङ्क्तिवक्त्रे ॥ ४५ ॥

प्रविश्यतां मातरयं नमामि प्रसीद पुत्रेषु जयोद्धुरेषु ।
मोदस्व मातामह मद्भुजानां वीर्याद्भुतं वैरिषु वीक्षमाणः ॥ ४६ ॥

आयुः श्रियं च द्वितयं दशास्यः तयोर्निभेनात्मगतं विसृज्य ।
द्विषामिवाह्वाननिमित्तमाराद्द्वारेषु रक्षोनिवहान्न्ययुङ्क्त ॥ ४७ ॥

---

१. D न । २. A मस्त्वत्र । ३. C यो । ४. A यत्र ५. BCD वावहि ।

द्वारं प्रहस्तः प्रपपात पूर्वमपूर्वशाखामृगमांसगृध्नुः ।
नाचिन्तयत्तामनिमित्तवृष्टिं हतो जयाशामृगतृष्णिकाभिः ॥ ४८ ॥

संरम्भसंभेदविशेषमूर्छत्परस्परास्फालमहारवाभ्याम् ।
कवाटता द्वारि च दक्षिणस्यामूहे महापार्श्वमहोदराभ्याम् ॥ ४९ ॥

आत्मा सुताख्योऽथ जगत्त्रयारेः पुरन्दरैकारिरिति प्रतीतः ।
अभ्यस्तमायास्त्ररहस्यगुप्तिर्गोप्ताऽभवत्पश्चिमगोपुरस्य ॥ ५० ॥

स्वीकृत्य वैकृत्यविडम्बनानि बलानि वालेययुजा रथेन ।
द्वारं ययावुत्तरमात्मनैव संप्राप्तनिष्ठादिवसो दशास्यः ॥ ५१ ॥

इत्यप्रमादीव दिशश्चतस्त्रः चक्रे चमूरोपितवाटकृत्याः ।
न्यवीविशद्दृष्टविशिष्टसारं वीरं विरूपाक्षमनीकमध्ये ॥ ५२ ॥

सर्वत्र सर्वायुधपाणयस्ते तस्थुस्तथा रावणमूलयोधाः ।
भयादिवोड्डीय यथाऽऽशु भेजुर्विभीषणाशामवसर्प[3]काकाः ॥ ५३ ॥

ततः स सैन्येन सडम्बरोऽन्तर्द्विषद्बलानामवलोक्यते स्म ।
मृत्योरपि त्रासकरः सलीलं सुवेलमारुह्य रघूद्वहेन ॥ ५४ ॥

अवातरद्धीरमथाद्रिशृङ्गाद्बलव्यवस्थानमरेः प्रशंसन् ।
ददौ दृशं चात्मचमूपतीन्द्रान् प्रति प्रतिव्यूहविधानहेतोः ॥ ५५ ॥

प्राच्यां प्रहस्ताभिमुखं न्ययुङ्क्त नीलं नलादिप्लवगेन्द्रमुख्यम् ।
भेत्तुं[6] महापार्श्वमहोदरौ च स वालिपुत्रं दिशि दक्षिणस्याम् ॥ ५६ ॥

सामीरणिं रावणिसंमुखीनं विधाय विश्वासमसाविवाय ।
तमात्मनैवावरजद्वितीयः पतिं प्रतीयेष निशाचराणाम् ॥ ५७ ॥

विभीषणर्क्षेशवलीमुखेन्द्राननीकिनीनां निदधौ स मध्ये ।
युद्धाय सञ्जातरयान्निरुध्य क्षणं पुरोगानिति चादिदेश ॥ ५८ ॥

बलानि विक्रान्तिरसोऽयमास्तामपश्चिमेनाशु पुनर्नयेन ।
विचिन्त्यतां विद्विषि कार्यसिद्धिराक्रान्तसंसत्सयोऽयमेव ॥ ५९ ॥

---

१. B D नगर C भुवन २. C छुर्विभीषणस्याम । ३. A पसर्प्य । ४. D रेण ५. C नून ६. C त्रातुं D तन्त्रं ७. BCD सौम । ८. A सन्धेःस ।

मित्राणि बन्धूननुजीविसार्थानात्मानमर्थान्दयितं यशश्च ।
सन्देहदोलामधिरोपयन्ति न साहसाद्व्ययधना महान्तः ॥ ६० ॥

साम्नैव पूर्वं विहरन्ति शूराः क्रूरा भवन्ति व्यतिरेकपक्षे ।
द्विषत्सु दौर्बल्यनिगूहनाय क्लीवाः पुरैवायुधमुद्धिरन्ति ॥ ६१ ॥

न प्राणिहिंसां सुधियश्चरन्ति सत्सु श्रियः सिद्धिपथान्तरेषु ।
यदा गतिर्नास्त्यपरा परेभ्यः संख्यावतां संख्यरसस्तदानीम् ॥ ६२ ॥

हते द्विषि द्राग्विरमेन्न मन्युः शनैः कृतं तस्य सुखाय तेजः ।
निष्पिष्यतां तत्क्रमशः प्लवङ्गाः शृङ्गं नयग्रावणि रावणस्य ॥ ६३ ॥

तमङ्गदो वालिनि जातसख्यं हितानि गत्वाऽऽशु तथाऽनुशास्तु ।
प्रत्यर्प्य सीतामुपहृत्य राज्यं यथा स वः पादरजांसि मार्ष्टि ॥ ६४ ॥

निर्यातु वा निर्जितलोकपालः श्रुत्वा कटूनि प्रथमं स एव ।
ततस्त्वतः स्वस्थविहारशोभाः क्षोभातुरः कैः पुरतो रिपुर्वः ॥ ६५ ॥

अधैर्यदोषं परिहर्तुमार्यास्त्वयं क्रमो नत्वनुकम्पयाऽरेः ।
द्विषद्वधेनापि न याति लोपमधैर्यदोषप्रभवोऽपवादः ॥ ६६ ॥

नात्यर्थमस्मद्बहुमानयोगादुद्वेजनीयः परुषैः पुरैव ।
त्वयाऽङ्गद क्रोधरयं स रुध्वा सुहृत्सुतेनेव हितानि वाच्यः ॥ ६७ ॥

स्मरन् पितुस्ते नियतं[९] दशास्यस्तं[१०]वामिति श्रोष्यति सूनृतानि ।
तद्गम्यतामङ्गद मङ्गलानि मरुद्गणस्ते मुदितस्तनोतु ॥ ६८ ॥

विपर्ययेऽपि स्व[११]मुदीर्य वीर्यमार्येषु नः संभृतसाधुवादः ।
प्रत्याव्रज द्रागिति गीयतां ते दौत्यावदानं त्रिदशाङ्गनाभिः ॥ ६९ ॥

स्वयं न जातु प्रण[१२]यीव्लटन्ते हठेन सन्देहपथं व्रजन्ति ।
उपेक्षिताश्चोपनयन्त्यकीर्तिं स्वार्थाः परेप्यूत्तमदूतसाध्याः ॥ ७० ॥

इतीरयित्वा स बुधानपश्यत्तैस्तुष्टुवे कण्टकितैर्वपुर्भिः ।
ततोऽचलद्वालिसुतः स्वयूथ्यान् संस्थाप्य तत्रैव महस्सहायः ॥ ७१ ॥

---

१. A स्तरन्ति । २. A द्विप ३. BCD प्राग्वि. ४. BCD निज ५ B बद्ध । ६. BCD भः क्षोभान्तरंहाः । ७. D रिपुतोऽरिपू । ८. BC यैस्त्व । D र्याः ९. A तिं । १०. A दो । ११. BD विश्व । १२. BCD तत्प्रणयाध ।

युवा स वज्रांशुविशालमौलिर्ज्वलन्नुभाभ्यां मणिकुण्डलाभ्याम्।
विवेश विद्याधरवर्त्मनाऽरेः पुरीं निरुद्धावनिलोकमार्गाम्॥ ७२॥

अज्ञातपातैः प्रतिहारपालैरुरःस्थलेन प्रणुदन् प्रवीरान्।
सभासदां संजनितेन्द्रशङ्को लङ्काधिपस्य प्रसभं पुरोऽभूत्॥ ७३॥

ततः स रेजेऽरुणवक्त्रबिम्बः कदम्बकेषु क्षणदाचराणाम्।
आकस्मिकालोकभयद्रुतेषु तमस्सु पूषेव निशावसाने॥ ७४॥

गतः स दग्ध्वा नगरीं हनूमानस्यापि शिष्योन्वयमेव कोऽपि।
इत्यूचुरास्यैः परिशोषवद्भिः तमीक्षमाणाः क्षणदाचरेन्द्राः॥ ७५॥

स्वयं समाख्याय स वालिसूनुः सन्त्राससूकेषु निशाचरेषु।
मुहूर्तमातिथ्यविनीतमूर्तौ जगद्द्विषि द्वेषमिवोत्ससर्ज॥ ७६॥

पितृवधवैरविमोक्षनिमित्तं नियतमुपागतवानयमस्मान्।
वितथवितर्कजडे हृदि हृष्यन्निति जगदन्तकरः स जगाद॥ ७७॥

अयमपरोऽस्मदधीशदुरन्तः किमपि करिष्यति वानरवर्ष्मा।
सचिवगणः क्षणदाचरभर्तुः स्फुटमिति चेतसि वाचमुवाच॥ ७८॥

---

नाश्चर्यमावहति कस्य चराचरेऽस्मिन् श्रीहारवर्षनृपचन्द्रमसः प्रभावः।
येनानिशं ललितकोमलकाव्यमूर्तेः सृष्टोऽभिनन्दकुमुदस्य महाविकासः॥

ते मेघमुक्तमपि न स्तुवते सुधांशुं तेषां मनो न रमते मकरध्वजेऽपि।
सर्वारिवीरविजयप्रसृतप्रसत्तिः श्रीहारवर्षजगतीपतिरीक्षितो यैः॥

---

इत्यभिनन्दकृतौ रामचरिते महाकाव्ये अङ्गददौत्यागमनो नाम सप्तविंशतितमः सर्गः॥



---

१. BD नवांशुवक्त्रां C उदंशु। २. A यात्रः। ३. A वशेषा वयमे। ४. A only reads this sloka. ५. BCDE read this sloka.

# अष्टाविंशः सर्गः

प्रजहर्ष दशग्रीवः सामग्रीमाकलय्य सः ।
वालिपुत्रः प्रविष्टोऽयमिति चेतसि चिन्तयन् ॥ १ ॥

स तं वीक्ष्य प्रमुदितो मेने वालिनमागतम् ।
पितरं पुत्रनामानमाहुः सत्यं मनीषिणः ॥ २ ॥

अहो धैर्यं कपेरस्य यापितो यदियच्चिरम् ।
तापसापशदोऽनेन पितुर्विस्रम्भघातकः ॥ ३ ॥

पितृद्विषः पितृव्यस्य व्यक्तं व्युषितमत्सरः ।
छिद्रमासाद्य निष्क्रान्तः कालज्ञो वालिनन्दनः ॥ ४ ॥

यद्येवं जितमेतेन मतिमानयमर्भकः ।
गताः स्म सौहृदानृण्यं शौर्यशालिनि वालिनि ॥ ५ ॥

इति वात्सल्यविच्छिन्नविसदृग्भावविक्रियः ।
मित्रपुत्रादरेणैव तं प्रतीयेष रावणः ॥ ६ ॥

रामपादरजोभक्तित्यक्तरावणसौहृदः ।
कपिर्दिदीपे कोपेन कौणपानवलोकयन् ॥ ७ ॥

विससर्ज तमावेगं[2] वक्ष्यन्[3] सन्देशमीशितुः ।
प्रवर्तते हि विशदा हृदि स्वच्छे सरस्वती ॥ ८ ॥

वात्सल्यवेगोपहतं भेजे रावणसंसदि ।
वालिस्मृतिसबाष्पायां पितुरासनमङ्गदः ॥ ९ ॥

विस्रब्धमथ विश्रम्य संमुखीनमुखावालिम् ।
सखेव सुखसंप्रश्नैः पौलस्त्यं समबोधयत् ॥ १० ॥

प्रयुज्य समुदाचारं स दूतोचितमङ्गदः ।
उवाच वाचं विनयस्वीकारस्वादुविक्रियाम्[4] ॥ ११ ॥

१. BC कार २. BC शं ३. BC क्तुं ४. BC क्रम.

अहं दौत्येन रामस्य रावण त्वामुपस्थितः[1] ।
शृणु श्रवणपेयानि तद्वाक्यानि मुखेन मे ॥ १२ ॥

प्राप्तास्त्वद्द्वारपर्यन्तमक्षौहिण्यो वनौकसाम्[2] ।
अभ्युत्थानत्वरा[3]शून्यः किं रावण भवानयम् ॥ १३ ॥

अनागतानागमय पृच्छापृष्टान्विपाश्रितः ।
चिन्तयाचिन्तितं भूयो दत्तस्ते रावण क्षणः ॥ १४ ॥

स्वैरमह्नाय मन्त्रेण तन्त्रेण च यदिच्छसि ।
कुरु तत्सर्वमस्मासु पश्चाद्द्रक्ष्य[4]सि नः क्रमम् ॥ १५ ॥

विलोक्य चेदातिभरं[5] गतः कृपणतामसि ।
ब्रूहि द्रविणमात्मीयं सदृशं प्रार्थ्यसे तत[6]ः ॥ १६ ॥

न संभृतं सैन्यहविर्न भृतो[7] दक्षिणादरः ।
परमार्थाय वैराग्निं किमारब्धो रणाध्वरः ॥ १७ ॥

आत्त[8]मर्पय[9] सौभ्रात्रं विहृणुष्व विभीषणे ।
आकारगुप्तैर्न फलं शिथिल[10]स्ते रणादरः ॥ १८ ॥

शमः समधिके शत्रौ पाण्डित्यं न भयं विदुः ।
को विक्रमः पतङ्गस्य पततः प्रततेऽनले ॥ १९ ॥

पुलस्त्यपौत्रस्य तमस्तत्र नैवोपपद्यते[11] ।
सापि मन्ये परीणामं गता ते निकषा नि[12]शा ॥ २० ॥

प्रकृत्यमित्रा न वयं न च दूरान्त[13]रौकसः ।
मूलमुत्खन वैरस्य शमस्य फलमाप्नुहि ॥ २१ ॥

प्रतापम्लापनो[14]ऽन्तर्धिरयमद्य न केवलम् ।
अशुक्लकारणारब्धप्राणत्यागोऽपि ते नयः[15] ॥ २२ ॥

चिरमास्स्व विनीतात्मा किमनर्थेषु धावसि ।
न त्वामुच्छेत्तुमिच्छामश्छिन्ने कारणकानने ॥ २३ ॥

१. B पाग. २. BCD दिवौकसः । ३. B क्रिया ४. BCD द्रा ५. तरं BD ६. BD प्यमेव तत् । ७. C दत्तो । D ह्र । ८. CD दा ९. BD न्त । १०. शिशिर ११. BC युज्य । १२. A वि । १३. AC तवदूरी । १४. CD स्तापनो १५. A तमः ।

न नः क्रोधरयः कश्चिदौचित्यादागता वयम् ।
दूरमुत्सार्य मात्सर्यं न्याय्यं त्वमपि चिन्तय ॥ २४ ॥

पौलस्त्यस्य शमोद्गारमुदारं शृणवाम[1] ते ।
पश्याम नैकषेयस्य निकषं प्लवगेषु वा ॥ २५ ॥

येनोत्कृत्ताः स्वमूर्धानो रुद्राद्रिर्येन चोद्धृतः ।
दशास्य दर्शयास्मासु साहसं तद्बलं[2] च तत् ॥ २६ ॥

धर्मः स्वमूर्ध्नां कदनं केन ते गुरुणोदितः ।
क्रौर्यं त्वया तदभ्यस्तं छेत्तुं क्व दश दिक्पतीन् ॥ २७ ॥

धिक् त्वामेकं नृशंसेषु येनात्मशिरसां त्वया ।
अनुभूतमनार्येण पर्यायच्छेदवैशसम् ॥ २८ ॥

देवा दयौ[3]जडतया बलिना येन केनचित् ।
यत्र तत्रापि तुष्यन्ति[4] न पश्यन्ति पुरो[5]ऽत्ययम् ॥ २९ ॥

उन्मूलनाय मरुतां मर्त्यानामथ भोगिनाम् ।
यत्ते शम्भुर्वरं तुष्टो ददौ दुष्क्रियया तया ॥ ३० ॥

नातिसृष्टो वरस्तुभ्यं तुष्टेन परमेष्ठिना ।
विदग्धेन वधोपायः स तेन तव निर्मितः ॥ ३१ ॥

देवद्विजातिक्रमणात् त्वयैनः संचितं तथा ।
यथा नाथेन तेनापि नियतं नावलम्ब्यसे[6] ॥ ३२ ॥

बहुश्रमः परजयः किमकारणमादृतः ।
स चिन्त्यतामात्मजयो येन भूयो न खिद्यसे ॥ ३३ ॥

ओतुनेवात्मतोकानि[7] त्वया तृप्तिमविन्दता ।
खादितान्यविनीतेन कृत्वा तानि तपांस्यपि ॥ ३४ ॥

प्रदीप्ताः पापशिखिनो निर्वाणास्ते तपोऽग्नयः ।
मग्नोऽस्यापदि निम्नायां मुदितास्तव शत्रवः ॥ ३५ ॥

---

१. BCD णुवामतेः । २. A द्र । ३. A यो । ४. A न्ततोऽपि न ५. B परा ६. BC लोक्य ।
७. C ते पुरेवात्मनस्ता । D नेतुरेवात्मनस्ता ।

वैधेयस्येव भवतः किमद्यापीयमज्ञता ।
चतुर्दश दशग्रीव विद्यास्थानानि वेत्सि चेत् ॥ ३६ ॥

कः शक्नोति समाहर्तुमियतः कपियूथपान् ।
तवात्रातिकटोः पाकादन्यत्राहितं[1]कर्मणाम् ॥ ३७ ॥

उत्तारिता राशिमपामपारमचिरादमी ।
तवैव कर्मणा तेन केवलेन वलीमुखाः ॥ ३८ ॥

यां[2]स्त्वदीया भजन्ति स्म नोद्यानालीः शिलीमुखाः ।
तास्त्वत्कर्मबलादद्य विलुम्पन्ति वलीमुखाः ॥ ३९ ॥

यासु नार्ककरैः क्रान्तं त्वत्पुरप्रान्तभूमिषु ।
निविष्टमद्य विस्रब्धं तास्वेवार्कसुतानुगैः[3] ॥ ४० ॥

अहो महाश्चर्यबलाद्बलवत्कर्म कर्मणः[4] ।
यत्त्वं कर्मबलोदीर्णः पतितः कर्मणो बलात् ॥ ४१ ॥

अनरण्यस्य राजर्षेर्दीक्षान्तो न समीक्षितः ।
येन तस्य तवेदानीं कैवेयं कालया[5]पना ॥ ४२ ॥

यत्सत्यं मैथिलीहेतोर्न तथा प्रार्थ्यसेऽधुना ।
य[6]था नस्तस्य पूर्वस्य करणेन महीपतेः ॥ ४३ ॥

नियतिस्तस्य नृपतेरीदृशी वा करोषि किम् ।
अस्मासु विनयेनैव तदागः क्षालयाधुना ॥ ४४ ॥

किमन्यद्देहि वैदेहीमभिषिञ्च विभीषणम् ।
कपीन् प्रणम रामस्ते न प्रपन्नाय कुप्यति ॥ ४५ ॥

हितैषिणः सुहृत्सूनोर्वचनेन ममाप्यसौ ।
सर्वस्वेनार्च्यतां रामो भगवान् भवनागतः ॥ ४६ ॥

कुलवृद्धेषु तिष्ठस्व[7] हितं शृणु शिशोरपि ।
गता इव दशग्रीव ते तवो[8]द्यमवासराः ॥ ४७ ॥

---

१. AD त्रहत । २. BCDE omit this sloka ३. B करान्वयैः ४. A कर्मि । ५. D हानयात । ६. CDE omit these three lines. ७. A त्सु । ८. CDE न तवोद्यम । B द्यान ।

अद्य सर्वास्तव दिशः संनद्धकपिकण्टकाः[1] ।
अयं[2] विद्धोऽसि विचलन्विमले तिष्ठ वर्त्मनि ॥ ४८ ॥

कृतं न साधु पौलस्त्य निरस्तो यद्विभीषणः ।
प्रविष्टः सङ्कटं मोहात् कमालम्ब्य गमिष्यसि ॥ ४९ ॥

हितं हितं वदन्त्यार्याः कटुवाक् शास्ति यः शुभम् ।
स्तावकस्तावकः सर्वो रिपुसङ्घः सुहृद्ध्रुवः[3] ॥ ५० ॥

ये नमन्त्यक्रमाद्दूरं प्रभोरुन्मार्गवर्तिनः ।
ते मन्त्रिणस्तृणानीव दुरन्तावटमूर्धनि ॥ ५१ ॥

दूरमुत्थापितो लक्ष्म्या नैव त्वं तलमीक्षसे ।
दुर्लभास्तव ते नूनं ये बुद्ध्या नमिताननाः ॥ ५२ ॥

तातस्य वेत्सि मे वीर्यमनुजस्तस्य नान्यथा ।
सुग्रीवोऽपि दशग्रीव तव सौहृदमर्हति ॥ ५३ ॥

एकवानरमात्रस्य वीक्षितं बलमानिलेः ।
लङ्केश क इवाद्यापि संघर्षस्ते हरीश्वरैः ॥ ५४ ॥

सीतामर्पय कार्पण्यं किमिव त्रिजगत्पतौ ।
न्यस्य राज्यं कृती भूयाः स्वभ्रातरि विभीषणे ॥ ५५ ॥

अशान्तसुखतृष्णस्य देवदेवः स एव ते ।
दास्यत्यप्राकृतान् भोगान् भक्तिसाध्यैः[4] प्रसाधितः ॥ ५६ ॥

उक्त्वेति रामसन्देशमङ्गदः स्वमतं च तत् ।
क्षणं तत्रास्त निष्कम्पः कम्पयन्निव तां सभाम् ॥ ५७ ॥

अहो कपति पौलस्त्यं रामो रम्याभिरुक्तिभिः ।
शीतलामलधाराभिरद्भिर्दावमिवाम्बुदः ॥ ५८ ॥

भूत्वा यद्वालि[5]पुत्रेण रावणः प्रतिबोध्यते ।
तद्बोधितोऽङ्गदेनापि प्रमाणं परतो विधिः ॥ ५९ ॥

---

१. BD संकटाः । २. BC पि । ३. BCD ङ्घसमुद्भवः । E सुहृद्भवः । ४. A क्त्याशाक्य ।
५. A पवालि D यद्वायु ।

नात्येष्यति वचो नूनं वालिसूनोर्दशाननः ।
मैत्रीति[1] सेतुरुत्तुङ्गो न दृप्तैरपि लङ्घ्यते ॥ ६० ॥

दर्शिताः कार्यगतयः सर्वा एव निरत्ययाः ।
अवसाने दर्पोऽप्युक्तो दुरुक्तेन विनाऽमुना ॥ ६१ ॥

क्रियया[2]ऽऽनिलिना पूर्वं वयमत्र चिरं जिताः ।
वाचा वालिसुतेनेत्थमिदानीमतिरञ्जिताः ॥ ६२ ॥

गाम्भीर्यस्थगितं तेजः किमप्यस्योज्जिहासति ।
प्रत्युक्तो रावणेनायं न विद्मः किं करिष्यति ॥ ६३ ॥

एकैकशः स्फुटं[3] सृष्टाः शठैरस्मत्पुराकृतैः ।
अमी लङ्कानिकेतानामातङ्काय वलीमुखाः ॥ ६४ ॥

निर्दह्य पुरमस्माकमञ्जनायाः सुतो गतः ।
तारायास्तनयः क्रुद्धो न शेषं स्थापयिष्यति ॥ ६५ ॥

शोणिताक्षविरूपाक्षधूम्राक्षप्रभृतिष्वपि[4] ।
मन्त्रिष्वन्तःप्ररूढार्तिचिन्तानिष्प्रतिपत्तिषु ॥ ६६ ॥

महोदरमहापार्श्वसुपार्श्वप्रमुखेषु च ।
महावीरेषु माहात्म्यसंवादमुदितेष्वपि ॥ ६७ ॥

कपालमालिस्रज्ज्वालिवि[5] न्मालिमुखेषु च ।
माध्यस्थ्यमिव काकुत्स्थे यातेषूत्तमयातुषु ॥ ६८ ॥

धन्यो दाशरथिर्यस्य दूतः सूनृतवागसौ ।
इति भूयः प्रशंसत्सु नीचैर्नीचतमेष्वपि ॥ ६९ ॥

भजतीवार्जवं वक्रे शठे शाठ्यमिवोज्झति ।
ज्वालामुखसमूहे च सौमुख्यमिव गच्छति ॥ ७० ॥

तैर्वालिसुतसाधूक्तैः सिक्तेऽन्तः शीकरैरिव ।
अग्निकेतौ निराकूते निर्वाण इव तिष्ठति ॥ ७१ ॥

१. BC मन्त्री । २. D कृप । ३. BCD कशो नियतं । ४. A ष्विति । ५. BC तिप्रगूढान्ताश्चि ।

शुके सन्धानसङ्कल्पं पुनः स्पृशति चेतसा ।
सारणे रावणत्रासात्तूष्णीं स्तुवति राघवम् ॥ ७२ ॥

अहो माहात्म्यपिशुनं वचनं विपिनौकसः ।
इतीन्द्रजिति जातास्थे दूतसन्दत्तचक्षुषि ॥ ७३ ॥

कपेस्तेनावलेपेन प्राप्ते कम्पमकम्पने ।
अतिकायेऽतिमाये च मुह्यतीवारिसंपदा ॥ ७४ ॥

विकृतेष्विव कृत्येषु भृत्येषु व्यथितेष्विवं ।
संक्रान्तेष्विव कुल्येषु मौलेषु चलितेष्विव ॥ ७५ ॥

चालितेष्विव चेतस्सु दस्यूनामपि सर्वतः ।
स्तुवत्सु बालवृद्धेषु बालिनस्तनयं शनैः ॥ ७६ ॥

उद्गिरत्सु दशग्रीवनिन्दां वैतालिवन्दिषु ।
स्वैरोक्तारिमशंसायां ब्रह्मराक्षससंसदि ॥ ७७ ॥

विधूय मूर्ध्नः संघट्टस्वनत्काञ्चनकुण्डलान् ।
क्षणं निगृह्य कण्ठानामन्तरेव रयं रुषः ॥ ७८ ॥

निविश्य मणिपर्यङ्कपर्यन्तेऽवनिचुम्बिनि ।
कृत्वैकं मणिपीठाग्रादङ्घ्रिमूरुनिवेशिनम् ॥ ७९ ॥

अकृत्वा सकृदप्यारात् कर्णेषु हितभाषितम् ।
दूरेऽपि मुहुरामन्त्र्य विमन्त्रोपनयोद्धुरान् ॥ ८० ॥

उरःस्थलप्रसारेण प्रणुदन् गगनं पुरः ।
उपविश्य द्विपः पश्चादुच्छ्वासिनि महासने ॥ ८१ ॥

संप्रेक्ष्य राक्षसीः क्षिप्रमशोकवनिकागताः ।
निवार्य नाकवन्दीनामाक्रन्दरवमुच्चकैः ॥ ८२ ॥

विष्वग्वमन्निव विषं विंशत्या रावणो दृशाम् ।
प्रत्यभाषत पीयूषस्वादुवादिनमङ्गदम् ॥ ८३ ॥ कुलकम् ॥

१. BCD Omit two lines २. C स्वशाना ।

अहो विदग्धः सुग्रीवो यत्त्वामित्थमचेतसम् ।
अङ्कुरं वालिनोऽस्माभिरुन्मूलयितुमिच्छति ॥ ८४

अस्मासु वालिपुत्रोऽहमिति वादी न लज्जसे ।
दास्यं दाशरथावित्थं गतः परमविद्विषि ॥ ८५ ॥

त्वया ह्यङ्गद पुत्रेण मित्रं मे दिवि नन्दति ।
पितृव्ये पितृवैरस्य शक्त्यैकान्त्यमुपेयुषि ॥ ८६ ॥

युक्तोऽरिसंश्रयः पूर्वं शिशोरशरणस्य ते ।
सनाथोऽस्यधुनाऽस्माभिः प्रतिप्रहर वैरिणि ॥ ८७ ॥

तारया किमपि स्त्रीत्वात् कृतं नूनमसांप्रतम् ।
यत्तस्माज्जठराज्जाल्म जातस्त्वमरिनन्दनः ॥ ८८ ॥

जाने वाली न रामेण न सुग्रीवेण केवलम् ।
तयोस्त्वयाऽऽत्तदास्येन दस्युना विनिपातितः ॥ ८९ ॥

अस्मत्सङ्गसमुद्भूतं निकृष्टनरसंश्रयात् ।
त्वया विलुप्तं जगति यशो बालिश वालिनः ॥ ९० ॥

निगीर्णः कर्णपरुषं भाषमाणः पुरः पुरा ।
सुहृद्भिर्विधृतेनापि दूतो धनपतेर्मया ॥ ९१ ॥

मुक्तोऽसि वालिनः सख्याद्गच्छ तिष्ठन्न जीवसि ।
कुतः प्रतिनिविष्टेषु मुहूर्तमपि नः क्षमा ॥ ९२ ॥

गिरस्ते रामदूतस्य श्रुताः परिषदाऽनया ।
इदं ब्रूहि वयं भूत्वा तापसं कपिसंसदि ॥ ९३ ॥

अकालहरणादेव किं काकुत्स्थ विकत्थसे ।
नन्वानीतः प्रसह्य त्वं कृतान्तेनास्मदन्तिकम् ॥ ९४ ॥

सालाग्रसंप्राप्तमपि क्षुद्रभावादनास्थया ।
शलभोत्थमिवास्माभिः कपियूथमुपेक्षितम् ॥ ९५ ॥ शलभानामुत्थ उत्थानम् इत्यर्थे क्लीबत्वे न युक्तम् ।

१. A भक्त्येवात्तमुपेयुषि । २. A लिनि । ३. A सुग्रीवेणच । ४. A हु । ५. A गत्वा ।
६. A त्वमन्तके । ७. A पात ।

३१

न जानीमो निहीनानि वक्तुमङ्गद रामवत् ।
गच्छ संनाहयानीकमनीकमित एति नः ॥ ९६ ॥

सर्वसेनाङ्गविकलं सर्वसेनाङ्गशालिनः ।
यत्सत्यं वानरबलं जेतुं जातत्रपा वयम् ॥ ९७ ॥

नूनमालोक्य नः सैन्यसंनाहं सन्नसाहसः ।
आत्तार्तकाकुः काकुत्स्थः सत्यनामा भविष्यति ॥ ९८ ॥

नाद्याप्युज्झति सीताशां हताशः किमसौ मयि ।
मरुपृष्ठ इवोदन्यामासन्नमरणो मृगः ॥ ९९ ॥

मैथिलीत्यसवस्तस्य पूर्वमेव हृता मया ।
परं भविष्यत्ययशो ममाद्य मृतमारणात् ॥ १०० ॥

स चेदिच्छति सन्धानमाच्छिद्यानुजसन्ततेः ।
सीतावरभवास्तिस्रो विश्राणयतु नस्तदा ॥ १०१ ॥

विभीषणं विशस्यादौ सुग्रीवं चाग्रजद्विपम् ।
बलं विभजतु क्षिप्रं रक्षोभ्यः स जिजीविषुः ॥ १०२ ॥

यातु यातुप्रवीराणां प्रणम्य चरणानसौ ।
नरो न रोषप्रकरं सोढुमिन्द्रजितः क्षमः ॥ १०३ ॥

न चेदत्युग्रमहसा कपिसङ्घस्तरङ्गवान् ।
अगस्त्येनेव जलधिः पौलस्त्येनाद्य पीयते ॥ १०४ ॥

प्रजज्वाल ततः कोपात्कपिः कपिशकेसरः ।
उत्करालशिखाराजिराज्यसेकादिवानलः ॥ १०५ ॥

उज्जगाम जगद्दीपप्रदीप्ताननमण्डलः ।
हेमाचलशिरस्तुङ्गादङ्गदः काञ्चनासनात् ॥ १०६ ॥

तमुज्जिहानमालोक्य चकितास्ते निशाचराः ।
छन्नं वानरवेषेण देवेशमिव मेनिरे ॥ १०७ ॥

१. BC वीरे ।

मुष्टिमुद्यतमाहत्य विजित्य रभसं रुषः ।
उपसृत्य पुनः स्तुत्वा पौलस्त्यं कपिरब्रवीत् ॥ १०८ ॥

नास्ति मे राघवादेशस्त्वां निहन्तुमनन्तरम् ।
एष गच्छामि निर्गच्छ प्रतीच्छ कपिवाहिनीः ॥ १०९ ॥

दूरं निमज्ज पौलस्त्य काकुत्स्थशरसिन्धुषु ।
आचूडमघपङ्कस्य यदि क्षालनमिच्छसि ॥ ११० ॥

इति क्षोभचलः पद्भ्यां पश्यत्सु पिशिताशिषु ।
तमुच्चशृङ्गं प्रासादमपिनट् पिठरं यथा ॥ १११ ॥

आदिदेश दशग्रीवः सुभटान्निकटस्थितान् ।
आजन्मसंस्तुतहठो हठेनादातुमङ्गदम् ॥ ११२ ॥

उत्पपात स तैः सार्धं निष्पपात च निर्दयम् ।
विससर्ज विसृष्टामून् ललतः स्खलतश्च तान् ॥ ११३ ॥

निर्यूहान्निलयानट्टान्निष्कुटान्ससभाश्रयान् ।
निर्जगाम भुजैः भञ्जन् प्रभिन्न इव कुञ्जरः ॥ ११४ ॥

प्रासादं च प्रसादं च भङ्क्त्वा वालिसुते गते ।
अशाद्बहिः स्थितः क्रुद्धो बलाध्यक्षान्दशाननः ॥ ११५ ॥

संनादयत संनाहतूर्याणि तुमुलारवम् ।
संपातयत सैन्यानि दैन्यमित्यक्रमोऽधुना ॥ ११६ ॥

संनद्धं रथपादातमिभाश्वं कश्चिदागतम् ।
विलुप्यतां रामबलं बलरेणुभिरेव नः ॥ ११७ ॥

विभीषिकाः कियन्त्यश्चित् प्रेरणानि च कानिचित् ।
प्रस्तूयन्तां प्लवङ्गेषु कस्तान् प्रति हि सङ्गरः ॥ ११८ ॥

नरान्त्रनालवलया नरशोणितचर्चिताः ।
कुर्वन्तु कम्पं नरयोर्नरान्तकचमूभटाः ॥ ११९ ॥

१. BC मूलमप्य । २. A पृष्ठं ३. B त । ४. A आगाद्बहिः स्थितः क्षुब्धो । ५. C न दैन्यस्य ।

क्रोष्टूष्ट्रखरधौरेयाः करालशवकेतवः ।
संक्रीडन्तः प्रतिष्ठन्तां बीभत्सरचना रथाः ॥ १२० ॥

पिशाचमुखचक्रीवचक्रवालधुरन्धरः ।
कल्प्यतां विकटाकल्पः स नः कार्ष्णायसो रथः ॥ १२१ ॥

निर्गच्छतु गजस्कन्धैः कबन्धानां कदम्बकम् ।
व्रजन्तु वाजिनामग्रे मूर्धानो युद्धलालसाः ॥ १२२ ॥

उच्छूना विक्रियावन्तो निष्क्रामन्तु श्वभिः शवाः ।
जनयन्तु द्विषः शङ्कां कङ्कालाः स्खलितोत्थितैः ॥ १२३ ॥

द्वारि द्वारि तटिज्जिह्वाः सन्तु सन्तमसच्छिदः ।
ज्वालास्याः सालपृष्ठेषु तिष्ठन्तु विवृताननाः ॥ १२४ ॥

विमुक्तकेश्यः कोटव्यो विकटश्रोणिमण्डलाः ।
राक्षस्योऽसृङ्मधुक्षीवाः क्रीडन्तु पुरतस्तयोः ॥ १२५ ॥

दृश्यादृश्यानि भूतानि वितन्वन्तु विडम्बनाः ।
दर्शयन्त्विन्द्रजालानि मत्पूज्यस्यान्तवासिनः ॥ १२६ ॥

वीराः कारुण्यमुज्झन्तु भीषयन्तां भयानकाः ।
बीभत्साः प्रसरन्त्वग्रे निग्रहाय वनौकसाम् ॥ १२७ ॥

एकदैवाभिहन्यन्तां जैत्रवादित्रजातयः ।
विदीर्णैः कर्णविवरैर्विद्रवन्तु वनौकसः ॥ १२८ ॥

केऽपि घ्नन्तु शतघ्नीभिः केऽपि गुम्फर्णकैः कपीन् ।
लीढमस्तिष्कलेपाभिः केऽपि प्रेतकरोटिभिः ॥ १२९ ॥

प्राप्तः कोऽपि न मोक्तव्यः प्रहर्तव्यः पुनः पुनः ।
मर्यादासेतुरुद्धानां वैरान्तगमनं कुतः ॥ १३० ॥

इत्युक्त्वा रजनिचरेश्वरः स्वयोधान् सौधाग्रं गगनमिवारुरोह तुङ्गम् ।
संमूर्छन्मुखरवसूचितं प्रकारं प्राकारव्यवहितमीक्षितुं कपीनाम् ॥ १३१ ॥

१. BC शि । २. A लि । ३. C टिन्यो D टान्या ४. A कुल्यास । ५. A B गू ।

तारेयागमनसमुद्भवत्प्रहर्षप्रोद्वाचः प्लवगपताकिनीपतीन्द्राः ।
जन्येच्छारभसगृहीतशैलसा[1]लाः सा[2]लानामुपरि विरेजुरुल्लसन्तः ॥ १३२ ॥

इत्यभिनन्दकृतौ रामचरिते महाकाव्ये रणाभियोगो नाम अष्टाविंशः सर्गः ।

श्री[3]धर्मपालकुलकैरवकाननेन्दू राजा विलासकृतिपङ्कजिनीविवस्वान ।
सर्वाभिरामगुणपत्ररथत्रजैकनीडद्रुमो विजयते युवराजदेवः ॥



१. D शा २. B D शा ३. A D omit this sloka

# एकोनत्रिंशः सर्गः ॥



प्रतिनृपसुरमौलिरत्नराजीरुचिरुचिरप्रसवार्पिताङ्घ्रिपूजः ।
कृतसदृशनुतिर्महाकवीन्द्रैर्जयति चिरं युवराजमेदिनीन्द्रः ॥

तं निशम्य सबलस्य राघवो रावणस्य रणरागमङ्गदात् ।
सिद्धमिष्टमभिगम्यतामिति स्वं जगाद बलमाहवोत्सुकम् ॥ १ ॥

तत्क्षणं मणिमृदङ्गमर्दलध्वानभिन्नतुमुलारवोर्मयः ।
रुद्धमुक्तजलपूरवत्पुरीमप्लवन्त परितः प्लवङ्गमाः ॥ २ ॥

कोटिशः कनकशैलसंनिभाः पद्मशो विकचपद्मकान्तयः ।
शङ्कुशः कुलिशजालरोचिषः सर्वशः क्षयदिवाकरोपमाः ॥ ३ ॥

चक्रचापशकटाम्बुजादिकव्यूहभेदरचनाविचक्षणाः ।
मुक्तकादिसकलायुधावलीकृत्यकारितरुशैलमुष्टयः ॥ ४ ॥

संप्रतीष्टसुरपुष्पवृष्टयः संप्रहृष्टसुरदृष्टसौष्ठवाः ।
संनिकृष्टसुरशत्रुनिर्जयाः संप्रमृष्टसुरयोषिदश्रवः ॥ ५ ॥

पृष्ठतः कृतसहस्ररश्मयः शीतलानुगुणवातवीजिताः ।
सत्त्वसत्त्वरपुरस्सरावलीकथ्यमानरिपुनिर्गमोत्सवाः ॥ ६ ॥

आलिलिङ्गुरथ दोहदा इव व्याकृतस्वरुचिसिद्धसंपदः ।
तां जगत्त्रयजितः पुरीमरेः तेऽन्तकालशिखिनः कपिव्रजाः ॥ ७ ॥

तामतीत्य परिखां प्रतस्थिरे राक्षसेश्वरपुरीं हरीश्वराः ।
मन्त्रणान्तरनिवृत्तिशङ्कया दूरमुज्झितनिवेशभूमयः ॥ ८ ॥

निर्घनान्निपतिता नभस्तलादुत्कटा इव सहस्रकोटयः ।
रेजुराहितमहाचमत्क्रियास्ते पुरोपवनचैत्यशाखिषु ॥ ९ ॥

---

१. BC दरोद्धुराः । २. BC दृष्टिसौष्ठवाः । ३. BCD सन्निविष्टसुरदेहसंपदः । ४. CD omit this sloka ५. BCD खाः पुरीपि । ६. BC य । ७. BCD वि । ८. BC निर्जि । ९. D जे ।

केऽपि चुक्रुशुरधिक्रुधो यथा केपि च प्रजहसुर्जयोद्धुरा[1]: ।
केऽपि दीर्घमभितो ननर्दिरे[2] (?) शम्बरा[3]: शरदुपागमे यथा ॥ १० ॥

[4]केऽपि राजकुलमेव चक्रमुः केऽपि कोशभवनं व्यलोकयन् ।
केऽपि जग्मुरवरोधसद्मनामग्रमग्रमभिकामरंहसः ॥ ११ ॥

केऽपि नृत्यभवनानि भेजिरे केपि चित्रवलभीर्व्यडम्बयन् ।
केऽपि नेदुरुपरुद्धनिष्कुटाः केऽपि सङ्कटमसङ्कटं व्यधुः ॥ १२ ॥

केऽपि सालवलयं व्यलङ्घयन् केऽपि गोपुरमपावृतं व्यधुः ।
केऽपि जग्मुरुपकण्ठमोकसां केऽपि निष्कुटमहीमपूरयन् ॥ १३ ॥

तद्विलोक्य हरिसैन्यमन्तिकादन्तकालशिखिलोलमापतत् ।
अत्वरन्त निजपुद्गलाँहुतिं प्रत्यजन्यजलदत्विषोऽम्नपाः ॥ १४ ॥

निर्ययुर्निजनिकेतनोदरात्ते निजप्रभुनिदेशगौरवात् ।
वर्ष्मणि स्खलितवासवायुधे सस्मितभ्रमितकङ्कटोत्कटाः ॥ १५ ॥

सावहेलकलितासिपट्टसप्रासपाशहलशूलशक्तयः ।
शातशुभ्रदशनावलीरुचिच्छन्नगाढनिजदेहकालिकाः ॥ १६ ॥

ईयुरुल्लसितरौद्ररंहसः सिंहनाद[5]मुखरा नभःस्पृशः ।
उद्धताः प्रलयवातलालनाल्लावणस्य जलधेरिवोर्मयः ॥ १७ ॥

सक्तरक्तजलवाहवृष्टयः प्राज्यरक्त[6]मदिरामदोत्कटाः ।
ऊढरक्तकुसुमोत्करस्रजो रक्तवीरँकदलीकदम्बकाः ॥ १८ ॥

निर्गतारुणविलोलदृष्टयः स्पष्टभङ्गुरभयङ्करभ्रुवः ।
ग्रन्थिबन्धयमिताकुलायतश्मश्रवः श्रवणशङ्कुभीषणाः ॥ १९ ॥

मूर्ध्नि संनिहितगृध्रपङ्क्तयः पादयोश्चटुलजम्बुकीगणाः ।
विप्रतीपखरवातवेल्लितच्छत्रचामरकिरीटकेतवः ॥ २० ॥

अग्रतः प्रववृतेऽग्रगामिनामृक्षराक्षसवनौकसां रणः ।
सालतालशरजालवृष्टिभिर्दृष्टिपल्लवितवैरवीरुधाम् ॥ २१ ॥

१. BCD यैथो । २. A ववल्गिरे । ३. BC शाक ४. CBD omit two slokas. ५. BCD मुद्गलोद्गतीन् । ६. C सृष्ट D स्पृष्ट ७. C ची ।

तेनुरद्रिविशिखैद्रुमव्ययं[1] ते वपुर्भिरघटन्त चास्थितम् ।
भेजिरे न सुचिरादपि श्रमं स्वामिकार्यरसमग्नचेतसः ॥ २२ ॥

सेहिरे शरतुषारमद्भुतैरम्बुजैरिव मुखैर्वलीमुखाः ।
अश्मवर्षमसहन्त राक्षसाः क्षोदकीर्णशिखरैस्तनूरुहैः ॥ २३ ॥

निर्दयाहतिनिरन्तराहितप्रीतयो ननृतुरुत्तमौजसः ।
ते परस्परमनीकतूर्ययोश्छेदवीचिभिरपूर्वरीतिभिः ॥ २४ ॥

द्राक्कृतैः[2] प्रतिघयोनिरुद्धतप्रत्यनीकतलताडनोद्भवः[3] ।
संमुमूर्छ समवेत्य शोणिमा कोऽप्यसौ कपिकपोलपालिषु ॥ २५ ॥

गूढमर्महतिगाढमीलिताः प्रीतये न कपयस्तथाऽभवन् ।
स्पन्दमानतनवोऽप्यसृग्भुजामुत्पताकरुधिरोद्गमा यथा[4] ॥ २६ ॥

वेद्मि विस्मृतसुरप्रयोजनः केवलं कवलरागसंग्रहीत्[5] ।
तत्प्रसह्य शमनः समं तदा रामरावणबलं लिलेह यत् ॥ २७ ॥

तत्र केऽपि कपियूथपोत्थिताः कौणपाः कुणपतां प्रपेदिरे[6] ।
केऽपि मुक्तसकलाङ्गसन्धयः सद्य एव परमाणवोऽभवन् ॥ २८ ॥

वानराश्च पिशिताशिभिः क्षताः शिक्षितैः सकलशस्त्रदृष्टिषु[7] ।
अध्यशेरत रतक्लमादिव स्मेरवक्त्रकमलाः समित्स्थलम् ॥ २९ ॥

प्रागिवोज्ज्वलमुखद्युतिर्मृतोऽप्याददे न शिवया वलीमुखः ।
जग्रसे तु पिशिताशनः श्वसन्नेव नष्टभ्रुकुटीपरिग्रहः ॥ ३० ॥

चस्खलुश्च्युतललाटशोणितस्थासकस्थगितचक्षुषोऽस्रपाः ।
न प्रचेलुरुपनीतशृङ्खलाः स्वान्तवालवलयैर्वलीमुखाः ॥ ३१ ॥

दुस्सहानुशयसंज्वराज्जहुर्जीवितानि पिशिताशिनः क्षताः ।
नाग्रहीद्व्रणरुजं वनौकसां रामसंस्मरणशीतलं मनः ॥ ३२ ॥

नैक्षतापि दिशमृक्षरक्षसोरस्पृशत्प्लवगमग्रजिह्वया ।
जम्बुकी लिखितवाजिपञ्जरा कुञ्जरस्य निममज्ज मज्जनि ॥ ३३ ॥

१. C खा D खैः । २. A प्राकृतः । ३. BC व । ४. ACD स्य । ५. BD पात । ६. D तां सम । ७. B D न्त्र ।

आससाद करटी कटीतलं मौलिमश्रयत गृध्रमण्डली ।
पादमादित शिवा शयं शुनी जन्यमूर्ध्नि सुभटस्य पेतुषः ॥ ३४ ॥

चर्मवर्मशकलाकुलोर्मयः केशकेसरकलापशैवलाः ।
सस्रुरस्रसरितो रथाचलश्रेणिबन्धपरिणद्धरोधसः ॥ ३५ ॥

तायते स्म तरुणेऽपि दारुणं ध्वान्तमह्नि रजसा हृतातपे ।
शस्त्रपातरसितेन जज्ञिरे यातुधानविपिनौकसां क्रियाः ॥ ३६ ॥

गृध्रकाककुलकेलयः शिवासारमेयपरिषत्पुरस्सराः ।
रक्षसः समिति सीदतोऽभवन् प्राञ्च एव परिपार्श्ववर्तिनः ॥ ३७ ॥

मूर्छिताः शतमचेतनाः शतं शातशस्त्रशकलीकृताः शतम् ।
अग्रजन्यरसिकाः परीयिरे पश्चिमाजिरभसैः परश्शतैः ॥ ३८ ॥

गोपुरेषु परिखासु तोयधेस्तीरभूमिषु सुवेलसानुषु ।
रामरावणबलैर्विचिक्रियरे बन्धवः प्रहतिवेगनिर्गताः ॥ ३९ ॥

सा पुरस्तुरगनागपत्तिषु प्रद्रुतेषु तुषवत्तरुक्षतैः ।
रक्षसां प्रकटसारमण्डला कण्डितेव रुरुचे वरूथिनी ॥ ४० ॥

अस्फुरन्नुरसि काननौकसामिष्वासिस्वधितिमार्गसंपदः ।
रक्षसां रुरुचिरे निपेतुषामप्यरातिमभिसारसंपदः ॥ ४१ ॥

न्यस्य वक्षसि गरीयसो गिरीन्व्यक्रमन्त दशकण्ठसैनिकाः ।
कुर्वते हि हृदि शक्तिशालिनः स्वामिकृत्यभरगौरवं परम् ॥ ४२ ॥

जग्मुरस्थितमुदायुधा मिथस्तेऽस्रपप्लवगवीरबाहवः ।
नाकिभिस्तदवलोक्य विस्मितैः सस्मरे न बलवासवाहवः ॥ ४३ ॥

लम्बमानमसिना हसन्निव स्वान्त्रनालमलुनान्निशाचरः ।
पाणिरुद्धपृथुपार्श्वशेफसः पुप्लुवेऽभिरिपु कोपनः कपिः ॥ ४४ ॥

कोष्णशोणितनिपातम्लुचितस्वोत्तमाङ्गहतयः प्लवङ्गमाः ।
अभ्यगुर्द्विगुणरोपरंहसः सिंहवन्मदकलोपमानरीन् ॥ ४५ ॥

१. BC टम् । २. BC कटाः । ३. D त्परासवः । ४. BCD प्रती । ५ BCD तण्डु । ६. A कुण्ठि । ७. C चरुरुधे । ८. BD नुसाध्व । ९. BC जिग्यु । १०. A गुल्यव । D गुल्य पुप्पु । ११. D कलान्नि-शाचरान् । B लानिभानरीन् ।

अभ्यगादगणितव्यथस्तथा कोऽप्यरिं कपियुवा जवोत्तरः ।
संविवेद न यथा विनिर्गतं कुन्तमन्तरनुलोमवर्त्मना ॥ ४६ ॥

कोऽपि चाश्वखरपुच्छसंस्तरे हस्तिहस्तमुपधाय सुप्तवान् ।
बोध्यते स्म रुधिरव्ययोल्बणस्वव्रणोदरसमीरनिस्वनैः ॥ ४७ ॥

नर्जुना चलनवर्त्मना पयन्नर्जुनाहतशिरा निशाचरः ।
वानरो विधुरितः क्षितिं ययौ वानरोपविषभूमि रुट्फलः ॥ ४८ ॥

द्रागसृक् स्रवति हस्तवानहन्वानरः शिरसि राक्षसं तथा ।
निर्जघान घनमुष्टिबन्धनस्तं यथा न पुनराहवोन्मुखम् ॥ ४९ ॥

उच्चखान विहसन्वलीमुखः पुङ्खशेषमुरसः शिलीमुखम् ।
संविवेद न महीध्रसंहतिं लोमकूपनिभृतां निशाचरः ॥ ५० ॥

वानरैः प्रचुरशस्त्रकोविदा कोविदारतरुभिर्न्यवर्त्यत ।
रक्षसां क्षयरसोद्धुरा सभा रासभारवनिवेदितागमा ॥ ५१ ॥

तत्र तत्र घनतां गतैरसृक्कर्दमैर्जगृहिरे यदङ्घ्रयः ।
तैर्न वेद्मि शरशैलदुर्दिनं न व्यतीयुरुभयेऽपि सैनिकाः ॥ ५२ ॥

स्वासिभिः कपिभिरात्मसात्कृतैः कृन्त्यमानशिरसामसृग्भुजाम् ।
दूरमुद्ययुरसृङ्मुखालयो दैवमत्तुमिव शत्रुतां गतम् ॥ ५३ ॥

उत्तमाङ्गपदभागिति ध्रुवं मूर्ध्नि मत्सरमुवाह विग्रहः ।
यन्ननर्त ततबाहुराहवे तन्निपातसमकालमेव सः ॥ ५४ ॥

आददे भयदतां न रक्षसश्चापलं नच कपेरचिन्तयत् ।
तत्पराक्रमगुणैकरञ्जितो नेतुमत्वरत खेचरीगणः ॥ ५५ ॥

वानरोऽप्सरसमीप्सति स्म न स्वामिनो विरहिणः स्मरन्मुहुः ।
क्षुद्रमेतदिति नाकनिस्पृहः स्वीचकार न विमानमस्त्रभुक् ॥ ५६ ॥

पक्षपातमपहाय राघवे रावणे च परिमुच्य मत्सरम् ।
प्राश्निकत्वमगमन् सुरास्तयोस्तुल्यभङ्गजययोरनीकयोः ॥ ५७ ॥

---

१. BC धीज्य । २.A ववल । C वलन । ३. B वपुः ४. BD क्ष । ५. A भृत् ६. A प्राक् शिरः ७. A मुष्टिनापिनद्धा ८. BC तन्न D तत्र ९. A मि १०. BC द्रुतम् । ११ BC तन्निपातसमकालमुज्झजो नृत्यति स्म यदसौ रणाङ्गणे ।

राक्षसैर्जुहुविरेऽसवः सुखं प्रार्थितैः कपिभिरर्पितं वपुः ।
ते[1] द्वयेऽपि यशसः कृते पुनः भेजुरात्तकदनाः कदर्यताम् ॥ ५८ ॥

प्रत्यनीकसुखभङ्गहेतुतां तेन नूनमगमन्नसृग्भुजः ।
यत्प्रतीयुरलिकोत् प्रतिस्खलच्चञ्चलाग्ररसनाः स्वमप्यसृक् ॥ ५९ ॥

वीरवक्त्ररुधिरोक्षितद्विपस्कन्धमांसकबलग्रहोत्सुका ।
उन्ननाद मृगधूर्तसुन्दरी दुस्तरास्त्रपरिवेषरोपिता ॥ ६० ॥

व्यक्तविश्लथवरूथसन्धयो गन्धचञ्चलमुखीभिरन्तिकात् ।
भेजिरे युधि सृगालपालिभिर्लोलवीरवपुषो रथव्रजाः ॥ ६१ ॥

ध्वस्तधुर्ययुगयोक्त्ररश्मयः स्रस्तसूतकुथकेतुकूबराः ।
ते ययुर्जयमनोरथा इव प्रक्षयं समिति रक्षसां रथाः ॥ ६२ ॥

सादिनोऽस्थ्यपि लिलेह जम्बुकी नात्ति पत्तिपिशितोत्करं पुरः ।
दुर्लभस्य हि समस्तमिष्यते वस्तु सर्वमितरस्य दुर्भगम् ॥ ६३ ॥

निष्फलप्रकटसङ्गरक्रियाः कूटयुद्धमसृजन्नसृग्भुजः ।
नारभन्त घृणया वनौकसो विक्रमैकशरणा रणान्तरम् ॥ ६४ ॥

सालसानुकरकोत्करैररीनृक्षपङ्क्तिरभिवर्षति स्म याँ ।
साऽलसाऽनुपदमस्तृणाद्घृणाकारिभिर्मुखविलासबिन्दुभिः ॥ ६५ ॥

सा चचार नखराङ्कुशावलीभीषणा द्विषदनीकनाकुषु ।
गुल्मरुद्धघनमूलसन्धिषु प्राणकीटकुलमृक्षसंहतिः ॥ ६६ ॥

अन्तकोपगमनोत्सवोचितप्रक्रियाविधिविशारदा इव ।
तेनुरन्त्रततिभिः पतत्रिणस्तोरणानि रणसीमशाखिषु ॥ ६७ ॥

रक्षसां वपुषि कीकसान्तरे तार्रवैः कपिशतैः कृतारवैः ।
पावकोऽजनि घनार्य सस्पृहो दारुणे रणविहारदारुणे ॥ ६८ ॥

क्व प्रयात रजनीचरेश्वरं तोषयाम हरयो वधेन वः ।
देवताः स्मरत संभृता वयं वाससा विरहितासिधेनवः ॥ ६९ ॥

---

१. BC न २. AD तत्प्रतीषुरल । ३. A योक्तृ । D युग्य । ४. A नभ्यर्षदथकालिक्रोपमा । ५. A मृक्षसंहतिः शीकरानकिरदुत्कफानना । ६. BCD नीषु च । ७. BCD सोत्तरे नारवः कष । ८. D घृणा । ९. D घन ।

यात यत्र शिशवः स्त्रियोऽथवा केऽत्र यूयमुपहासबिन्दवः ।
रामसंज्ञमपि रावणाह्वयो नाभ्युपैति घृणया सबिन्दवः (?) ॥ ७० ॥

इत्युदीर्य वचनं निशाचराश्वेरुराजिखलमस्थिसङ्कुलम् ।
नेतुमन्तमिव रामभास्वति स्वस्य शेषमपि तामसं कुलम् ॥ ७१ ॥

शान्तसंज्ञमयुतं स्थितं समित्यर्बुदं निववृते वनौकसाम् ।
रक्षसामविशदाजिसंकटान् कोटिरन्तकरदच्युता पुरीम् ॥ ७२ ॥

भ्रष्टबाहुरपविद्धवालधिर्भग्नजानुरवसन्नलोचनः ।
वानरोऽरिनिधनाय तत्वरे सत्वमस्खलितवेगमुद्वहन् ॥ ७३ ॥

पीतवान्तनिजरक्तविप्रुषो विप्रकीर्णविकरालमूर्धजाः ।
स्वध्वजाश्वरथरुद्धवक्षसो राक्षसाः समरसीम्नि शिश्यिरे ॥ ७४ ॥

अक्षतं प्लवगसैन्यमाययौ निर्ययावहतमस्त्रभुग्बलम् ।
सङ्गरः प्रववृते तथा तयोः स्तोकशेषमुभयं यथाऽभवत् ॥ ७५ ॥

द्वन्द्वशः कपिनिशाचरव्रजास्तेऽभिजग्मुरविशिष्टहेतयः ।
अङ्गदेन्द्रजयिनोरनन्तरं सङ्गरः प्रववृते भयङ्करः ॥ ७६ ॥

वालिसूनुरचलायुधो बली दुर्जयो दशमुखात्मजः कृती ।
संबभूवतुरुभावमर्षणौ तौ जवोत्तमचमूशिरोमणी ॥ ७७ ॥

वेपते स्म दिवि देवसंहतिस्तेन तेन करणेन रावणेः ।
तेन वालितनयस्य चाचलश्रेणिवृष्टिरभसेन पिप्रिये ॥ ७८ ॥

साऽग्रगप्लवगहंसमण्डली मेघनादचकिता दिशोऽग्रहीत् ।
अक्षमिष्ट शरवृष्टिमायतामेकपुङ्गव इवाङ्गदः परम् ॥ ७९ ॥

इन्द्रनप्तुरचलौघमिन्द्रजित्तूलवत्तमधुनाद्धनुर्धरः ।
सूक्ष्मसूत्रपटलीमिवाभिनत्तस्य सोऽपि निबिडां शरावलीम् ॥ ८० ॥

भग्नभुग्नविषमेषुपञ्जरः संचचार कपिरस्खलन् पुरः ।
कङ्कटप्रतिहताचलावलिर्नाचलन्निजपदान्निशाचरः ॥ ८१ ॥

---

१. D यथा २. A सम्र ३. BC विश्र ४. A स ५. D वीर ६. A चिता

प्राहरन्निबिडमुष्टिमुद्यतं मुद्गरेण गुरुणापि ताडितः ।
प्रेर्य दूरमसिवाटमुत्कटं प्राप शत्रुमुरसि प्लवङ्गमः ॥ ८२ ॥

तं विहस्य दशकण्ठनन्दनः संप्रहारमुरसा तथाऽनुदत् ।
क्रोशताऽरिनिवहेन तर्जितः क्रोशमेकमगमद्यथाऽङ्गदः ॥ ८३ ॥

यावदङ्गमधमन्महेन्द्रजित्तावदन्तिकमुपस्थितोऽङ्गदः ।
आहवः प्रववृते पुनस्तयोरायुधावलिभिरुत्तरोत्तरः ॥ ८४ ॥

वानरस्य बलमीदृशं कुतः कोन्वयं विकटविग्रहः कृती ।
एष वेषवपुषोर्विवर्तनाद्वृत्रशत्रुरथ मां जिगीषति ॥ ८५ ॥

इत्युवाच मनसैव स क्षणं निश्चिकाय नतमेव तं पुनः ।
प्रागिव प्रतिघवेगमाहरन् प्राहरत् प्लवगयूनि तत्र सः ॥ ८६ ॥

लाघवान्निजतनोरवञ्चयत्तत्तदायुधमनायुधोऽपि सन् ।
पृष्ठतस्त्वकृत शत्रुमद्रिभिर्विद्रुताखिलरणाङ्गमङ्गदः ॥ ८७ ॥

आमुमोच कवचान्तरं चिरादग्रहीत् प्रहरणान्तरं कृती ।
आरुरोह च रथान्तरं सतामक्षिणोत् कपिममुं क्षणान्तरे ॥ ८८ ॥

वालिपुत्रमवधूय स क्षणं पूर्णकल्पमवहन्मनोरथम् ।
तस्य पश्चिमशिलोच्चयाहतः स्वं ररक्ष नतु राक्षसो रथम् ॥ ८९ ॥

उत्पपात हतसप्तिसारथेः नैकषेयपतिनन्दनो रथात् ।
व्यस्तबाह्यकरणाद्विचेतसः क्षेत्रवान्निजकलेवरादिव ॥ ९० ॥

पुष्पवृष्टिसमकालमुच्चकैरङ्गदः सुरगणेन तुष्टुवे ।
क्वेत्यतर्क्यत न केनचित्पुनर्दशकन्धरिरदृश्यतां गतः ॥ ९१ ॥

मेघजालपिहितात्मविग्रहो विग्रहान्तमकरोद्वनौकसाम् ।
शक्तिशूलहलयष्टिवृष्टिभिः कूटयुद्धनिपुणो निशाचरः ॥ ९२ ॥

उक्ष्यमाण इव रक्तशीकरैर्भास्करोऽर्थं निममज्ज नीरधौ ।
उल्लसत्सु निवहेषु रक्षसां नश्यति स्म दिवसो भयादिव ॥ ९३ ॥

---

१. BC न्नबल D न्नचत २. D निर्जितः । ३. A न्य B व्ज ४. BC omit five slokas ५. D क्षतियान्निज ६. BC ध्न ।

आततान ककुभस्तमश्चयो मूर्धजोत्कर इव व्यमुच्युतः ।
ज्योतिरिङ्गणगणो विदिद्युते जीवसङ्घ इव देहनिर्गतः ॥ ९४ ॥

उल्लसत्तिमिरजालमांसलं मत्तफेरवनिनादभीषणम् ।
प्राच्यं[1] रक्तमिव सान्ध्यमातपं पुस्फुरे रजनिराक्षसीमुखम् ॥ ९५ ॥

दृष्ट[2]सन्तमसचौर[3]पङ्क्तयः पङ्क्तिकण्ठपुरयामिकाः[4] इव ।
प्रान्तजीर्णतरुकोटरौकसः कौशिकाः कलकलं वितेनिरे ॥ ९६ ॥

अध्यशेत सुभटव्रजोऽङ्गजँन्यस्तनिस्सहतनुस्तमश्रितम् ।
चित्ररात्रिचरभूतसङ्कुलं तन्महारणपरेतकाननम् ॥ ९७ ॥

आपणानुकृतिरैक्ष्यत क्वचित् क्वाप्यसूच्यत महानिवाहवः ।
भीषणे तमसि तत्र कुत्रचित् पप्रथे किलिकिलारवः परम् ॥ ९८ ॥

कश्चिदागमितचिन्निशानिलैरन्वियेष मनसा कपिः सखीन् ।
निस्सहः स्वमपि कोपि चक्षमे नैव पातुमसृगस्रभोजनः ॥ ९९ ॥

स्वीचकार कलहोत्तरं शवान्[6] क्षेत्रपालपरिषद्बलीयसी ।
व्याचकार बत वक्तुमक्षमो वैकृतेन कटपूतनस्तृषम् ॥ १०० ॥

तत्पुरस्सरशिवाननानलज्वाल[7]भिन्नपदवीतमश्चयम् ।
विप्रकीर्णकुणपाङ्गसङ्कुलं[8] मातरः पितृवनं विचिक्रियरे ॥ १०१ ॥

तदोच्चैर्व्याचक्रुः स्वभुजरभसं शोणितभुजो न भेजुर्विश्रामं बहुलरजनीयुद्धरसिकाः ।
निजस्कन्धावारोन्मुखमपि तदाकर्ण्य परितो वितस्थे तत्रैव प्रथममिव शाखामृगबलम् ॥१०२॥

---

निर्मत्सरः[9] कविरपि प्रभुरप्यवामः कान्तोऽप्यरूढसुभगत्वमदप्रमीलः ॥
अत्युग्रशौर्यरभसोऽप्यकठोरवादी पृथ्वीपतिर्जयति विक्रमशीलजन्मा ॥

इत्यभिनन्दकृतौ रामचरिते महाकाव्ये वानरराक्षसयुद्धवर्णनो नाम
एकोनत्रिंशः सर्गः ॥

---

१. A प्य D स्य २. C स ३. A गै ४. D वासि ५. B द्धत C धरा ६. AD शिवाम् ७. B लः का ८. D माकु ९. D omits this sloka

# अथ त्रिंशः सर्गः ॥



निर्धूयाजौ द्वित्रिवर्जं कपीन्द्रान्मायानद्धो[1] नाकिनामप्यदृश्यः ।
नैशे तस्मिन्ध्वान्तराशावमार्गन्मूलाराती राघवौ मेघनादः ॥ १ ॥

तस्याध्वानं रोद्धुमन्तर्धिभाजः संगृह्याद्रीनद्रवन्वानरेन्द्राः ।
केऽपि स्थानेष्वेव सन्नह्य तस्थुश्चक्रुर्दिक्षु प्रत्यवेक्षां च केऽपि ॥ २ ॥

सेहुः केऽपि द्वन्द्वयुद्धं विजित्य क्षामा युद्धप्रक्रमेण प्लवङ्गाः ।
ते[3] धौरेया दुर्लभाः स्वामिनां ये स्कन्धक्लिष्टाः पृष्ठमप्यर्पयन्ति ॥ ३ ॥

येऽसृक्पङ्के दूरमग्ना निषेदुर्दीना दीर्घध्वान्तरुद्धासु दिक्षु ।
त्यक्ताः स्वीयैरार्तिशब्दानुसारात्ते निर्विघ्नं जघ्निरे यातुधानैः ॥ ४ ॥

केऽपि क्रोष्टूनन्वधावन् रयेण स्वश्रेणीनां केऽपि मध्ये निषेदुः ।
गृध्रानीकं ध्वानसाम्यादरीणामन्ये जघ्नुस्तत्र घोरेऽन्धकारे ॥ ५ ॥

हेषाघोषैर्बृंहितैः सिंहनादैः ज्याटङ्कारैः शङ्खभेरीविरावैः ।
नेमिध्वानैरध्वनि ध्वान्तरुद्धे केऽपि क्रुद्धाः शत्रुसेनामभीयुः ॥ ६ ॥

केचिद्गन्धादन्धकारेऽभिजघ्नुः क्रव्याद्वीरान्वानरेन्द्राः समेत्य ।
केऽपि स्वीयानेव शैलैरमृद्नन् भ्रातृव्यासृक्पङ्कसङ्क्रान्तिमिश्रान् ॥ ७ ॥

द्रागित्यर्चिर्भेददृक्तुल्यकालं क्वापि क्वाणः शुश्रुवेऽस्थिष्वसीनाम् ।
मूर्छन्नुच्चैरुच्चचार क्वचिच्च व्योमव्यापी चापविष्फारघोषः ॥ ८ ॥

ऋक्षस्तोमास्ते च रक्षोनिकायाः स्वच्छायाभिश्छादयन्ति स्म विश्वम् ।
दंष्ट्रालीनामंशुभिस्तु द्वयेऽपि ध्वान्तस्कन्धं जर्जरं ते वितेनुः ॥ ९ ॥

रक्षःकायैः कज्जलक्ष्माधराभैस्तेष्वारेभे पौनरुक्त्यं तमस्सु ।
क्रोधात्ताम्रैर्वानराणां मुखार्कैः क्वापि प्रातःकालकान्तिर्वितेने ॥ १० ॥

हेमाकल्पद्योतविद्युद्विभिन्नश्यामारम्भे तत्र गाढान्धकारे ।
रक्षोमेघव्यूहसंघट्टजन्मा झञ्झावायुर्वानरेन्द्रान्नुनोद ॥ ११ ॥

१. BC वक्रो D चक्रे २. A स्वं ३. CD omit five lines

स्रस्तैरङ्गैः स्वैरमाजिस्थलीषु स्थूलस्थूलानस्रबिन्दून्वमन्तः ।
तासां रक्षोराजिकादम्बिनीनां बाणासारं वानरेन्द्राः प्रतीयुः ॥ १२ ॥

तत्रैवागात्तुङ्गलाङ्गूलकोटिर्निष्टं मार्गन्नङ्गदो मेघनादम् ।
स्तब्धग्रीवः क्रोधताम्रायताक्षः तार्क्ष्यः स्रस्तं पन्नगानामिवेशम् ॥ १३ ॥

दृष्ट्वाऽवस्थां तां दिदीपे कपीनां खे सन्नद्धान् यातुधानान् ददर्श ।
तैरत्युच्चैर्गर्ज्यते स्म प्रगल्भैर्जग्राह स्वं विक्रमं वालिपुत्रः ॥ १४ ॥

दत्तोत्कम्पं तानि रक्षःशतानि व्योम्नोऽनैषीद्भूतलं तत्क्षणेन ।
शाखैकाग्रादात्मनो वक्त्रबिम्बं जम्बूनीव प्रौढपाकश्लथानि ॥ १५ ॥

चिक्षेपोच्चै राक्षसानां सहस्रं लाङ्गूलाग्रेणाङ्गदो वेष्टयित्वा ।
यूथेन्द्राणामिन्द्रजित्तस्य चाग्रे लक्षं शिक्षालाघवेनोन्ममाथ ॥ १६ ॥

आचस्कन्द स्यन्दनेनार्बुदानि ज्यानादेन व्याधुनात् पद्ममेकम् ।
संख्ये संख्यां रावणिर्वानराणां तामत्यल्पां चापहस्तश्चकार ॥ १७ ॥

तं सेनानीरानिलिः सालजालैर्बाणालीनामन्तराले ततान ।
स प्रत्येकं तानि चिच्छेद यावत् प्रापत्तावत्तालपाणिः सुषेणः ॥ १८ ॥

चक्रैर्मोचाकाण्डवत्खण्डशस्तान् कृत्वात्यर्थं राक्षसेन्द्रस्तृणेन्द्रान् ।
नैषा भूमिः क्रूरशस्त्रव्रजानामित्युज्झित्वा तं ययौ सावहेलः ॥ १९ ॥

विद्युन्मालीत्यस्त्रशुग्विद्युदाभो निर्भिन्दानः सान्द्रमन्दं तमस्तत् ।
तिष्ठेति द्विर्भाषमाणः सुषेणं निस्सङ्गेन स्यन्दनेनापपात ॥ २० ॥

तेन स्मित्वा सोऽद्रिभिः संप्रतीष्टः कष्टात् धृष्टः प्राप कष्टं तदानीम् ।
मूर्छानृण्यं सद्य एव प्रपेदे तस्मिन् साधौ सोऽपि रोषव्ययेन ॥ २१ ॥

तं मूर्छन्तं चक्रुरागत्य वैद्यं दिव्यौषध्यः सिद्धिवेगोपहूताः ।
मुष्टिक्ष्माभृच्छाखिनां संनिपातात्तस्याजह्रे तेन घोरः प्रमाथः ॥ २२ ॥

तत्रारूढे तत्क्षणान्नाकपृष्ठं नाकस्त्रीणामुत्सवः कोपि जज्ञे ।
निस्त्राणानां रावणानीकिनीनां हाहेत्युच्चैरुच्चचारार्तनादः ॥ २३ ॥

लङ्कोत्सङ्गात् पिङ्गलश्मश्रुमालः कालो दंष्ट्रादीप्तिपीतान्धकारः ।
निश्चक्राम द्यां दिशश्चाश्रुवानः सेनाङ्गानां डम्बरैर्जम्बुमाली ॥ २४ ॥

ते सुग्रीवस्याग्र[1]सेनापतीन्द्राः तन्द्रामीयुस्तं विलोक्यैव दूरात् ।
एकस्तस्मिन्वानरानीकमध्ये तस्यास्कन्दं चक्षमेऽक्षे[2]प्रमाथी ॥ २५ ॥

संक्रीडन्तः स्यन्दनास्ते तदानीमत्यादित्यज्योतिषो राक्षसानाम् ।
सङ्ग्रामच्छाँ[3]गर्वगर्भस्य पातं तेनुस्तासां वानराक्षौहिणीनाम् ॥ २६ ॥

प्राज्झिष्क्रान्तं राक्षसैरल्पसत्वैः शूरास्तेऽमी सांप्रतं निष्पतन्ति ।
वर्ष्माभोगै[4]र्व्यक्तगम्भीरगर्वैर्गीर्वाणानां[5] रावणो रावणो यैः ॥ २७ ॥

एतद्यूढं हास्तिकं कः प्रतीच्छेत् पारं[6] प्राप्येतास्य वाग्वी[7]र्यसिन्धोः ।
कः पत्तीनामत्र कुर्या[8]दियत्तामुन्मत्तोऽयं राघवो यत्र याति ॥ २८ ॥

इत्युच्चस्ता जम्बुमालिध्वजिन्याः संपाताद्ध्ये[9] दीनवाचः प्लवङ्गाः ।
मा भैत्युच्चैर्मारुतिस्तान्निषेधन्निस्संज्ञं[10] तद्यातुचक्रं स चक्रे[11] ॥ २९ ॥

स्मेरास्यस्य स्वैर्भटैरुज्झितस्य स्पष्टं रामे लक्ष्मणे चेक्षमाणे ।
अष्टौ कोट्यः स्यन्दनानामरातेर्निष्ठामीयुर्मारुतेरेकमुष्टौ ॥ ३० ॥

यावत्क्रोधाद्दूरमाकृष्य चापं तेने तीक्ष्णैस्तं शरैर्जम्बुमाली ।
तावत्तस्य क्रोडभाजो भुजाभ्यामुत्खायास्तात्सोऽपतत्स्यन्दनात्क्ष्माम् ॥ ३१ ॥

उत्थायास्तस्तेन भूयो हनूमानागत्यार्तः[12] कन्धरायां स तेन ।
तं लाङ्गूले पीडयामास रक्षः क्रुत्तो मौलिस्तस्य शाखामृगेण ॥ ३२ ॥

तासां शत्रोर्वाहिनीनां तथाऽऽजौ तेजश्शाली शीर्ष[13]मादौ दिदेश ।
जिह्वायासूनेकशेषस्य पश्चात् पीत्वा तस्य द्वन्द्वयुद्धे यथाऽसौ ॥ ३३ ॥

रामे दूरात् पश्यति प्रीतिभाजि प्रत्यासन्ने वानराणां च पत्यौ ।
संख्याभाजः सोऽकृत क्षिप्रहस्तैः[14] पौलस्त्यस्य प्राणतुल्यान् प्रवीरान् ॥ ३४ ॥

दोस्साहय्यं मारुतौ गन्तुमिच्छोः[15]स्तस्मिन्दूरं रात्रियुद्धे प्रवृद्धे ।
अग्रे रक्षोवीरसेनासमग्रः सुग्रीवस्य प्रादुरासीत्प्रजङ्घः ॥ ३५ ॥

सैन्यानि स्वान्यग्रतः संप्रणुद्य ज्योतींषीव प्रत्युषस्यंशुमाली ।
ध्वान्तच्छायाभोगचौरं निशीथे तन्निश्शेषं यातु चक्रे कपीन्द्रः ॥ ३६ ॥

१. BCD ते ते सर्वोप्यग्रसेनः कपी । २. BC क्षि । ३. A मोव्र्याम् । ४. D. र्षाभा । ५. BCD द्रा । ६. A रः । ७. BC चाम्नी । ८. थैः ९. A न्य । १०. श्शङ्कं ११. A चचार १२. BCD हत्यास्तः । १३ C शे । १४. BCD कृताक्षप्रहन्ता । १५. BC च्छौ ।

तत्रान्येऽपि प्रत्यनीकप्रवीराः प्रत्येकं ते जघ्निरे वानरेन्द्रैः ।
रक्षश्शून्यो जन्यरङ्गस्तदानीं नाकस्रस्तैस्तस्तरे पारिजातैः ॥ ३७ ॥

एष श्रीमान्वीरबाहुः सुबाहुः सानुप्रस्थश्चन्दनो हेमकूटः ।
रक्षःकूटं ध्वान्तकूटं च भित्वा देदीप्यन्ते देवयूथप्रवीराः ॥ ३८ ॥

शक्रारातेः स्यन्दनं मुष्टिनाद्य प्रत्यक्षं नः क्षुण्णवानङ्गदोऽयम् ।
त्यक्त्वा युद्धं रावणिः प्राणशेषो निर्वादार्हस्तर्हि सोऽन्तर्हितोऽभूत् ॥ ३९ ॥

इन्द्रोपेन्द्रावश्विपुत्रौ पुरस्ते पार्श्वस्थोऽयं स्थाणुतुल्यः सुषेणः ।
धर्मः साक्षादृक्षराट् पृष्ठतोऽयं सर्वे देवाः सर्वतोऽयं हनूमान् ॥ ४० ॥

तारः सारान् हन्त्ययं नैकपेयान् सेनां शत्रोरेति गर्जन्गजोऽयम् ।
एष क्रुद्धः केसरी तान् भिनत्ति स्वस्थः सैन्यं याति संपातिरेषः ॥ ४१ ॥

प्रत्यासन्नः पन्नदोयं नलोऽयं नीलोऽयं च श्वेत इत्येष वीरः ।
एष क्रोशत्यस्त्रपौघान् प्रमाथी यूथस्याग्रे रोषणोऽयं रुमण्वान् ॥ ४२ ॥

मथ्नात्याराद्यूथपौघं पृथुर्मे सारम्भोऽयं जृम्भमाणोऽस्ति रम्भः ।
वल्गत्युच्चैरेष संग्रामरङ्गे गोलाङ्गूलव्यूहगोप्ता गवाक्षः ॥ ४३ ॥

एकैकस्मादित्युदारैर्वचोभिर्युद्धस्यान्तं प्राप्तवन्तो जयेन ।
सुग्रीवेण स्वीयसेनापतीन्द्रा नामग्राहं दर्शिता राघवाय ॥ ४४ ॥

दृष्टाः सर्वे युध्यमाना मयाऽमी रक्षोरूपैरन्तकैरेव सार्धम् ।
तेषामेव प्रत्युतान्तं विधाय व्यावल्गन्तो विग्रहाङ्गैः समग्रैः ॥ ४५ ॥

सद्यः क्षुण्णः स्यन्दनः कान्दिशीको दृष्टो नश्यन्नङ्गदान्मेघनादः ।
अंहोराशिः पुण्यराशौ विशुध्यन् दृष्टः संख्ये स प्रजङ्घाभिधानः ॥ ४६ ॥

दृष्टः शैलश्रेणिपाणेः सुषेणाद्व्यक्तो विद्युन्मालिनः कालधर्मः ।
निष्ठावत्यो वातपुत्रस्य मुष्टौ दृष्टाः कोट्यस्ताश्च रक्षोभटानाम् ॥ ४७ ॥

श्रान्ताः संप्रत्यासतां तावदेते सार्धं भ्रात्रा दीर्घमव्यापृतस्य ।
क्वाप्युद्देशे रावणिग्रीष्मशेषं बाणासारो लक्ष्मणस्य क्षिणोतु ॥ ४८ ॥

---

१ BC दीपा । २. B तारं । D सारं । ३. BC दि । ४. B एनो CD आये । ५ A ध्य

को हन्तव्यो यो हतो न त्वयाऽऽसीत् तत् किंत्वाजौ निर्जितायां शरैर्नः ।
मायायोधी श्रूयते मेघनादः तस्यान्तर्धिः शङ्कनीयस्त्वकस्मात् ॥ ४९ ॥

व्यक्ताव्यक्तं वेत्सि विश्वं त्वमेव त्वं मायावान् पूरुषोऽन्तर्बहिश्च ।
इच्छावर्तैः क्रीडसीत्थं नमस्ते पौलस्त्योऽसौ कस्तवारिर्वराकः ॥ ५० ॥

त्वत्तेजोभिर्जीयतेऽस्मान्निविष्टैः कष्टेभ्यस्त्वं त्रायसे नः स्मृतोऽपि ।
जानासि त्वं विद्विषामप्यशेषं शेषं सर्वं[2] ब्रूहि किं प्राप्तकालम् ॥ ५१ ॥

तन्निर्व्यूढं सर्वसंपातयुद्धं त्वद्धाम्नैव द्वन्द्वयुद्धं जितं तत् ।
युद्धं रात्रावेतदाभोगभीमं विश्वासं नो निर्जये[3]ऽपि क्षिणोति ॥ ५२ ॥

ते सेनान्यः सर्व एवाङ्गदाद्याः श्रुत्वा सूक्तं राघवस्येत्यवोचन् ।
त्रस्तत्रस्तास्तस्थुराजौ जितायामाविर्भूतै[4]र्दुर्निमित्तै[5]रकस्मात् ॥ ५३ ॥

चिन्तातुल्यं तान् प्लवङ्गप्रवीरान् घोरे तत्र ध्वान्तनद्धेऽर्धरात्रे ।
दिग्व्यत्यासोदीर्णविस्फारघोषं वर्षं भेजे दुर्निवारं शराणाम् ॥ ५४ ॥

पेतुः स्वित्खात् क्ष्मातलादुद्ययुः स्वित्पर्यन्तेभ्यः स्विद्दिशां तिर्यगीयुः ।
तर्क्यन्ते स्म प्रोतसर्वाङ्गदेशैः[6] न व्यक्तं ते[7] वानरैर्बाणपूगाः ॥ ५५ ॥

जाताश्चर्याः केवलं ते निदध्युः विद्धच्छिन्नस्रस्तविध्वस्तकायाः ।
पारावारं न प्रजग्मुस्तदानीं तस्मिन् बाणैकार्णवे संनिमग्नाः ॥ ५६ ॥

तानत्युग्रप्रत्यनीकाभियोगान् भेजे रामः सत्वरं सानुजन्मा ।
निस्संपातैः[10] पातशब्दानुसाराद्बाणैर्बाणान् कौणपानां निरुन्धन् ॥ ५७ ॥

तारेयो[11]ऽभूद्दक्षिणे तस्य पार्श्वे वामे चासीन्नैकषेयः कनीयान् ।
आदायोल्काः सस्रुरग्रेसरौघाः सेदुः[12] पश्चात्प्राप्तगूढप्रहाराः[13] ॥ ५८ ॥

यत्प्राग्यागध्वंसकै[14]र्ध्वंसनेन प्रीतिं नीताद्गाधिसूनोरे[15]वाप्तम् ।
तत्प्रायुङ्क्त प्रस्तुतोपप्लवानामस्त्रं रामो रक्षसां प्रक्षयाय ॥ ५९ ॥

---

१. A सर्वज्ञोऽसि । २ BC द्वान्नारिः किंजये । ३. A मप्युद्ध । ४. BC वात्यासीद्दीर्घे । ५. BC वर्षन्तोऽस्रैरस्रपाः प्रादुरासन् । ६. BC सङ्गाः । ७. BC तैः । ८. D बाणः । ९ D राम । १०. B तान् । ११. BCD बाले । १२. BCD सान्द्राः । १३. BCD गूढप्रगाढाः । १४. BCD गाभ्यामध्वरा । १५. AD दागतं गाधिसूनोः ।

एकं जज्ञे तत्सहस्रं शराणां तद्भूयोऽभूद्दिक्षु संख्यादरिद्रम् ।
प्रत्यस्तेभ्यस्त्रस्यं[1]दिन्द्रारिवर्जं निष्ठां[2] निन्ये नैर्ऋतान्विश्वतस्तत् ॥ ६० ॥

तानत्यर्थं तीक्ष्णशृङ्गानिवोक्ष्णश्छिन्नाशेषप्रग्रहानभ्यवर्षत् ।
स प्रत्येकं प्रत्यनीकप्रवीरान् बाणासारो मन्त्रमेघप्रसूतः ॥ ६१ ॥

तस्यां तस्यामापतन्त्यां शरास्ते सेनाङ्गानां संहतौ निर्विषङ्गाः ।
ब्रह्मास्त्राणामोजसा रुद्धवेगाः शक्रारातेः[3] स्यन्दनाग्रे निषेदुः ॥ ६२ ॥

रामः स्वाग्रे रावणेरभ्युपेतान् बाणान्[6]वर्णैरङ्कितान् स्वर्णरेखैः ।
वीक्ष्य स्मित्वा सोऽनुजन्मद्वितीयो बाणाद्वैतं विद्विषत्सु प्रतेने ॥ ६३ ॥

क्वाप्यत्राजीद्वज्रदंष्ट्रस्तदानीं भिन्नेनागाज्जत्रुणा यज्ञशत्रुः ।
दृष्टः सर्पन् सारणः पारमब्धेः विज्ञाताऽऽसीन्न प्रवृत्तिः शुकस्य ॥ ६४ ॥

कोट्यः सुप्तास्तत्र तिस्रस्तमिस्रे दूरं सस्रे शङ्कुना शङ्कितानाम् ।
सार्धं[9] धात्र्या सायकैः स्यूतमासीज्जन्योपान्ते रक्षसां लक्षमेकम् ॥ ६५ ॥

क्रोष्टाऽजिघ्रद्वाजिनः सन्नसंज्ञान गृध्रः सान्द्रं यन्तुरन्त्रं[10] चकर्ष ।
निन्युः कुम्भैः कुम्भयुग्मादिभानामस्रोत्पीडं पीतशेषं पिशाच्यः ॥ ६६ ॥

ज्वालामुख्यः शोणितस्नेहपूर्णाः तस्थुः पार्श्वेष्वन्धकारं पिबन्त्यः ।
तूष्णींभावं[11] तानि तूर्याण्यनैषीत् फेरुण्डानामारवो डम्बरालः ॥ ६७ ॥

खे मूर्धानः सत्वरापातचण्डश्येनश्रेणीचञ्चुकोटिप्रतिष्ठाः ।
गायन्ति स्म च्छेदसंवेगनिर्यद्गाढोच्छ्वासग्रन्थिनिर्भेदनादाः ॥ ६८ ॥

अस्रोत्पीडक्रान्तकण्ठान्तरालप्रत्यावृत्तप्राणदीर्घप्रयाणाः ।
नृत्यन्ति स्म प्रत्यनीकेष्वनुक्तिप्रख्यातव्यप्रीतिबन्धाः कबन्धाः ॥ ६९ ॥

तामद्राक्षुर्ध्वान्तनिर्व्यूढ[12]नेत्राः प्रेक्षां रक्षःप्रेतकायाः क्षपायाम् ।
कङ्कालानामन्तराले कपीनामुत्थायोच्चैः स्वाङ्गमायच्छमानाः ॥ ७० ॥

वक्षः पृष्ठं न क्षतं दृष्टमासीद्विष्टान्तोऽभूत् केवलं वीक्ष्यमाणैः[13] ।
अर्थापत्त्या यातुधानव्रजेषु प्रव्यज्यन्ते स्मार्धनालीकमार्गाः ॥ ७१ ॥

१. BCD ध्वस्तेभ्यो श्रश्य । २ A नष्टा । ३. B तिः C ति । ४. BCD स्या । ५. BCD प्यपसन् ६. BCD णाव ७. BCD ताः । ८. D शक्र ९. BC सर्वं १०. A जत्रुरन्ध्रम् । ११. BCD omit four lines. १२. C क्लनिष्पी । १३. BC णा

दंष्ट्रालीनां विप्रकीर्णेऽवलोके वीक्षापन्नैर्वीक्ष्यमाणा मरुद्भिः ।
रक्षःकाये रामचापच्युतानां चित्रा मार्गा मार्गणानां विरेजुः ॥ ७२ ॥

रात्रौ तस्यां ग्रासहेतोः शैवानां ते संभूता भूतसङ्घाः कृतार्थाः ।
दीर्घायासक्लेशितस्यापि सद्यो यैस्तद्दृष्टं सौष्ठवं राघवस्य ॥ ७३ ॥

रक्षोगुल्मेष्वेव संसक्तपातास्ते रामस्य स्वर्णपुङ्खाः पृषत्काः ।
ध्वान्ते तस्मिन्दीधितीनां प्रतानैः खद्योतानां विभ्रमं बिभ्रति स्म ॥ ७४ ॥

क्ष्वेडारावैः स प्रमाथी शशाम क्ष्मोच्छ्वासस्त्रस्तभारेव दूरम् ।
आहार्यश्रीरिद्धमानः ककुप्सु स्वेनैवासीद्वैभवेनान्धकारः ॥ ७५ ॥

रामस्यास्त्रै रावणस्य ध्वजिन्यस्ताः संश्लेषाद्भेजिरे दीर्घनिद्राम् ।
एको जाग्रद्यामिकत्वं प्रपेदे कालापेक्षी केवलं मेघनादः ॥ ७६ ॥

युग्यैर्जोषं किं पिनष्मि प्लवङ्गान् किं सेनाङ्गैः संपतामि प्रसह्य ।
मृत्युं तस्य भ्रातृसाधारणं वा मायायोधी मानुषस्याहरामि ॥ ७७ ॥

नैते तावत्तातपादैर्मया वा शक्यास्कन्दा वानरेन्द्राः प्रकाशम् ।
रामश्चायं लक्ष्मणेनानुयातः शङ्केऽस्माभिर्दुर्जयो माययाऽपि ॥ ७८ ॥

तत्प्रच्छन्नः सङ्गरे संचरामि च्छिद्रं तावद्गूढमासादयिष्यन् ।
किं भूयोभिस्तानहं वैरिणीह ब्रह्मप्रत्तान्नागपाशान् प्रयुञ्जे ॥ ७९ ॥

वह्नौ वाते वज्रपाणौ यमे वा ये नाम्नैवोन्मुक्तशस्त्रे न मुक्ताः ।
तानेतास्मिन्नद्य निर्णीतसारे निर्मोक्ष्यामि क्षुद्रवेषग्रहेऽपि ॥ ८० ॥

नैते शक्याः स्वर्गिभिर्द्रष्टुमारात् का मर्त्यानां शक्तिरालब्धुमेतान् ।
बाणाकाराः केऽप्यमी काद्रवेयाः सुप्रीतेन स्पर्शिता वेधसा मे ॥ ८१ ॥

इत्यालोच्य स्वबलविपदि स्वात्मनैव प्रदीर्घं
रामाभ्याशं रथमगमयत्खेन खेलोत्तमाश्वम् ।

आरेभे च व्ययमणुमुखं बाणधारावलीनां
प्रावृड्व्यक्तातिशयविषमं मेघवन्मेघनादः ॥ ८२ ॥

१. BCD शि । २. BD प्रवीरान् । ३. B मो नूनम् । ४. BCD क्षत्रियेषु । ५. BD माविद्धोल्काविषयगगनम् । C प्रावृट् कोल्का ।

दृढं पेतुः केचिद्विदधुर्[1]परे दुष्करतरं
तथाऽन्ये चाश्चर्यं रघुतिलकयोरप्यजनयन् ।
तदानीमिन्द्रारेः कपिसदसि सर्वेऽपि बिभिदुः
शरीरं सर्वस्य प्रलयघनधारा इव शराः ॥ ८३ ॥

किमवनितलादुद्गच्छन्ति स्फुरन्ति किमम्बरात्
किमथ विवरादाविर्भावं भजन्त्यधुना दिशाम् ।
वदत किममी बाणव्राताः किमङ्ग भुजङ्गमाः
ययुरिति न ते चिन्तापारं मिथः कपियूथपाः ॥ ८४ ॥

सुषेण विषमा रुजः पनस पश्य किं नः स्थितं
न वक्ति विनतः शिवं शतबले नल प्राणिषि ।
कपीश्वर किमीक्षसे न बत भाषते लक्ष्मणो
गणः स विपिनौकसामिति जगाद गोमाकुलाम् ॥ ८५ ॥

विषमविशिखश्रेणीनिर्यन्महाभुजगावली-
वलयविधुरो रामः पूर्वं जगाम महीतलम् ।
प्रथमजदशालोकव्रीडानिपि[3]द्धरिपुक्षयः
प्रणिधिवि[4]हितप्राणाबाधः क्षणेन च लक्ष्मणः ॥ ८६ ॥

इत्यभिनन्दकृतौ रामचरिते महाकाव्ये नागास्त्रबन्धनो
नाम त्रिंशः सर्गः समाप्तः ॥



१. A धुरम २. BCD गतोदशा ३. ABC वेद्यरिपुक्षय । ४. BC पि । ५. A णं ननु ।

# एकत्रिंशः सर्गः ॥

त्यागस्य पात्रमियमल्पतरा त्रिलोकी को विक्रमस्य कणिकामपि संसहेत ।
शास्त्राणि कानि सुबहून्यपि हारवर्षक्षोणीपतेरतिपटुप्रतिभागुणस्य ॥

शक्रध्वजाकृतिधरौ धरणीशावुभावपि ।
शक्रारिः शरधाराभिः सविशेषमताडयत् ॥ १ ॥

तमुत्तानशयं राममभिराममुखाम्बुजम् ।
बाणैर्भूयोऽतुदत्क्रूरकर्मा मर्माणि मर्मणि ॥ २ ॥

अप्रोषितमिवाङ्गेषु पश्यन् जीवितलक्षणम् ।
पुनरुक्तमिषुव्रातैस्तीक्ष्णैर्लक्ष्मणमक्षिणोत् ॥ ३ ॥

अथ प्रकाशतामेत्य वर्षादित्य इव क्षणात् ।
कपीनस्वपङ्क्सदः सोऽतुदद्वचनांशुभिः ॥ ४ ॥

राजन्नुत्तिष्ठ सुग्रीव किमेवमवसीदसि ।
त्वं किलाहृत्य यूथानि जेतुमस्मानिहागतः ॥ ५ ॥

अयं प्रत्युपकारस्ते काकुत्स्थे हतवालिनि ।
यन्मया हन्यमानेऽस्मिन्नक्षतः साक्षितामगाः ॥ ६ ॥

व्रज संप्रति किष्किन्धां कृतं रामप्रयोजनम् ।
विकत्थस्व निजास्थाने यद्वयं वीक्षितास्त्वया ॥ ७ ॥

क्व स रामः क्व सा सीतेत्यनुयोगेषु योषिताम् ।
किं नु प्रतिज्ञासदृशं वक्ष्यसि त्वमितो गतः ॥ ८ ॥

हनूमन् क्वासि मा भैषीः सह्यं पृच्छति रावणिः ।
त्वं नो रिपुर्ययोरर्थे तौ हतावद्य को भवान् ॥ ९ ॥

एकः प्लवगसैन्येऽस्मिन्नञ्जनासुत गीयसे ।
अप्रमत्तेन किं मत्तस्त्वयापीमौ न रक्षितौ ॥ १० ॥

१. A विध धरां धरणीं तौ गता २. BCD वदद्दश ।

क्वासौ नलो जलनिधिर्येन बद्धः शिलोच्चयैः ।
स तरत्वधुना क्षुब्धं मेघनादमहार्णवम् ॥ ११ ॥

इउभावो दुःसमाधानः।

भग्नस्त्वया मम रथो वालिपुत्र बली भवान् ।
मयि भग्नं पितृव्यस्य निर्वाहय मनोरथम् ॥ १२ ॥

सुषेण शृणुमः सिद्धिं भैषज्ये भिषजस्तव ।
गाढबाणव्रजरुजाबुल्लाघय रघूद्वहौ ॥ १३ ॥

अयं स मैन्दद्विविदौ दोर्दर्पः समरेषु वाम् ।
सुप्तं भवद्भ्यां नरयोर्यन्मया हन्यमानयोः ॥ १४ ॥

अयं ते जाम्बवन्मन्त्रस्तन्त्रेणानेन राघवः ।
यत्प्रेरितो योधयितुं यातुधानपतिं त्वया ॥ १५ ॥

भिन्नकर्तृकत्वे तुमुन्नुद्वेगकरः।

विशेषेण विहस्योच्चैर्बभाषेऽथ विभीषणम् ।
रामलक्ष्मणयोर्मूले शोकवैलक्ष्यमीलितम् ॥ १६ ॥

शूरौ कृतास्त्रौ सुधियौ सुप्रभूतंपुरोगमौ ।
इमौ तौ रामसौमित्री पितृव्य यमितौ मया ॥ १७ ॥

बलं विलुप्तमखिलं मयैकेन वनौकसाम् ।
त्वं शेषितो दर्शयितुं दाशरथ्योरिमां दशाम् ॥ १८ ॥

क्व नश्यसि निशीथेऽस्मिन्नमितोऽसि मुखत्विषा[2] ।
मया युध्यस्व पुत्रेण रामलक्ष्मणशत्रुणा ॥ १९ ॥

यत्सत्यं युध्यमानेऽपि प्रहर्तुं त्वयि नो घृणा ।
यदग्रतो भयं पश्यन् यत्तत्कृत्वाऽसि निर्गतः ॥ २० ॥

पतितौ नीडशाखाभाविमौ ते पुरुषाकृती ।
लयं लङ्काचलाङ्केषु रक्षोऽधम भजाधुना ॥ २१ ॥

हताविमौ किं प्लवगैरेहि यामो निकेतनम् ।
तातात्त्रास्येऽहमद्य त्वामरातिवधतोषितात् ॥ २२ ॥

१. D क्षसू २. A भ्रमीतोसि मुखेन मे । ३. CD प्रकुप्तासि ४. A साखोदा. ५. A वलीकेषु B चलाङ्केस भुजा D ष्वनुजाधम भज

किमश्वासि परोच्छिष्टं कस्त्वं पङ्क्तौ वनौकसाम् ।
नैकषेयपतिभ्रातर्भवितव्यमहो तव ॥ २३ ॥

श्रुतस्य ते परीणामः स्वकुलाद्विच्युतोऽसि यत् ।
बालत्वमिदमस्माकं यदमी रिपवो जिताः ॥ २४ ॥

इति कर्कशमुद्गीर्य जितकाशी निशाचरः ।
पुनराह स्म तान् सर्वान् हर्षवादबलात्कृतः ॥ २५ ॥

अयं नयामि नगरीं शरबद्धाविमावरी ।
दत्वा शिरसि वः पादं रक्ष्यतामृक्षवानराः ॥ २६ ॥

तं निशम्यैव निष्पन्दान्यपि निष्पेतुरन्तिकात् ।
सद्यो रूढव्रणानीव बलानि विपिनौकसाम् ॥ २७ ॥

विधुन्वन् शस्त्रजालानि चर्चालोन्मूलितद्रुमः ।
रक्षःपरगजक्षोभाद्गजो गैज इवोन्मदः ॥ २८ ॥

आपृच्छ्य गर्वमुत्पुच्छः शरभो रोषमूर्छितः ।
मेघनादं नभस्संस्थमक्षमोऽपि न चक्षमे ॥ २९ ॥

अपि च्छिन्नास्थिबन्धेन स्कन्धेनोन्नतकन्धरः ।
आजगाम गिरेः शृङ्गं गृहीत्वा गन्धमादनः ॥ ३० ॥

मुखेन क्षुण्णदंष्ट्रेण सुदंष्ट्रः संकुलं वदन् ।
निराकुलेन मनसा निर्जगाम जयन्निव ॥ ३१ ॥

एकेन बाहुनाऽऽदाय सुबाहुः सकलं द्रुमम् ।
ययावन्येन दधता विकलं पाणिपल्लवम् ॥ ३२ ॥

जित्वा घुसृणविच्छित्तिमशोभत पुरो भवन् ।
मुखेनालिकीलालधाराङ्केन दरीमुखः ॥ ३३ ॥

चक्षुषा विकलेनापि सर्वास्त्रग्रामवर्त्मना ।
अक्षुण्णपृष्ठः पनसः पटु गर्जन्विनिर्ययौ ॥ ३४ ॥

---

१. BC स्रज २. BC सर ३. BC रक्षापरो रराजक्षों गजराज ४. A मूर्छो D बल ५. BCD आछिन्नाखिल. ६. BC ली । ७. A वली ७. A वक्षसाविकरालाद्रिः

अपि गम्भीरनिस्त्रिंशपथद्रोणीगतोऽङ्गदः[1] ।
रेजे नदन् सिंह इव गतौ[2] हरिणतां गतः ॥ ३५ ॥

अपश्यन्नपि धूम्राक्षो बाणभिन्नेन चक्षुषा ।
मन्युना देशकेनेव तमुद्देशमुपागमत् ॥ ३६ ॥

प्रतीकैर्विशिखप्रोतैरुत्थितः प्रतिघास्पदात्[3] ।
स्खलन्वलन् शतबलिः शिलामादाय निर्ययौ ॥ ३७ ॥

न केवलं प्राणयुताः[4] प्रेतत्वमपि ये गताः ।
तेऽपि संनह्य संपेतुः श्रुत्वा सैन्यपराभवम् ॥ ३८ ॥

नातर्जयन्नचागर्जद्धैर्यमालम्ब्य केवलम् ।
ररक्ष रक्षःप्रवरो राममेव विभीषणः ॥ ३९ ॥

सुग्रीवः शोकविकलोऽप्यवलेपमुदीरयन् ।
तस्थौ युद्धरसादात्तद्विषदन्तप्रतिश्रवः ॥ ४० ॥

तेन वानरवीराणामवष्टम्भेन रावणिः ।
तत्याज नयनारम्भं रामलक्ष्मणयोस्तदा ॥ ४१ ॥

यास्यन् कृतार्थः स पुरीं नारेभे समरान्तरम् ।
नेष्यते मर्तुकामेषु निर्बन्धातिशयोऽरिषु ॥ ४२ ॥

इत्युत्सृज्य रणं लङ्कां प्रविष्टे वासवद्विषि ।
उदियाय शनैरिन्दुर्भिन्दन्नशरणं तमः ॥ ४३ ॥

आनिनाय विमानेन त्रिजटा तत्र जानकीम् ।
रामस्य तां दर्शयितुं दशां दशमुखाज्ञया ॥ ४४ ॥

तां तथा[6]ऽबोधयत्सद्यः[7] सा[8] तथा पक्षपातिनी ।
पश्यन्त्यपि यथा पत्युरत्ययं न ममार सा ॥ ४५ ॥

तौ तथोर्व्यां निपतितौ निष्पन्दौ नृपनन्दनौ ।
विलोक्य चन्द्रिकालोके विललाप कपीश्वरः ॥ ४६ ॥

---

१. A ण्यागताङ्गदः २. A गजे । ३. A घस्य ४. A युजः । ५. A तस्थौ तथैव यददान्न द्विषद्वचसि ६. BD सान्तरे C सांबरे ७. A द्रूयः ८. BC तां

अहो बत महाश्चर्यं यदनार्येण रक्षसा ।
हताविमौ तमिस्रेण सूर्याचन्द्रमसाविव ॥ ४७ ॥

भ्रमः स्वप्नोऽथ मायेयं महती पिशिताशिनाम् ।
पश्यामि यदसंभाव्यं रामलक्ष्मणयोरिदम् ॥ ४८ ॥

हा देव क्व दृशो दद्यामरिबाणाः परं पुरः ।
नास्ति क्ष्मातिलकयोस्तिलस्याप्यन्तरं तनौ ॥ ४९ ॥

धिङ्मां कृतघ्नमस्निग्धमक्षतं पापमत्रपम् ।
तयोः पश्यामि कदनं कृतमेवमरातिना ॥ ५० ॥

किमशक्ताः किमास्निग्धाः सर्वे वनचरा वयम् ।
एकं भ्रातरमादाय देव दूरं गतोऽसि यत् ॥ ५१ ॥

किं नादिशसि सौमित्रे राम किं मां न भाषसे ।
अप्रसादः कुतस्त्योऽयं युवयोरुभयोरपि ॥ ५२ ॥

अकृत्रिमैश्चाटुशतैश्चरणावयमाददे ।
केयं संप्रति सौमित्रे[1] व्यथार्यो[2]मविभागिता ॥ ५३ ॥

आमृशामि क्व हस्तेन क्व लिखामि नखैस्त्वचम् । स्पृशामि
पृच्छामि सह्यं क्व युवां प्रहृ[3]तं क्व नौ[4] शत्रुणा ॥ ५४ ॥

द्विषज्जयाय ज्यायांसं वत्स लक्ष्मण बोधय ।
मुं[5]क्त्वा नः प्रस्थितो रामः क्व सौमित्रिरनुत्त[6]रः ॥ ५५ ॥

प्रसन्ने वदनाम्भोजे जाम्बवन् जीवि[7]तः प्रभू ।
मर्म[8]स्थानेषु विशिखैर्व्याप्तेष्ववंचनौ परम् ॥ ५६ ॥

सुषेण संग्रहः कीदृक् क्वचिदास्ति प्रतिक्रिया ।
ब्रूहि सत्यं न जामाता कठिनस्ते विदीर्यते ॥ ५७ ॥

पश्यतानुगमर्यादां हे सर्वे यूथपोत्तमाः ।
अयं जीवति सुग्रीवः प्रमीतौ[10] रामलक्ष्मणौ ॥ ५८ ॥

---

१. BCP मे नाथ २. BD नाद्या ३. BC यत्कृ । ४. D शक्र ५. BC त्य ६. BCD नन्त ७, BD तुचित् ८. A वर्ण D र्म्म ९. A सौत्व १०. A वोनिर्जीवौ ।

अङ्गदाहर दारूणि दूरमेति रघूद्वहः ।
त्वया सन्दीप्यतामाशु वातपुत्र सखे शिखी ॥ ५९ ॥

मुञ्च मुञ्चाम्यहं प्राणानिदं दीर्घ[1]निमीलितम् ।
रामस्य वीक्षितुं वक्त्रनलिनं नील नोत्सहे ॥ ६० ॥

किं न संभाषसे राम किं लक्ष्मण न वीक्षसे ।
किमुज्झि[2]तः सुवदनौ सुग्रीवोऽनुगतः सखा ॥ ६१ ॥

देव देहि प्रतिवचः क्षणमुन्मील्य पश्य माम् ।
तथा वितीर्णप्रणये केयं मय्यवधीरणा ॥ ६२ ॥

हे यूथपतयो मौलाः कुलशेषोऽयमङ्गदः ।
प्राप्यतां पदमार्यस्य मयाऽनार्येण दूषितम् ॥ ६३ ॥

न शक्यतेऽतिपतितुं विचित्रा नियतेर्गतिः ।
यदुत्तीर्य महासिन्धुं निमग्नाः गोष्पदेऽधुना ॥ ६४ ॥

अहः संहृतमह्नाय निह्नुतः सहसांऽशुमान ।
नूनं तदस्मदरिणा कृतान्तेन कृतं तमः ॥ ६५ ॥

मन्ये मत्सरमाधाय विधुरद्य विलेढि नैः ।
तिरस्कृतं हि तद्बिम्बमनयोर्वदनत्विषा ॥ ६६ ॥

यो न स्खलेन्महीध्रेषु महाब्धिलहरीषु वा ।
स मे लङ्कापरिसरे समे भग्नो मनोरथः ॥ ६७ ॥

शाधि मे मरणोपायं जयाशा जाम्बवन् गता ।
मत्कर्म[4]णः फलं पश्य रामः स्वपिति शोणिते ॥ ६८ ॥

त्वमद्यैव सरिन्नाथं तार तारय यूथपान् ।
सहाभ्यामेव सुग्रीवः संस्थितः सिन्धुरोधसि ॥ ६९ ॥

इति शोचति सुग्रीवे गीर्भिः करुणकाकुभिः ।
मुक्तकण्ठः कपीन्द्राणामाक्रन्दस्तुमुलोऽभवत् ॥ ७० ॥

---

१. A दमय । २. BD किंस्तंभितः । ३. A धिरघ्याविलंबितः । ४. A नलकर्म ।

रुदितध्वनिना तेन[1] त्रिजटा संशयं ययौ ।
अतिगम्भीरमविशन्मैथिली मोहसागरम् ॥ ७१ ॥

नाजयन् कपयस्तर्हि तेषामार्तरवैः पुनः ।
स महानुत्सवाघोषः पिदधे पिशिताशिनाम् ॥ ७२ ॥

निपपात कपीन्द्राणामश्रुवर्षं तथाऽभितः ।
ममृजेऽस्त्रनदीपङ्कस्तावुभौ परितो यथा ॥ ७३ ॥

हा सुभ्रू दाशरथी सुप्रभूतगुणालयौ ।
क्षणिकं दर्शयित्वा नः स्वप्नं कुत्र गतौ युवाम् ॥ ७४ ॥

अयं योपिदिवीरेव रघुवीरौ विरोदिति ।
युवयोरायतस्वापदीनो दिनकरात्मजः ॥ ७५ ॥

मूढाविमौ राजसुतावुत लोकान्तरं गतौ ।
वत सम्यङ् न जानीमो जाम्बवन् कोन्वयं विधिः ॥ ७६ ॥

अनयोरनयो नास्ति पौरुषं पुरुषाधिकम् ।
हतौ कथं निहीनेन द्विषा दशरथात्मजौ ॥ ७७ ॥

किमेतयोरस्त्यशुभं शुभलक्षणदीप्तयोः ।
यन्मुह्यतः संयमितौ झषेन्द्राविव जालिना ॥ ७८ ॥

विचारयति नाचारं नचाकारं नच क्रमम् ।
आक्रम्य संज्ञपयति यथोत्पादमनित्यता ॥ ७९ ॥

विक्रमन्ते न सुभटाः पलायन्ते न भीरवः ।
समं द्वयेऽपि सर्पन्ति सदनं समवर्तिनः ॥ ८० ॥

अग्रे यान्ति गुणोदग्राश्चरमं निर्गुणा अपि ।
यथाहनि तथा रात्रौ वहत्येवैष दारुणः ॥ ८१ ॥

ऋक्षराज हितं शाधि स्वामिनं शोकविह्वलम् ।
नीयेतां सत्वरमिमावितः सन्दिग्धजीवितौ ॥ ८२ ॥

---

१. BCD मात्रेण । २. BC वशा । ३. B C D दिवाकान्ता । ४. B C तावुपेन्द्राविन्द्र । ५. A न तथान्द्विय ६. A रधुचैः सु

अस्ति सेतुस्तथैवासावस्ति मारुतिरक्षतः ।
को दोषः पुनरेष्यामः स्वास्थ्ये काकुत्स्थयोः सति ॥ ८३ ॥

इति वाचि कपीन्द्राणामवदज्जातवेपथुः ।
विभीषणः सूर्यसुतं शौर्यसन्दीपनीर्गिरः ॥ ८४ ॥

कोऽयं कपिमहाराज सुग्रीव समयः शुचाम् ।
नन्वाश्वासय सन्त्रासाद्विद्रवद्बलमात्मनः ॥ ८५ ॥

नूनं निदेशेन पितुर्नेतुमेताविताऽधुना ।
स राक्षसः शक्रजयी सन्नह्य पुनरेष्यति ॥ ८६ ॥

व्यवस्थापय यूथानि स्वस्थो भव जहि द्विषः ।
तर प्रतिज्ञासरितं वीर वीरव्रतं वहन् ॥ ८७ ॥

घूर्णते हरिसेनेयमनाथा समरेऽधुना ।
अम्भस्यकर्णधारेव नौरावर्तभयङ्करे ॥ ८८ ॥

सदृशं चिन्तयारम्भं किं वयस्य विरोदिषि ।
नास्ति रामप्रसादानामश्रुमोक्षेण निष्कृतिः ॥ ८९ ॥

ध्रुवं ध्रियेते नृपती निमित्तानि वदन्ति मे ।
दैवदौरात्म्यदोषेण व्यतिरेकेऽपि किं शुचा ॥ ९० ॥

विशोको भव सुग्रीव दशग्रीवो निहन्यताम् ।
अनुप्रयाताः काकुत्स्थात् प्राप्स्यामः पारितोषिकम् ॥ ९१ ॥

कपीश पश्य निपुणं प्राणैर्न रहिताविमौ ।
त्वचि त्विच्छायताऽन्या सा सद्मनः प्रोषितप्रभोः ॥ ९२ ॥

प्रहारमूर्छितः स्वामी सुभटैः प्रतिबोध्यते ।
स्वबाहुजयनिर्घोषैर्न पुनः परिदेवितैः ॥ ९३ ॥

प्रवर्तस्व महाराज राजधर्ममनुस्मरन् ।
निवर्तस्व जडक्लीबजनजुष्टादितः पथः ॥ ९४ ॥

---

१. BC सम्पा । २. दस्यद्यश्रु । ३. BC वीच जाने । ४, A बत । ५. D ताम् ।

अश्रुदुर्दिनमस्माकं किमिदं योषितामिव ।
एहि यामो गतिं शुक्लामुज्ज्वलैर्वीरवर्त्मभिः[1] ॥ ९५ ॥

पृच्छ वीरं हनूमन्तं जाम्बवन्तं च पण्डितम् ।
अपण्डित इवेदानीं किमकाण्डे विषीदसि ॥ ९६ ॥

सखे संस्तम्भयात्मानं किमाक्रन्दसि निष्फलम् ।
श्रूयते[2] रुदितैः कश्चित् निवृत्तः परलोकभाक् ॥ ९७ ॥

यौ खल्विमौ यश्च भवान् योऽहं येऽमी तवानुगाः ।
यश्चारिर्वेत्सि[3] सुग्रीव कच्चित्सर्वमनाकुलम् ॥ ९८ ॥

अविद्यायाः प्रपञ्चोऽयं नास्ति सत्यमिहाण्वपि ।
विवेचयन्ति हि बुधाः[4] विषीदन्त्यविवेकिनः ॥ ९९ ॥

नास्ति भिन्नं चितः किञ्चित्किं प्रपञ्चेन वञ्च्यसे ।
अभ्यासेन रहस्यानां वयस्य विशदो भव ॥ १०० ॥

प्रपञ्चविषया वृत्तिः[5] जाग्रन्निद्रेति कीर्तिता ।
स प्रबुद्धस्तु यस्यान्तश्चित्प्रदीपो निरञ्जनः ॥ १०१ ॥

शून्यमूलः प्रपञ्चोऽयं शून्यताशिखरः सखे ।
सारशून्यतया मध्येऽप्यनास्थाऽस्मिन्मनीषिणाम् ॥ १०२ ॥

अनादिवासनादोषादसन्नेवायमीक्ष्यते ।
गन्धर्वनगराकारः संसारो बहुविभ्रमः ॥ १०३ ॥

चितमभ्यस्य कल्याणीं कैवल्यामृतकन्दलीम् ।
संमुह्यसि किमध्यास्य वासनाविषवीरुधः ॥ १०४ ॥

जगदेतन्निपतति ज्ञानालम्बग्रहादधः ।
ते सन्त्युपरि सर्वेषा ये निरालम्बसंविदः ॥ १०५ ॥

तावद्दृढपराकारसारा संविन्महानदी ।
न यावदात्मरूपेण निपुणैरवगाह्यते ॥ १०६ ॥

१. BC ले वीरवर्त्मनि । २. A श्रुतोऽन रुदतः कस्य । ३. D वीस C वंशः । ४. A यान्तर्विशदम् ।
५. A बुद्धिः ।

प्राङ्नास्ति चरमं नास्ति नास्ति[1] सर्वमिदं सखे ।
विद्धि मध्येऽपि नास्तीति स्वप्नवृ[2]त्तसमं जगत् ॥ १०७ ॥

अविद्यायोनयो भावा[3]ः सर्वेऽमी बुद्बुदा इव ।
क्षणमुद्भूय गच्छन्ति ज्ञानैकजलधौ लयम् ॥ १०८ ॥

सुशीतलोदकनदीं विदित्वान्तर्विगा[4]ह्यताम् ।
बहिर्भ्रान्तिनिदानास्ते निर्वान्तु ज्वलिता[5]ः शुचः ॥ १०९ ॥

एकस्य[6] ज्ञानजलधेर्जगदाप्लाव्य तिष्ठत[7]ः ।
ज्येष्ठो[8]ऽयमहमित्यूर्मिरविद्यावातसंभवः ॥ ११० ॥

स विस्खलति[9] भेदालीरासाद्य[10] स्वप्नकल्पिताः ।
ममत्वोत्कलिकावर्तस्ततः स्वैरं प्रवर्तते ॥ १११ ॥

रागद्वेषाविति ग्राहौ गृहीतः समनन्तरम् ।
ततश्चानर्थपातालप्रवेशः केन वार्यते ॥ ११२ ॥

प्रशान्ताखिलकल्लोले कैवल्यामृतवारिधौ ।
मज्ज मज्जसि किं द्वैतग्रहक्षाराब्धिवीचिषु ॥ ११३ ॥

कस्तिष्ठति गतः को वा कस्य केन किमागतम् ।
किं निमज्जसि मायायां पश्य तत्त्वमतन्द्रितः ॥ ११४ ॥

तत्त्वमेकं यदात्मेति जगदेतत् प्रचक्षते ।
ततोऽन्यः कस्तवानीतो यस्तात विषयः शुचाम् ॥ ११५ ॥

बालान् प्रति विवर्तोऽयं ब्रह्मणः सकलं जगत् ।
अविवर्तिनमानन्दमास्थिताः कृतिनः पुनः ॥ ११६ ॥

अविविक्तो जनः शोचत्यकस्माच्च प्रहृष्यति ।
तत्त्ववित्तु हसन्नास्ते तस्य मोहो विडम्बनौ[11] ॥ ११७ ॥

तथा सूक्ष्ममिदं तत्त्वं तिरोहितमविद्यया ।
यथा स्थूलेषु लोकानां जातः स्वात्मसु[12] संशयः ॥ ११८ ॥

---

१. BC वस्तु २. BC त्तिमिदम् ३. BC भेदाः ४. AC वन्यनदी चिदित्यन्त ५. BD कलितांगवः । ६. BC स्या ७. BC ति ८. D ज्यु । ९. BC संविस्खलित १०. BCD गाधाश्च प्र । ११. A हविडम्बनाम् १२. A नि ।

पृथिव्यादिमहाभूतपरमाणुमयं जगत् ।
स्थितं यदा तदाऽपीह को गतो योऽनुशोच्यते ॥ ११९ ॥

असतः संभवो नास्ति नास्त्यभावः सतः सखे ।
आविर्भावतिरोभावाः संस्थानानाममी परम् ॥ १२० ॥

किं त्वमेकपुरोत्सादाद्विषादमुपगच्छसि ।
भज संचारिताभोगं परमेशं पुरान्तरे ॥ १२१ ॥

दुरितानि दशास्यस्य पच्यन्तेऽद्यापि न ध्रुवम् ।
द्रुतमेवास्य देवस्य पाशाः प्रश्लथतां गताः ॥ १२२ ॥

इमामुद्दामतमसं जित्वा सत्वबलाच्छुचम् ।
रामस्यानुसराध्वानं विशुद्धेनान्तरात्मना ॥ १२३ ॥

समाधाय क्षणं पश्य प्रत्यगात्मानमात्मनि ।
इयं विभातु सुव्यक्तं प्राग्बुद्धिरजनी तव ॥ १२४ ॥

कृतं पुरुषकारेण केवलं कर्मणे नमः ।
रामो रावणिना बाणैर्यदेवं यमितो युधि ॥ १२५ ॥

नाभिजात्यं न चारित्रं न नयो नच विक्रमः ।
बलवन्ति पुराणानि सखे कर्माणि केवलम् ॥ १२६ ॥

अनयोरप्रतीकारात् किमेवमवसीदसि ।
न लुम्पति ललाटस्थामीश्वरोऽप्यक्षरावलिम् ॥ १२७ ॥

क्वायोध्या क्व च लङ्केयं क्व रामः क्व च रावणः ।
अचिन्तनीया नियतिर्ययेदं द्वन्द्वमाहितम् ॥ १२८ ॥

हे सुग्रीव दशग्रीवं जहि स्वेनैव मुष्टिना ।
असामान्यमिदानीं ते यशो यातु परापरम् ॥ १२९ ॥

दूरमुत्सहते राजन् महासत्त्वो महापदि ।
अल्पसत्त्वो जनः शोचत्यल्पेऽपि च[1] परिक्षये ॥ १३० ॥

1. BC हि

जयः पुण्यपराधीनः प्राप्यते कृपणैरपि ।
नहि[1] शूराहृतेऽन्येन देहत्यागोद्भवं यशः ॥ १३१ ॥

बद्धौ विपक्षभूतेन[2] कर्मणा रामलक्ष्मणौ[3] ।
सुहृद्भूतेन तेनैव मोचनीयाविमौ[4] पुनः ॥ १३२ ॥

कर्मणि प्रगुणे पुंसः सर्वमेव प्रदक्षिणम् ।
तस्मिन् विगुणताभाजि भजते को न वामताम् ॥ १३३ ॥

सतां सत्कर्मसंवेगः पुराणं प्रणुदत्यघम् ।
वर्षौघ इव शैलानां दवानलशिखोच्चयम् ॥ १३४ ॥

सुखदुःखोपभोगानांमुपनामक्षणोद्धुराः[5] ।
प्रतिजाग्रति कर्तारं केवलं कर्मशक्तयः ॥ १३५ ॥

सखे संन्यस्य कर्माणि ब्रह्मणः प्रणयी भव ।
नेष्यते यदि संसारचक्रावर्तभ्रमश्रमः ॥ १३६ ॥

तावदेव विकल्पोऽयं हृदि[6] यावद्बहिर्ग्रहैः[7] ।
सर्ति[8] कूले हि कल्लोलाः केवलं निश्चलं पयः ॥ १३७ ॥

अयं किमन्धङ्करणस्त्वया शोकोऽवलम्ब्यते ।
निर्वाहयतु सैव त्वां प्रज्ञायष्टिरभङ्गुरा ॥ १३८ ॥

ते जातु न विगण्यन्ते गणनासु गरीयसाम् ।
ये तरङ्गैस्तृणानीव ह्रियन्ते हर्षशोकयोः ॥ १३९ ॥

स्वामारूढं दशादोलामहोरात्रमिदं जगत् ।
क्रीड्यते[9] षड्विधैः प्रेङ्खैः सखे कस्य विरोदिपि ॥ १४० ॥

सूते संहरति क्षिप्रं पुनः सृजति हन्ति च ।
जगन्ति बहुपर्यायः काल एव कुतूहली ॥ १४१ ॥

---

१. B C तु २. B C D कर्मणा रामलक्ष्मणौ ३. B C D द्विपद्भूतेन येनैवं ४. B C D यमितौ पुरा । ५. B खेपिशोका । CD खापशापानांपापा ६. BCD तद्विकल्पोत्थंय । ७. A र्गतः ८. C सन्ति D चलाः ९ B डते । A डन्ते ।

न विशेषग्रहः कश्चिन्न च कश्चिन्नियामकः ।
जन्तुष्वभ्यवहार्येषु प्राकाम्यं कालभोगिनः ॥ १४२ ॥

का कथा मर्त्यपिण्डानां निमेषान्तरनाशिनाम् ।
अपि देवनिकायानां कायाः कालस्य गोचराः ॥ १४३ ॥

स्वयं नृत्यसि किं भ्रातर्विलपन्विकलेन्द्रियः ।
क्षणं निश्चलमासीनः पश्य संसारनाटकम् ॥ १४४ ॥

अस्यानेकतरङ्गस्य जगतः क्षणभङ्गिनः ।
किं विषङ्गेण मनसि प्लवगेश मनागपि ॥ १४५ ॥

एवं विभीषणेनोक्तोऽप्यनिर्मुक्तमहाशुचम् ।
ऊचे सुषेणः सुग्रीवं प्रत्यग्रौपयिकं वचः ॥ १४६ ॥

दूरमाह महाराज व्यतिरेके विभीषणः ।
प्रसीद शृणु यद्ब्रूमो वयमाशंसितान्वयाः ॥ १४७ ॥

त्यज शोकममङ्गल्यं मङ्गल्यानि विचिन्तय ।
देवसाध्याविमौ देवौ विशदं वीक्षितं मया ॥ १४८ ॥

बद्धौ विषधरीभूय शरैर्यद्यपि दारुणैः ।
इमावामूलमिक्ष्वाकुनन्दनौ चन्दनाविव ॥ १४९ ॥

यद्यापीदं विघटितं शृङ्गाटकचतुष्टयम् ।
अमी यद्यपि चावर्ताश्चत्वारोऽपि शरैश्चिताः ॥ १५० ॥

सीमन्ता यद्यपि ध्वस्ताः स्रस्ता यद्यपि मातृकाः ।
सर्वायसो यद्यपीषुर्निष्कम्पोऽधिपतावयम् ॥ १५१ ॥

मग्ना यद्यपि चापुंखमंसयोर्विशिखावली ।
उत्क्षेपयोर्यद्यपि च नाराचानामयं चयः ॥ १५२ ॥

यद्यपीदं विशसितं वक्षः कक्षधरावधि ।
नाभिनालीषु नालीकाः सङ्गिनोऽमी च यद्यपि ॥ १५३ ॥

१. BCD वासि २. BCD येयेते . दुष्का ३. BC पत्तौवि ४. BCD न । ५. BC omit three lines ६. BC यद्यपीषुः सुनिष्कम्पो दृश्यते ७. A ङ्कं शङ्ख । ८. BC चक्षुर्विक्षधरादपि ।

हृत्कुशेशयमाक्रान्तं यद्यपीदं शिलीमुखैः ।
अयं यद्यपि निष्क्रान्तः सास्रपिण्डो हृकुण्डुकः[1] ॥ १५४ ॥

इन्द्रवस्तावयं यद्यप्यच्छिन्नः प्रवहोऽसृजाम् ।
यद्यप्ययं लोहिताक्षे लक्ष्यते लोहितक्षयः ॥ १५५ ॥

खानि यद्यपि सुप्तानि लुप्ता यद्यपि चेतना ।
आशीविषपरीतेषु यद्यप्यङ्गेषु नान्तरम् ॥ १५६ ॥

यद्यपि स्वापनी[2] विद्धा बृहती[3] यद्यपि क्षता ।
यद्यपीयं विपाठौघैः स्वरार्णौ सरणिः क्षता ॥ १५७ ॥

सर्वमस्न्थां विसन्धानमिदं यद्यपि दुर्घटम् ।
पाँतः पिशितपेशीनामेष यद्यपि चावनौ[6] ॥ १५८ ॥

स्नायुमर्मसु निर्मग्नाः कर्णिनो यद्यपीषवः ।
आविद्धं धमनीजालमूर्ध्वं यद्यपि जत्रुणः ॥ १५९ ॥

सप्ताग्रमपि सुग्रीव गतं यद्यपि मर्मणाम् ।
हितं तथापि जानीहि देव दीर्घायुपाविमौ ॥ १६० ॥ कुलकम् ॥

सत्यं छिन्नानि भिन्नानि क्षतानि मथितानि च ।
स्वामिन् सर्वत्र सर्वाणि मर्माणि मनुजेन्द्रयोः ॥ १६१ ॥

सद्यः प्राणहरः क्वापि क्वापि कालादिह क्षयः[9] ।
क्वचिच्च शल्योद्धरणान्मरणं मर्मणि ध्रुवम् ॥ १६२ ॥

क्वचिद्विकलतापत्तिः शस्त्रस्पर्शान्मनागपि ।
केवलं क्वापि मूर्छन्ति महाराज महारुजः ॥ १६३ ॥

सत्यं तन्मर्त्यमात्रेषु शल्यतन्त्रे निदर्शितम् ।
मर्त्यातिशययोः स्वामिन्ननयोस्तत्पुनः कथम् ॥ १६४ ॥

पश्य नासागतिः सैव सैव मुद्रा दृशोरियम् ।
सैव घोरप्रहारेऽपि च्छाया काऽप्यनपायिनी ॥ १६५ ॥

---

१. B शास्रपिण्डोघदुन्दुकः । D हृदुन्दुकः २. A स्थ । ३. B धमनी ४. AC द्रोघैस्तरुणे ५. A प्रातः C पो । ६. A धिकौ । ७. B मू । ८. A क्ष । ९. BC व्ययः D व्यथः ।

देवद्विजगुरुश्रद्धाभरबन्धुरचेतसाम् ।
सदागमप्रमाणानामकालमरणं कुतः ॥ १६६ ॥

रिष्टशून्यतयाऽनिष्टं पश्यामो न मनागपि ।
उत्थास्यति सह भ्रात्रा रामो नूनमनामयः ॥ १६७ ॥

आसन्नरात्राद्द्विपजां सद्यः प्राणहरेष्वपि ।
अस्ति मर्मप्रहारेषु प्लवगेश प्रतिक्रिया ॥ १६८ ॥

अहं भिषक् सहायस्त्वमातुरौ रामलक्ष्मणौ ।
दूराण्यपि न दूराणि भेषजानि च मारुतेः ॥ १६९ ॥

भव्यानां स्वयमायान्ति भिषजो भेषजानि च ।
अनयोर्विषवेगेऽस्मिन् वीक्षे तार्क्ष्यमुपागतम् ॥ १७० ॥

सन्ति सुप्तकचिह्नानि नैवास्ति व्यसुलक्षणम् ।
न चाकृतिविशेषाणामीदृशामीदृशं भवेत् ॥ १७१ ॥

इयं विभातु रजनी द्रष्टाऽसि विरुजाविमौ ।
धान्वन्तरीया हि वयं मा स्म गाः सिद्धिसंशयम् ॥ १७२ ॥

श्रूयते हि शिरश्छिन्नं सप्ततन्तोः पिनाकिना ।
सद्यः संहितमश्विभ्यां तत्र तद्भागतोषिते ॥ १७३ ॥

सुरारिभिः शकलितो बृहस्पतिसुतः कचः ।
संजीवितो भगवता भार्गवेण पुनः पुनः ॥ १७४ ॥

देवासुराः समीकेषु मिथः शस्त्राग्निसंस्थिताः ।
सद्यः समीयुरसुभिः प्रभावात्स्वःपुरोधसः ॥ १७५ ॥

इति वदति सुषेणे संपपातान्तरिक्षा—
दमृतपृषतजालैर्दुर्दिनं दिक्षु तन्वन् ।
प्लवगपतिसुगुप्तौ सुप्तकावन्तरा तौ
विषधरकुलशत्रुर्विष्णुपत्रं पतत्री ॥ १७६ ॥ विष्णुवाहनम् ।

युगपदथ विशल्यौ कल्पकायावुभौ तौ
विगतभुजगपाशौ तस्य पक्षानिलाभ्याम् ।
बलवति बलमानौ संभ्रमे वानराणां
किमिदमिति कपीन्द्रं सोत्सुकौ पृच्छतः स्म ॥ १७७ ॥

इत्यभिनन्दकृतौ रामचरिते महाकाव्ये नागपाशपरि-
भ्रंशो नाम एकत्रिंशः सर्गः ॥

---

जाते युवामतिचिरान्नयने कृतार्थे कर्णे निपिक्तममृतं युवयोश्चिरेण ।
त्रिंशादयं ( सुकृतिनां बहुमानहेतुः ) दृष्टोऽद्य यच्चिरमयं युवराजदेवः ॥



# द्वात्रिंशः सर्गः ॥



दृशः प्रसर्पत्ततिभिः क्षणार्धं रुन्धानमाकल्पमणिप्रभाणाम्[1] ।
दिशश्च लिम्पन्तामिव प्रदीर्घनिर्हारिणा लेपनसौरभेण ॥ १ ॥

मूर्छद्भिरन्योन्यमनेकवर्णैर्घनाविलेऽह्नीव सहस्रभासम् ।
तन्वानमिन्द्रायुधजालमुस्रैरुष्णीपकक्षाङ्गदनायकानाम् ॥ २ ॥

कण्ठेन वज्राङ्कितनिष्कलक्ष्यं महेन्द्रसन्देशमिवोद्वहन्तम् ।
तमांसि मुक्तालतया हरन्तमुपेन्द्रभक्त्येव हृदि स्फुरन्त्या ॥ ३ ॥

चन्द्रातपेनेव सुधासमुद्रं संवीतमर्चिःशुचिनांऽशुकेन ।
विराजमानं मणिकुण्डलाभ्यां श्रुतिस्मृतिभ्यामिव धर्मकार्यम्[2] ॥ ४ ॥

दिव्याकृतिं दिव्यविलासभाजमुद्भासिदिव्याभरणप्रवेकम्[3] ।
अनुद्धतैः[4] संविहितावधानं दिव्यैश्च शब्दादिभिरिन्द्रियार्थैः ॥ ५ ॥

सह्यानुयोगोपनतं ददर्श रामः समं संमदिनाऽनुजेन ।
तमग्रतः कीर्णसुवर्णगौरच्छदप्रभामण्डलमण्डजेशम् ॥ ६ ॥ कुलकम् ॥

अनेन सद्यो विशदीकृतौ स्वः क एष नो बन्धुषु नाकवर्ती ।
उपक्रियायाः सदृशं विधेयं किमावयोरित्युभयं ललज्जे ॥ ७ ॥

तमानतं संनतिभिर्विशेषादुत्थापयन्विस्मृतपूर्ववृत्तम् ।
अवोचताधोक्षजमल्पमेव रामाभिधानस्थगितं गरुत्मान ॥ ८ ॥

प्रसीद गच्छामि नमो नमस्ते समस्तलोकप्रभवेऽच्युताय ।
गृहाण मां क्षिप्रमहं त्वदीयः सह्याय ते सत्वरमागतोऽस्मि ॥ ९ ॥

रक्षःपतेरिन्द्रजिता सुतेन स्वाराधितोऽभूद्वरदो विरिञ्चिः ।
ददौ स तस्मै भगवान् द्विजिह्वान् जगत्प्रमाथोदयलालसाय ॥ १० ॥

तेनैव नाथ प्रथमं निसृष्टः सृष्टिस्थितिप्रक्षयकारणेन ।
देवेन देवासुरदुस्सहानामहिव्रजानामहमत्ययार्यं ॥ ११ ॥

१. B भिः २. A मनां ३. BCD कर्णिका ४. B य ५. A प्लुवैः CD प्लुतै ६. A संक्षिप्त ७. A भुजङ्गान् तातप्रसादोजय । ८ A मित्युपाय: ।

साध्या मयैते[1] नियतेः प्रभावान्न तु त्वदस्त्यभ्यधिकं[2] ममौजः ।
स्थितानि मय्यप्यधुना तवैव रजांसि पादाम्बुजयोर्जयन्ति ॥ १२ ॥

स्मरात्मनः साधय देवकार्यं तवाजिभाजः क इमे[3] पिशाचाः ।
त्यजार्जवं जिह्मतमेष्वमीषु जहि प्रकारैः कुटिलैरपीमान् ॥ १३ ॥

इत्यूचिवानुत्सुकितप्लवङ्गो[4] विहङ्गमेशः सहसोत्पपात ।
दिव्यस्रगालेपनगन्धपुण्यश्चिरात्तदङ्गप्रभवो नभस्वान् ॥ १४ ॥

रामस्य तेनाभ्युदयाद्भुतेन ववल्गुरुच्चैः कपयः प्रतीताः[6] ।
ततश्चिरात् खेचरचारणानां कोणाहता दुन्दुभयो निनेदुः ॥ १५ ॥

महोत्सवः संमदगीतवाद्यैः मुमूर्छ शोकानुपदं कपीनाम् । °जनद इति पाठः।
हर्षावसाने च विषादमूकं बभूव लङ्कापुरमेकदैव ॥ १६ ॥

जाताद्भुतैर्यामिकयातुधानैरनक्षरावेदितसंभ्रमस्य ।
विवेश रक्षोऽधिपतेः श्रवांसि स वानराणां प्रमदप्रघोषः ॥ १७ ॥

पप्रच्छ स भ्रूकुटिसान्धकारमुखावलिर्मूलसदः क एषः ।
विलापकाले महकेलिशंसी रवो महान्वानरवाहिनीनाम् ॥ १८ ॥

चरैश्चिरेणाधिगतप्रवेशैर्निवेदितार्थः सुचिरं जुघूर्णे ।
संवृत्य चाकारमुपेतमग्रे जगाद धूम्राक्षमनीकिनीशम् ॥ १९ ॥

हन्ताऽस्मि तं साहसिकं विहङ्गं[10] त्वं भुङ्क्ष्व कोलाहलिनः प्लवङ्गान् ।
[11]हरोत्थितां मूर्धरुजं ममेमां धूम्राक्ष विश्राम्यतु मेघनादः ॥ २० ॥

स निर्जगाम क्षणदावसाने निजावसानाय हनूमतोऽङ्कम् ।
क्रव्यादवीरैर्विकृतै[12]ः परीतो मृत्युः परेतैरिव रुद्रमूलम् ॥ २१ ॥

पपात[13] पश्यन्ननिमित्तजातं स पश्चिमं द्वारमनीकिनीशः ।
ददर्श चामर्षविकूणिताक्षो वलीमुखाद्भुतविभूतिमग्रे ॥ २२ ॥

असावमार्गन्मृगवाहसूनुं न प्रार्थयामास वनौकसोऽन्यान् ।
विशोभते शाखिनि दीप्यमानस्तृणे घृणाकारिणि को दवाग्निः ॥ २३ ॥

१. BC मै । २. BC स्त्रा । ३. BC किममी । ४. D प्रयोगो । ५. BC आसीच्चि । ६. BC वीराः
७. B वानराणाम् । ८. BC सउ ९. D पनुदः । १०. नंङव । ११. D हीनो । १२. BCD कचैः
१३ A प्रापद्य D पुरःप्र । B व्रजन्न

मुमूर्छ युद्धं घनगुल्मभाजामसृग्भुजां वानरवीरवृन्दैः ।
फणाधराणामहिसत्त्वमानो[1]मुत्पुच्छदण्डैर्नकुलैः सहेव ॥ २४ ॥

क्वाप्यस्त्रपाः क्वापि परं प्लवङ्गाः क्वापि द्वये तुल्यबलोपपन्नाः ।
तेषां निवेशो विषमः स जन्ये भस्मार्चिषां क[2]क्ष इवाविरासीत् ॥ २५ ॥

सशक्त[3]यः शक्तिगदाशुगानां व्ययं वितेनुर्विपुलं पलादाः ।
त्यागेन जिग्युर्गुरुणा गिरीणां तं लाघवेनोपनतं फलादाः ॥ २६ ॥

निघ्नन् कपिं[4] वक्षसि तोमरेण निर्मत्सरेणाम्बरतोऽमरेण ।
स्तुतोऽस्त्रपः[5] सोढदृढप्रहारे मुक्ताः स्रजोऽन्यत्र च दीप्रहारे ॥ २७ ॥

क्षुण्णो गमिष्यत्यधुनाऽरिमांसैः क्षुण्णोऽयमोघः सकलः कपीनाम् ।
रक्षोभटाः स्वैरमिति प्रहासैरक्षोभकृष्टासिलतास्तदोचुः ॥ २८ ॥

स्वैरं जहासैव ययौ न दैन्यं स्वैरङ्गभेदैः सुभटः पतद्भिः ।
ममारयो विश्वमिदं बतेति[6] ममार दृष्ट्वैव समित्यसत्त्वः ॥ २९ ॥

तेरुः कपीन्द्राश्चिबुकाग्रदघ्नीरुदाननाः शोणितपूरसिन्धूः ।
निर्वाह्यते स्म क्षणदाचरेन्द्रैः दृ[7]ष्ट्वा यशोबान्धवपूरसिन्धूः ॥ ३० ॥

तुरङ्गमातङ्गरथाङ्गपत्तिसंपत्तिसंमर्दसमुद्धृतेन ।
कृत्स्नाम्बरस्वीकरणोद्धुरेण भूरेणुनार्चिर्द्युमणेः प्रणुन्नम् ॥ ३१ ॥

निगीर्य निःशेषमथ प्लवङ्गानङ्गेष्वनिर्ज्ञातगिरिप्रहाराः ।
स्वमप्यमश्नन् पृतनावशेषमसृग्भुजः शोणितगन्धमत्ताः ॥ ३२ ॥

विभूषणैः स्रग्भिरसृग्भिरङ्गैरन्त्रैरुरःपद्मदलैः पलैश्च ।
आदेहपाताद्भटयोः कयोश्चिदावर्ततायोधनमायुधान्ते ॥ ३३ ॥

ऋक्षव्रजे वृक्षमृगव्रजे वा न प्राप रोपस्थगितेऽवकाशम् ।
सुखं निविश्याश्मनि कण्ठभाञ्जि पपौ शिवाऽसृञ्जि निशाचराणाम् ॥ ३४ ॥

उत्तेजसा रामबलेन विष्वग्विलुप्यमानाऽरिपताकिनी सा ।
छायेव सङ्कोचमगान्निदाघे मध्यन्दिनार्कद्युतिमण्डलेन ॥ ३५ ॥

---

१. ACD णोद्धुराणां परिमण्डला २. A ज. ३ A साम्रा A सान्द्रो । ४. BCD विद्धः कपिः
५. CD स्तुताम्रपाः । ६. BC मुदश्चतेति । ७ A कृ ।

साऽप्यञ्जनासंभवसिन्धुवर्जे विष्फूर्जदुग्रायुधरश्मिजाले ।
शेषं प्लवङ्गध्वजिनी जगाम धूम्राक्षनाम्नि क्षयधूमकेतौ ॥ ३६ ॥

स राक्षसव्यूहपतिस्तदानीं परात्मकीलालसुराप्रमत्तः ।
प्रणुद्य शाखामृगपुङ्गवौघान् मरुत्तनूजैकमृगेन्द्रमीये ॥ ३७ ॥

तयोस्तदानीं तुमुलारवोर्मिरभ्यागमत्संयति संप्रहारः ।
पर्यन्तलीनात्मबलावशेषपर्यायनिध्यातजयावसादः ॥ ३८ ॥

तस्यां तथैव प्रतिरुद्धदिक्षु रक्षः शिलावृष्टिषु वातसूनोः ।
असौ तदीयास्वपि नावसादमगादगाधासु शरापगासु ॥ ३९ ॥

निर्वाप्यते स्म प्रसभं स वायोः सुतेन रक्षःपृतनैकदीपः ।
भेजुर्भयध्वान्तजुषः कथंचिच्छेषाः स्खलन्तो दशकण्ठमूलम् ॥ ४० ॥

आश्वास्य तानद्भुतशक्तियुक्तं न्ययुङ्क्त नक्तञ्चरचक्रवर्ती ।
कर्तुं कपीनां सपदि प्रकम्पमकम्पनं नाम निशाचरेन्द्रम् ॥ ४१ ॥

मुमूर्छ भूयः कपिराक्षसानां रणस्तथाऽद्रिद्रुघणायुधानाम् ।
यथा स मुग्धार्भकरेणुयुद्धक्रीडेव धूम्राक्षवधः प्रतीये ॥ ४२ ॥

संशप्तकानां समरस्ततोऽभूदभूतपूर्वः कपिराक्षसानाम् ।
अन्योन्यनिर्ग्रन्थनदीक्षितानां देवासुराणामिव पूर्वकल्पे ॥ ४३ ॥

प्लवङ्गमाः सङ्गरसीम्न्यगाधान् घूर्णोन्मुखास्तैरसृक्पयोधीन् ।
जिह्वाग्रलीढोर्मिशिखाः सुदूरमसृग्भुजस्तेषु तृषा ममज्जुः ॥ ४४ ॥

परस्परं प्रापुरथावसानमनुप्लवौघाः पृतनाधिपत्योः ।
तावक्षिपातां परमेकशेषौ दवानलप्लुष्टवनाविवाद्री ॥ ४५ ॥

अलं न नेतुं हनुमन्तमन्तं कृतान्तकल्पोऽपि स यातुधानः ।
चक्रे न वातप्रभवः प्रकम्पमकम्पनस्यापि स च प्लवङ्गः ॥ ४६ ॥

वेगोद्धृतेन प्रधनाङ्गणान्तात्ततस्तटित्कारविडम्बरेण ।
अताडयत्तं तरुणा हनूमानिरंमदेनेव तरुं तटित्वान ॥ ४७ ॥

---

१ BC. द्य २. A शंसु । ३. A सौत्तु ४. A मः सागम ५. A र्वा । ६. BC तु ७. A वक्षिप्येताम्.

विनीय वेगं शिरसि व्यथायास्तथैव तस्थौ स निशाचरेन्द्रः ।
जुहाव हेतीः सकलाः क्रमेण सामीरणौ कारणमन्तरेण ॥ ४८ ॥

तं मुष्टिना वक्षसि निष्ठुरेण निष्ठामनैषीत्पवनाङ्गजन्मा ।
क्षतैस्तथा न क्षतजाशनोऽसौ ववाम वक्त्रेण तदा यथाऽसृक् ॥ ४९ ॥

मुहूर्तमुद्दीप्य ययुर्विनाशं रणानले यातुजतूनि तानि ।
एकः परं तत्र चिरं रराज प्राभञ्जनिः काञ्चनकूटकल्पः ॥ ५० ॥

निःशेषितारातिबलो हनूमान् हरीश्वरं येन ययौ तदानीम् ।
अकम्पनोदन्तहरः कपीनां जयप्रघोषः स विवेश लङ्काम् ॥ ५१ ॥

साऽघूर्णयद्दीर्घमधीश्वरं पूरकम्पनव्यापदि कम्पमाना ।
विश्वम्भरा मेरुमिवावसानकालानलध्वस्तकुलक्षितीध्रा ॥ ५२ ॥

तां वज्रपातप्रतिमां प्रवृत्तिं वज्रोपलौहार्यदृढो दशास्यः ।
विपद्य वित्रासितवज्रपाणिमुवाच वाणीमिति वज्रदंष्ट्रम् ॥ ५३ ॥

त्वया पुरोगेण मया मघोनः पृष्ठं सुदृष्टं समराङ्गणेषु ।
सितेतरं वर्त्म च भीतिवेगान्न भूतियोगादनुभूतमग्नेः ॥ ५४ ॥

तवासिपाशैर्वरुणो वराकः काकोऽन्तकः सज्यशरासनस्य ।
करालदंष्ट्राकलिताननस्य त्रैलोक्यमेकः कवलः किमन्यत् ॥ ५५ ॥

सत्वं महत्त्वं प्रथयन् स्वदोष्णोरत्युष्णमेव ध्वजिनीसमग्रः ।
छलाद्बलाद्वा कुरु वानराणां निष्कम्प्य निःशेषवधात् प्रियं मे ॥ ५६ ॥

प्रोत्साहितं पङ्क्तिमुखेन रक्षस्तत्क्षिप्रमेवाजिखलं जगाम ।
आतिथ्यमस्योरुभिराद्रिवर्षैः स्वयं कपीनामधिपेन तेने ॥ ५७ ॥

समीयुरन्योन्यमथ ध्वजिन्यो मम्रुर्न तूर्यध्वनयः ककुप्सु ।
ननाश रेणौ सरणिः सुराणां मही ममज्ज क्षतजैकसिन्धौ ॥ ५८ ॥

सा वज्रदंष्ट्रेण कपीन्द्रसेना ततः शुनोरभ्रपरम्परेव ।
आहार्यते स्माशरणं द्रवन्ती देवेषु हाहेति करान् धुवंत्सु ॥ ५९ ॥

१. BD यासमा २. D शरा ३. BCD तोपेत ४. BC मा ५. B मथ ६. ABC निष्कम्पशेषस्य ७, BC श ८. BCD रंहस्वि ९. D राच १० BCD रैधुनानाः ।

मा भैष्ट भोस्तिष्ठत वानरेन्द्राः कोऽयं रिपुर्वो मृतकामिषादः[1] ।
इत्यूचिवानुष्णमयूखजन्मा धामद्वितीयो बलमाललम्बे ॥ ६० ॥

अनेकसंमर्दसहानपि द्राक्[2] कपीन्द्रकायान् स निशाचरेन्द्रः ।
टसीत्[3]यभाङ्क्षीत् कमलाकरस्थो मृणालदण्डानिव कुञ्जरेन्द्रः ॥ ६१ ॥

तस्थौ परं भास्करसूनुरेकः तन्वन्परानीकमनोकहौघैः ।
चकर्त कार्तस्वरचित्रपुङ्खैस्तानस्रपोऽर्धेन्दुमुखैः पृषत्कैः ॥ ६२ ॥

रोम्णोपि रक्षोवपुषि क्षतिं ते नगा न चक्रुः कपिराजमुक्ताः ।
न लेभिरे लाघवशालिनोऽङ्गं प्लवङ्गमस्यापि शराः सुरारेः ॥ ६३ ॥

सालेषु तालेषु च निष्ठितेषु तलेन राजा युयुधे कपीनाम् ।
दंष्ट्राभिरुत्सृष्टसमस्तहेती रक्षः प्रतीयेष तमङ्कभाजम् ॥ ६४ ॥

वितेनतुर्दारुणदेहयुद्धौ तौ द्वावपि द्वापरमव्यवस्थम् ।
नादर्शि दंष्ट्रासु रिपोः क्षणार्धं यत्सत्यमादित्यसुतस्तदानीम् ॥ ६५ ॥

ततोऽवलोकं द्विगुणं वितन्वन् विलम्बनिष्कासि[4]तवक्त्रबिम्बः ।
विनिर्ययावभ्रपिशाचवक्त्रादभीशुमालीव वलीमुखेन्द्रः ॥ ६६ ॥

जग्राह संग्राहयुगेन भूयः करावरेः सोऽन्तिकमभ्युपेत्य ।
असावपि व्यर्थि[5]ततद्विबन्धो बन्धान्त[6]रेण द्रुतमग्रहीत्तम् ॥ ६७ ॥

अवञ्चयच्चञ्चलताबलेन वलीमुखेन्द्रः करणानि शत्रोः ।
कराङ्घ्रिलाङ्गूलविलोलनानि स्था[7]न्नैव रक्षोऽपि रिपोरपास्थत् ॥ ६८ ॥

समाप्य रक्षोऽर्थं गुरूपदिष्टान्नियुद्धमार्गानखिलानुदास्त ।
कपिः स्वक्लृप्तेन[8] पथा जिगाय जयाभ्युपायः प्रतिभा[9] निजैव ॥ ६९ ॥

वमन्नसृङ्निर्गतनेत्रजिह्वः स विह्वलो भूमितलं[10] जगाम ।
निशाचरः सूर्यसुतेन दोर्भ्यां दृढं निपीड्य प्रतिमुक्तकण्ठः ॥ ७० ॥

वनौकसां प्राप जयप्रघोषः स दाशरथ्योः श्रवणातिथित्वम् ।
ययौ तदा सत्वरमस्रपाणां सारंविणं रावणकर्णमूलम् ॥ ७१ ॥

---

१. BCD दिखादः २. A विप्राक्, ३. C खिसि ४. A निबद्धनिष्कासित ५. BCD व्युज्झित
६. D वधा ७. BCD ना ८. BC प्ति ९. D मा १०. BC लं भूतलमाजगाम.

अथ प्रहस्तस्य दिशं दशास्यो दशस्वपि ध्वान्तवतीषु दिक्षु ।
ददर्श देवासुरसङ्गरेषु विशेषसंपत्कथितात्मधाम्नः ॥ ७२ ॥

प्राप्तप्रकर्षोऽधिगतप्रमोदः[1] प्रणामपूर्वं लसता मुखेन ।
जगाद रक्षःसदसि प्रहस्तः पौलस्त्यमग्राग्रविपद्विहस्तम् ॥ ७३ ॥

किं नाथ खिन्नोऽसि गताः कियन्तः सन्ति प्रवीराः परितः शतं ते ।
विस्रब्धमाज्ञापय कः करोतु पर्यन्तमाजौ नरवानराणाम् ॥ ७४ ॥

यदि प्रसादः सुकृतानुभावान्मय्यस्ति भृत्यावयवे तवाद्य[2] ।
तदुच्यतामुत्सुक[3] एष बाहुः[4] कालाद्धहोर्मे बहुषु प्रहर्तुम् ॥ ७५ ॥

लब्ध्वा स भर्तुः सदृशं निदेशमोमित्युदीर्य प्रमनाः प्रतस्थे ।
आसन्नसन्नद्धबलः सगर्वं पूर्वेण लङ्कापुरगोपुरेण ॥ ७६ ॥

तस्याव्रजत्कुम्भहनुः[5] पुरस्ताद्धुरन्धरस्तस्य रथं ररक्ष ।
प्रसस्रतुस्तस्य परीत्य पार्श्वे समं महानादसमुन्नदौ च ॥ ७७ ॥

अन्येऽपि नानावयवप्रकाराः कारानिकेतोपितनाकिदाराः ।
तस्याग्रतो वारणवाजिपत्राः प्रतस्थिरे राक्षसवीरपुत्राः ॥ ७८ ॥

शतं विकेशाः शतमग्निकेशाः शतं विधूमानलसंनिभास्याः ।
शतं मुहूर्तद्युतिलोलजिह्वाः शतं दरीदारुणवक्त्रमूलाः ॥ ७९ ॥

शतं सितासिच्छुरिताग्रहस्ताः शतं शतघ्नीरभितः सृजन्तः ।
शतं गृहीताङ्कुशपाशदण्डाः शतं शितासिद्युतिदुर्निरीक्षाः ॥ ८० ॥

शतं रथैरश्वखरोष्ट्रधुर्यैः शतं श्वगोमायुपिशाचपृष्ठैः ।
शतं मनुष्यैः शतमङ्गनाभिः शतं धरित्र्या शतमम्बरेण ॥ ८१ ॥

सहस्रमस्रोक्षितविग्रहाणां सहस्रमन्त्रावलिमेखलानाम् ।
सहस्रमभ्यग्रशवध्वजानां सहस्रमग्रेसरफेरवाणाम् ॥ ८२ ॥

लक्षाणि लाक्षारुणवीक्षणानां कोट्यः कटार्चिर्हरिमूर्धजानाम् ।
पद्मानि दंष्ट्राविकटाननानामुल्कामुखानामभितोऽर्बुदानि ॥ ८३ ॥

---

१. BC र्षोधिक्रम २. B तस्व ३ BC त्सव ४. BC होः । ५ D स्माङ्गजन् ।

रूढारुणश्मश्रुजटाटवीकाः सृक्वान्तनिष्क्रान्तकठोरदंष्ट्राः ।
मिथोऽपि यत्सत्यमयुर्विशङ्कां प्रहस्तनासीरनिशाचरास्ते ॥ ८४ ॥

मदोच्चलद्धोरै[1]तरारवोर्मिराडम्बरस्तूर्यकदम्बकानाम् ।
घनप्रतिश्रुद्वलयो[2] विरिञ्चेः कथंचिदण्डं न तदा[3] बिभेद ॥ ८५ ॥

तमापतन्तं विकटैर्बलाङ्गैर्विदुद्रुवुर्वीक्ष्य वनौकसस्ते ।
निनाय ताननिसुतः कथंचिद्दिवौ[4]कसः स्कन्द इवाभिजम्भम्[5] ॥ ८६ ॥

प्रहस्तगुप्ताः पिशिताशिनस्ते विश्वस्तमीयुः समरस्थलीं ताम् ।
स्ववीर्यविस्रम्भनिराकुलस्य नीलस्य मूलं हरयः परीयुः ॥ ८७ ॥

रक्षोभटाः प्रष्ठभटान्तराले नीलस्य नालं मुखमीक्षितुं ते ।
मनोरथेनापि रथोपशल्यं प्रापुः प्रहस्तस्य नच प्लवङ्गाः ॥ ८८ ॥

ते निर्विपङ्[6]क्तिप्रसरास्तदानीमादित्यवर्णाः समरस्थलीषु ।
यूथानि शाखामृगयूथपानां रथव्रजाश्चुक्षुदुरस्रपाणाम् ॥ ८९ ॥

ममर्द नीलस्य महीध्रवृष्टिर्महारथानस्रभुजः समस्तान् ।
पेतुः प्रहस्तस्य विभिद्य यूथं शिलीमुखाः प्रष्ठवलीमुखानाम् ॥ ९० ॥

ते मार्गणाः काननगोचराणां वपूंषि निर्भिद्य जवेन जग्मुः ।
मार्गागतानीव जनङ्गमानां द्विजातिसार्थाः पुटभेदनानि ॥ ९१ ॥

रथान् रथैर्मत्तगजान् गजेन्द्रैर्हयान् हयैरस्रभुजोऽस्रभुग्भिः ।
निष्ठां गतेष्वद्रिषु रोषवेगाज्जघान वैश्वानरदेहजन्मा ॥ ९२ ॥

ता नासयस्ताँश्च शिता न धारास्ताः कोटयो न द्विजपाणिजानाम् ।
प्रापुः प्लवङ्गं प्रविशन्तमाजावकण्टकं सङ्कटमस्रपाणाम् ॥ ९३ ॥

रणाङ्गणं तत्कपियातुधानैराकीर्णमप्येकपदे तदानीम् ।
विविक्तमासीत् प्रतिसंनिपातं तयोर्द्वयेषां सहसाधिपत्योः ॥ ९४ ॥

तस्तार हस्तद्वितयप्रकर्षात् पृषत्कवर्षैः प्लवगान् प्रहस्तः ।
नीलश्च लाङ्गूलशिखाञ्चलेन खं छादयामास जयोद्धुतेन ॥ ९५ ॥

१. BC द्वीर २. A यी ३. A था ४. A द्वनौक ५. A म्बम् ६. A शङ्क ७. A स्तारायितास्ता BC तेनासय । ८. AD क्टम् ।

बभञ्ज पत्त्राणि जहार शस्त्रं नाहन्यत क्वापि जघान सर्वम् ।
एकः परं तत्र चिरं चकाशे[2] नीलो रिपुष्वाहितकालधर्मः ॥ ९६ ॥

पपात संयद्भुवि पातयित्वा कपीन्द्रकोटीः कटकप्रसिद्धः ।
प्रहस्त इत्युच्चलितप्रतापः स दक्षिणो राक्षसराजहस्तः ॥ ९७ ॥

तस्मिन्महीयसि निशाचरनीडशाखि-
न्युन्मूलिते समिति नीलमहानिलेन ।
चक्रुर्महाकलकलं महता भयेन
ते गृध्रकौशिकमुखाः पिशितादसङ्घाः ॥ ९८ ॥

तमनलतनुजन्मा वानरः पातयित्वा
समरमपरमुक्तैराचितः पारिजातैः ।
स्वबलनुतिनिषेधव्यग्रपाणिर्जगाम
प्लवगपतिसकाशं केसरैः स्वेददष्टैः ॥ ९९ ॥

इत्यभिनन्दकृतौ रामचरिते महाकाव्ये धूम्राक्षाकम्पन-
वज्रदंष्ट्रप्रहस्तप्रमुखमहायोधवधो नाम
द्वात्रिंशः सर्गः समाप्तः ॥



१. BCD यन्त्रा २. BC पुरश्चकास ।

# त्रयस्त्रिंशः सर्गः



हालेनोत्तमपूजया कविवृषः श्रीपालितो लालितः
ख्यातिं कामपि कालिदासकृतयो नीताः शकारातिना ।
श्रीहर्षो विततार गद्यकवये बाणाय वाणीफलं
सद्यः सत्क्रिययाऽभिनन्दमपि च श्रीहारवर्षोऽग्रहीत् ॥

---

श्रुतमातुलमृत्युमीयिरे सचिवाः पङ्क्तिमुखं शुचाऽऽकुलम् ।
अवलोक्य चिराच्चिरागतानथ निश्वस्य जगाद तानसौ ॥ १ ॥

बत सत्यममी वदन्ति यत्पृतनेशस्य रणाङ्गणागताः ।
अपि वाग्विषयं समर्थयेत् कलभेभ्यः क इवात्ययं हरेः ॥ २ ॥

जयतीह विधिर्न पौरुषं त्रिदशानां विजयो यदाहवे ।
निहतः स हुताशसूनुना कपिकीटेन ममाद्य मातुलः ॥ ३ ॥

श्रमयामि वृथा वरूथिनीः किमभूदैवबलात्कृता इव ।
स्वयमेव समुत्क्षिपन् कपीन् कुपितः संज्ञपयामि तापसौ ॥ ४ ॥

अधमेऽपि रिपौ महीयसः सुधियः शासति यानमात्मना ।
यशसि स्वभुजैकसाधने परहस्ताश्रयणं प्रमादिता ॥ ५ ॥

रिपुरल्पमुखोऽपि धीमता न विषह्यो विसरन्विसर्पवत् ।
जनयत्यवलेपमूर्च्छितः स हि पीडां सकलाङ्गगामिनीम् ॥ ६ ॥

वदतौपयिकं समन्ततः प्लवगोत्थं कथमाशु भिद्यताम् ।
अधुनाऽपि समर्थ्यतां पुनः पणबन्धे सघृणो दशाननः ॥ ७ ॥

इति वाचमुदीर्य संसदि स्थितवन्तं विनयादिव क्षणम् ।
जगदुर्जगदेकविद्विषं तममात्याः स्तुतिपूर्वकं वचः ॥ ८ ॥

जितवानसि राक्षसेश्वर ध्वजिनीं तां मरुतामपीशितुः ।
हरयः समराङ्गणाद्दिशो गमिताः शुष्कदलोत्करा इव ॥ ९ ॥

---

१. D कव २ D मां ३. B शः प्रहतः प्लवङ्गमैः । C शः स्मरणं रणागतः । D स्समराङ्गणे हतः ४. A ई ५. BD श ६. BC किमि । ७ A नपुन C किमहं D यदम ८. A नीनां मरुतापि यस्यते ।

समरे समरे वनौकसस्त्वदनीकैर्निहताः सहस्रशः ।
क्रियतामपि रक्षसां वधे विधिदोषात् किमिदं विषीदसि ॥ १० ॥

तव शक्रजिता सुतेन ताविषुरूपैरहिभिर्निषूदितौ ।
यदि नागरिपोस्समागमात्कथमप्युच्छ्वसितौ ततोऽपि किम् ॥ ११ ॥

युवराट् सहि देवं दीप्यते स गतः पत्ररथो यथागतम् ।
निरपत्रपयोः पुनस्तयोरसवः पादतले लुठन्ति नः ॥ १२ ॥

प्रिययोधसमुद्भवाः शुचः सुचिरं चेतसि चेत् प्रतिष्ठिताः ।
प्रयतस्व तदद्य सन्धये न रणो बन्धुपरिक्षयं विना ॥ १३ ॥

अनुपालय वीर पुत्रकानपरित्राः कुरुषे किमङ्गनाः ।
परिगृह्य स यातु मानुषीं मनुजस्त्वत्तनुजेषु जर्जरः ॥ १४ ॥

स्वजनैः समवैतु मानुषीं भजतु त्वामनिशं विभीषणः ।
क्रियतां सदृशं न शोभते विसदृक्संश्रयणं तयोरिदम् ॥ १५ ॥

इयमुन्नतरत्नगोपुरा नगरी नाथ न शोभते तव ।
अनिमित्तहतर्क्षवानरव्रजबीभत्सतमोपनिर्गमा ॥ १६ ॥

बहवोऽद्य निशाचरा हताः कथिताः केवलमुत्तमास्तवं ।
अवशेषय नाथ बन्धुतामनुबन्धः समरस्य मुच्यताम् ॥ १७ ॥

अयमात्मपुरे कदा नु ते करुणः कर्णपथं समागतः ।
रजनीचरवीरयोषितामनुमारक्षणरोदनारवैः ॥ १८ ॥

क्षणमत्र च नाथ वीक्ष्यतामियमग्निं विशती वराङ्गना ।
अपकृष्य सुताननोदरात् पतिलोकस्पृहया पयोधरम् ॥ १९ ॥

स विगाढरसो विलासिनां परिहासः स्मरणीयतां गतः ।
पुरि नः परमेधतेऽधुना गणरात्रं परिदेवितध्वनिः ॥ २० ॥

निनदन्ति न वेणवः क्वचिद्धत वीणाः शयिता इवाधिना ।
करुणेन बलात्कृता तव श्लथशृङ्गारपरिग्रहा पुरी ॥ २१ ॥

१. C दनेऽस्त्र २. BC णि ३. D व. ४. B तरणःसूनु । ५. A परिह्राणं ६. B नि ७. A मैथिली ८. D लोयलो । ९ BC स्त्वयि १०. B थेगतो धुनिः ११. A तूर्यडम्बरः । १२. AD रिपुजः परिवर्तते ।

अपयःपृषतः प्रतिक्षणं बत वज्राश[1]निजन्मने परम् ।
खरवातहता वितन्वते गगनं गर्दभनिस्वना घनाः ॥ २२ ॥

अ[2]तिवेलमसृञ्जि वर्षति प्रतिसेनापतिनिर्गमं नभः ।
प्रतिकेतु खगाः शवाशिनो निविशन्ते च नि[3]मन्त्रिता इव ॥ २३ ॥

अपि कल्पितपूजमादरात्तव[4] हस्त्यश्वखरं विरोदिति ।
निपतन्ति करादकारणं शतखण्डाः शतकोट्योऽपि च ॥ २४ ॥

अवनिर्भवितव्यदुर्वहव्यसुपीडेवं पुरः प्रवेपते ।
निकटाहवशङ्कि[5]तां इव प्रतिमाः स्वेदजुषः सुपर्वणाम् ॥ २५ ॥

ककुभः स्थिरदाहधू[7]मिताः परिवेषी परिघाततो[8] रविः ।
क्षणदाः क्षणदाचरेश्वर ग्रहसंघातसमीकसङ्कुलाः ॥ २६ ॥

न भजत्यनुकूलतां मरुत्तनयत्याजितभीरिवाधुना ।
नियतं निकृतीरिव स्मरन्न हुतं स्वीकुरुते हुताशनः ॥ २७ ॥

फलपुष्पदलानि वीरुधां विपरीतानि पुरोपकानने ।
पशुपक्षिसरीसृपेषु च व्यतिहारः प्रजनस्य कोऽप्यसौ ॥ २८ ॥

दुर्निमित्तसङ्घातः इति वर्त्त्य[9]निमित्तसंहतिर्डमरं घोरमरातिसंभवम् ।
सम[10]वेहि विधानकोविदैर्विधिदोषेण तवेदमाकुलम् ॥ २९ ॥

स्फुटतथ्य[11]गिरो विसृज्य तान्विजयाय प्रखलैः प्रतारितः ।
स्वयमेव चचाल रावणः स्मृतसंप्राप्तसमस्तसैनिकः ॥ ३० ॥

प्रतिपन्नधुरं खरव्रजैर्ध्वजमालाचितसर्वदिङ्मुखम् ।
स्थिरसारथिसारितं रथं कुथसंवीतवरूथमास्थितः ॥ ३१ ॥

युगपद्दशमार्गणासनप्रणिधानार्पितरोपणादरः ।
सकलाद्रिदरीपरिग्रहस्थिरविष्फारवितीर्णविद्रवः ॥ ३२ ॥

हलशूलगदासितोमरैः परशुप्रासविशारखै[12]र्मुद्गरैः ।
मुसलाङ्कुशयष्टिपट्टसैः[13] परिविष्टः प्रसरैरिव क्रुधाम् ॥ ३३ ॥

१. D तवं पक्षा २. B प्र ३. A बलि ४. A द्वत ५. A पाते ६. BCD संकटा ७. A भूमिकाः । B धूसराः ८. A रितो ९. A कि १०. BD वै । ११. A पथ्य C मस्य १२. D व १३. BCD पाशपट्टिशैः

विपुलाधरपृष्ठरोपितस्फुटदंष्ट्राशनिकोटिभिर्मुखैः ।
ग्रसमान इवावलोकयन् शिथिलस्वस्त्ययनादरा[1]नरीन् ॥ ३४ ॥

अपकारमिवाति[2]सन्धयस्तमसत्पक्षमिवापहेतवः ।
उपसेदुरुदायुधालयः क्षयकालीमलिनाः सनाभयः ॥ ३५ ॥

विकटाभरणाः सकङ्कटाः समदोल्लासितशातहेतयः ।
ययुराहवरागचञ्चलाश्चलयन्तः सकलां भुवं भटाः ॥ ३६ ॥

स्थगयन् गगनं दिशो नुदन् नमयन्नम्बुधिमेखलां भुवम् ।
सह बन्धुगणेन रावणो रणसंभोज्यकुतूहली ययौ ॥ ३७ ॥

जगदे तमुदीक्ष्य विस्मयाज्जगदेकप्रभुणा विभीषणः ।
महतोऽपि महानुपैति मामह[3]तोदग्रविभूतिरेष कः ॥ ३८ ॥

सदृशाः परिपार्श्वतोऽस्य के मरुतां पत्युरिवामराः सखे ।
अधमाहवलज्जयोज्झितं धनुरालिङ्गति मे करोऽधुना ॥ ३९ ॥

अनुरूपरणोत्सवागमप्रमदोल्लासलसन्मुखेन्दवे ।
विनिवेदयति स्म सं[4]भ्रमादिति तस्मै विशदं विभीषणः ॥ ४० ॥

अयमेव स राम राव[5]णो रणरागोल्लसदुग्रविग्रहः ।
पिदधाति सहस्ररोचिषं दशचूडाभरणोपलांशुभिः ॥ ४१ ॥

ककुदानि महाधनान्यमून्यमुमुच्चैः परितश्चकासति ।
सुरदानवयक्षभोगिनामुपनीतानि भयादधीश्वरैः ॥ ४२ ॥

अयमानकशङ्खगोमुखादिकसंख्यातिगतूर्यभेदभूः ।
ध्वनिरस्य पुरः पुरन्दरध्वजिनीव[6]म्भ्रमणो विमूर्छति ॥ ४३ ॥

अयमेकनिधानमोजसामयमाश्चर्यसमृद्धि[7]भाजनम् ।
अलुनान्निजकन्धराटवीमयमग्रेऽनुपदं द्विषद्द्रुमान् ॥ ४४ ॥

अयमस्य च मेघनाद इत्यवलिप्तस्तनयो महेन्द्रजित् ।
चरतीद्धमृगेन्द्रकेतुना रथरत्नेन मनोरथाधिकम् ॥ ४५ ॥

---

१. BCD न्सुरान् २. A भि ३. B तुमामहि ४. BCD सक्रमा ५. BCD रावणो रणे ६. BCD दन्द्रवणो ७. A समस्त D विभूति

विलसन्नवलोक्यतामितस्तरलाश्वीयतरङ्गशालिनि ।
अयमात्मचमूनदीमुखे मकराक्षो रजनीचरेश्वरः ॥ ४६ ॥

विकटेभघटः शठाह्वयो दशकण्ठप्रणयी निशाचरः ।
अयमीक्षितवानरावलिः सह वक्रेण विकत्थतेतराम् ॥ ४७ ॥

मुसलं मुहुरेष लालयत्यधिरूढो महिषं महोदरः ।
अतिकाय इति क्रमेलकैः क्रमसंवाह्यरथोऽयमस्रमुक् ॥ ४८ ॥

क्रथनोऽयमुरभ्रपृष्ठभागयमारूढशिवारथः क्रथः ।
विहसन्विघसोऽयमग्रतो वसनामायमनीकिनीपतिः ॥ ४९ ॥

क्रमते चरमं नरान्तको धुरि देवान्तक एष दीप्यते ।
अभितः पिशिताशनेश्वरं पृतने कुम्भनिकुम्भयोरिमे ॥ ५० ॥

द्विजकण्टकयज्ञकोपयोर्व्यतिमिश्रं बलमेतदग्रतः ।
पितृकाननकाननोत्थयोः शिखिनोरर्चिरिवैकतां गतम् ॥ ५१ ॥

चतुरङ्गपताकिनीपतिश्चतुरश्चण्डतमेषु कर्मसु ।
परमेश पिशाच इत्ययं पिशिताशी पिशितात्पतिप्रियः ॥ ५२ ॥

रथरेणुरयं[1] प्रमाथिनः कदलीजालमिदं[2] कपालिनः ।
अयमद्भुतरीतिभीषणस्त्रिशिरस्तूर्यरवो निशम्यते ॥ ५३ ॥

वदतीति विभीषणे रणस्तुमुलस्तुल्यबलावलेपयोः ।
उभयोश्च पुरोगसैन्ययोरजनि ग्रावजलौघयोरिव ॥ ५४ ॥

बहुविप्रकृतं निशाचरैर्निजसैन्यं समुदीक्ष्य विद्रवत् ।
अभिजन्यमजन्यवह्निवत्कपिराजः स्वयमेव पुप्लुवे ॥ ५५ ॥

रुधिरारुणसङ्गराम्बरोद्यतसुग्रीवदिनेशदर्शनात् ।
विननाश विलोलतारकः स दशग्रीवचमूनिशागमः ॥ ५६ ॥

तरुणे तरणाविवोद्यति प्लवगे तत्र ततोग्रतेजसि ।
मृधपर्वणि भेजुरुच्चकैर्दशकण्ठाननराहवो रुपम् ॥ ५७ ॥

---

१. A क्ष । २. A काण्ड ।

स जहास निशाचरेश्वरः पुरतस्तस्य विलोक्य चापलम् ।
प्रचुकोप चिरेण तं प्रति प्रहितक्रूरमहीध्रसंहतिम् ॥ ५८ ॥

शतमेकमसंभ्रमात् कपेः पिशिताशी निशितैर्निरन्तरम् ।
निचकर्त महामहीभृतां कदलीकाण्डसुखं शिलीमुखैः ॥ ५९ ॥

नतिवर्त्तितमार्गणावलिर्वलितव्यर्थितखड्गमुद्गरः ।
वितुदन्निकटेऽर्थं तेन स द्विभुजो विंशतिबाहुना ददे ॥ ६० ॥

स कपिः कुपितेन रक्षसा दिवि देवेषु रुदत्सु सारवम् ।
श्लथवालधिरुद्धमन्नस्तम्भ्रमयित्वा पिपिषे महीतले ॥ ६१ ॥

निममज्ज निजाङ्गजाम्बुधौ विधुरोऽष्टादशपद्मनायकः ।
ददृशे दशकन्धरः स्फुरन्नमरैस्तीर्णमहाहवार्णवः ॥ ६२ ॥

हरिकेसरितारचन्दनानथ मैन्दद्विविदौ दरीमुखम् ।
गवयं गवगन्धमादनौ पनसं पन्नसमङ्गदं गजम् ॥ ६३ ॥

रभरम्भगवाक्षगोमुखप्रमुखान् स्वामिमहोदयक्षमान् ।
समरे स ममाथ यूथपानगणेयानगणेयसाहसः ॥ ६४ ॥

तमुपेत्य जगाद मारुतिर्मरुतां शृण्वति सादरं गणे ।
गुरुशस्त्रहतान्वलीमुखानाखिलानन्तरयन् स्ववर्ष्मणा ॥ ६५ ॥

निहतस्तनयो मयैव ते नगरी रावण भस्मसात्कृता ।
अपकारिणि तिष्ठतीह मय्यवधीः किं प्लवगाननागसः ॥ ६६ ॥

इति सत्यपराक्रमः कपिः स गदित्वा निननाद सिंहवत् ।
प्रववल्ग विलोलवालधिर्बलमुत्सार्य रुचैव रक्षसाम् ॥ ६७ ॥

तमुदीक्ष्य दशाननः स्मरन् सुतमक्षं विपुलाक्षमात्मनः ।
विपिनौकसि तत्र सोऽक्षिपद्युषितं मन्युमिवाशुगच्छलात् ॥ ६८ ॥

प्रथमाहत[3]वत्प्लवङ्गमं स जघान क्षणदाचरेश्वरः ।
सहि तस्य सुताह्वयानसूनहरत प्रागदहत् पुरं पुनः ॥ ६९ ॥

१. BCD र्जि २. BC ट्येच ३. A मथाहति ।

स विवेद हतीर्न रक्षसः स्फुटवक्षाः पवनात्मजो हरिः ।
तमभाषत शोणिताशनं जहि जिह्मास्तव किंनु बाहवः ॥ ७० ॥

प्रहर प्रहरार्पितं वपुः क्व समाङ्गे पतितास्तवेषवः ।
भवता विजितः कथन्त्वसावमुना बाहुबलेन वासवः ॥ ७१ ॥

किमनोकहशैलवृष्टिभिर्मम मुष्टीर्विषहस्व भोः क्षणम् ।
इति वाचमुदीर्य संस्थितं निजघानोरसि रक्षसां पतिम् ॥ ७२ ॥

अथ तत्प्रथमं मिमील स प्रसभं जत्रुणि शत्रुणा हतः ।
अवलोक्य तदा तदद्भुतं पवनः पुत्रिषु तुष्टुवे सुरैः ॥ ७३ ॥

ननृतुर्मुदिता वनौकसो भुवि गात्रं मुमुचुः शुचाऽस्त्रपाः ।
जगुरप्सरसस्तदानिलेर्ग्रथितं वाचि भुजार्जितं यशः ॥ ७४ ॥

अवशिष्टतयाऽऽयुषो जगत्त्रितयारिस्तिमिरं ततार तत् ।
पुनराह्वत निस्त्रपः कपिं त्रपितं वन्ध्यतया निजाहतेः ॥ ७५ ॥

तमथ प्रहरन्तमन्तिकादवधीत्प्रत्युरसं दशाननः ।
अवहासविवर्धितक्रुधं कुलिशक्रूरतलेन मुष्टिना ॥ ७६ ॥

अतिवेलमरत्निकर्तरीतलमुष्टिप्रतलैरवर्तत ।
समरः समरोषवेगयोरुभयोस्तुल्यसुरासुरस्तवः ॥ ७७ ॥

श्रममाप चिरेण वानरः कठिनाङ्गः पिशिताश्न विव्यथे ।
श्लथबाहुमहन्महाभुजस्तनुजं मर्मणि मारुतस्य सः ॥ ७८ ॥

निपपात कपिः स निःसहः सह वह्नेस्तनयेन रावणः ।
सुचिरं युयुधे महायुधो विविधायोधनमार्गवेदिना ॥ ७९ ॥

तमपि क्रमलोलवालधिं ज्वलनास्त्रेण युयोज रावणः ।
अदहद्धरणीतलं गतं सुतहार्दान्न तमाश्रयाशनः ॥ ८० ॥

प्रधनाङ्गणमप्लवङ्गमं स चकार क्षणदाचरेश्वरः ।
तदुदीक्ष्य चुकोप लक्ष्मणः शरशिक्षां महतीमुदीरयन् ॥ ८१ ॥

---

१. BCD पाणि

प्रणिपत्य स रामपादयोः प्रचचाल प्रधनाय धन्वभृत् ।
पुरतोऽस्य शरीरसौष्ठवं चकितः प्रेक्ष्य स राक्षसोऽभवत् ॥ ८२ ॥

विससर्ज निशम्य तद्धनुर्गुणटङ्कारमसावहङ्कृतिम् ।
प्रददर्श दिशं दशाननस्तदिषुच्छन्नमुखीं न कामपि ॥ ८३ ॥

क्षणमीलितलोचनावलिः श्लथसंग्रामखलप्रमादरः ।
निषसाद निशाचरेश्वरः प्रतते लक्ष्मणबाणदुर्दिने ॥ ८४ ॥

दृढदुष्करचित्रवर्त्मसु द्विषतः प्रेक्ष्य विशेषमस्त्रमुक् ।
प्रतिकारदरिद्रतामगादिषुयोग्यासु विरामवानिव ॥ ८५ ॥

बहुवानरवीरविग्रहश्रमसन्तापघनो दशाननः ।
क्षणमेकमरातिसायकान् प्रतियोद्धुं न शशाक सायकैः ॥ ८६ ॥

न ससर्ज शरान् स राघवे सदृशीं वीक्ष्य निजामिषुक्रियाम् ।
अधिकेन हि सिद्धिरिष्यते विधिना विद्विषि विक्रमोद्धुरे ॥ ८७ ॥

प्रजिघाय घनांशुमालिनीं मनुजे शक्तिमसावमानुषीम् ।
क्षयकालवलाहकोऽशनिं कनकप्राय इवावनीधरे ॥ ८८ ॥

विशिखैः शिखिभिस्तैतैरिव प्रतिकर्तुं न स तामपारयत् ।
चरितैरतिनिर्मलैरपि क्षयभागी नियतिं पुमानिव ॥ ८९ ॥

निपपात वसुन्धरातले स तया भिन्नभुजान्तरोऽनघः ।
निरुरोध निरर्गलानसून् सहसाऽस्योरसि वैष्णवं महः ॥ ९० ॥

उदियाय जयारवो महानथ रक्षःपतिमूलवर्तिनाम् ।
ववृषुर्भयमुद्रितैर्मुखैर्बहुनेत्रोदकमम्बरौकसः ॥ ९१ ॥

धृतसत्त्वरुजं जघन्यजं दधतं धाम निजं विशेषवत् ।
समवेक्ष्य समाययौ चिरादथ रामः सह तेन रक्षसा ॥ ९२ ॥

समरः स तयोरवर्तत द्युसदां यत्र चिरस्य भेजिरे ।
जयमेकतरस्य मार्गतां करयोरेव परिक्षयं स्रजः ॥ ९३ ॥

---

१. BCD र्षभः २. B नैवै.

जनकेन्द्रसुतापतीषवो हृदि रक्षोधिपतेरलम्भयन् ।
स्मरबाणरुजां विषह्यतामविषह्यैर्निजवर्त्मना पदैः[2] ॥ ९४ ॥

तमवोचत सर्वभावविद्भगवान् भग्नरणोत्सवादरम् ।
व्रज संप्रति जातवेदनो विरुजं[3] त्वामिषवो रुजन्तु[4] नः[5] ॥ ९५ ॥

पुनरागमनाय गम्यतां दशकण्ठ क्व तवानुयायिनः ।
द्रुतमेव विनम्य पश्य भोः प्रतिबुद्धाः कपिचक्रवर्तिनः ॥ ९६ ॥

इति वदत्यनघे स रघूद्वहे बहुसमीकपरिश्रमनिस्सहः ।
दशमुखः स्वपुराभिमुखं ययावनुबबन्ध न कश्चन कश्चन[6] ॥ ९७ ॥

---

इत्यभिनन्दकृतौ रामचरिते महाकाव्ये दशमुखयुद्ध-
लक्ष्मणशक्तिभेदवर्णनो नाम त्रयस्त्रिंशः सर्गः ।



१. BD [illegible] A [illegible] C [illegible] A [illegible] ५. D [illegible] ६. A [illegible]

# चतुस्त्रिंशः सर्गः ॥

तथा गृही न पौत्राणां नवोढानां च योषिताम् ।
युवराजः कवीन्द्राणां प्रणयान्मोदते यथा ॥

अन्येद्युः कृतसमरान्तरव्यवस्थः काकुत्स्थः सह सचिवैरदृष्टपूर्वम् ।
अद्राक्षीद्दशमुखमन्दिरोपकण्ठे देवारिं दिवमपिधाय निष्पतन्तम् ॥ १ ॥

कोऽयं भोः कषति किरीटकोटिभिः खं दंष्ट्राभिर्लिखति मुखानि दिग्वधूनाम् ।
पातालं गमयति मेदिनीमकाण्डे चण्डेन स्वतनुभरेण भूतभेदः ॥ २ ॥

साहाय्यं किमथ चिकीर्षति प्रपन्नो देहित्वं दशवदनस्य दुष्कृतौघः ।
विस्रब्धं विलसति पश्चिमः पुरेऽस्मिन्नुद्दामप्रणयपरिग्रहो गुणो वा[3] ॥ ३ ॥

पौलस्त्यप्रतिघमहानिलप्रणुन्नो लङ्कायां किमयमुदेति कालमेघः ।
आहोस्वित् पितृपतिरस्त्रपैर्निरस्तः तानत्तुं बलिमभिलष्यतीत्थमस्मात्[4] ॥ ४ ॥

इत्युक्ते रघुपतिना सविस्मयेन प्रत्यूचे नतशिरसा विभीषणेन ।
आश्चर्यं समुपगतेन वीक्ष्य वृत्रं सुत्राम्णा सुरगुरुणेव सादरेण ॥ ५ ॥

निर्याति स्फुटदशनो दशाननस्य भ्राताऽयं विपुलवपुर्ग्रहः कनीयान् ।
कुर्वाणश्चरणभराज्जगन्ति लोलप्रान्तेभक्षुभितककुम्भि कुम्भकर्णः ॥ ६ ॥

जित्वाऽसृङ्मधुमणिभिः[5] प्रबोधखेदं निष्क्रान्तः समरमहोत्सवाय नृत्यन् ।
एषोऽस्यत्युपचयिना मरुन्निकायान् कायेन प्रलयपयोदमेदुरेण ॥ ७ ॥

उन्मौलिर्मणिवलयी विलोलहारो विच्छिन्नः समृगमदेन चन्दनेन ।
पौलस्त्यप्रणयपरिग्रहात्प्रसिद्धो रौद्रोऽयं रस इव रूपवानुपैति ॥ ८ ॥

विन्ध्याद्रेरपि विपुलः शरीरबन्धो धीः सूक्ष्मा कुशशिखरादपीष्यतेऽस्य ।
अन्यस्य व्रतसमुपार्जितः प्रतापः संजातः सह महसाऽयमद्भुतेन ॥ ९ ॥

जम्भारेरपि सरहस्यजृम्भकानामस्त्राणां प्रतिहतिरत्र सुप्रसिद्धा ।
मथ्नाति त्रिजगति योधपुङ्गवानां शृङ्गाणि प्रसभमयन्तु मुद्गरेण ॥ १० ॥

१. B C तपौरा २. B C च्छोचते पुरा. ३. D णेन ४. A स्मात् ५. B मुखितः D मदनिष्प्र C ततिभिः ६. D ल ।

एतस्य त्रिजगदिदं तृणं रणेषु स्वमत्वं[1] कुशलममुष्य विष्टपानाम् ।
निश्शङ्कं निवसति रावणोऽस्य बाहुप्राकारव्यवहितशत्रुवाहिनीकः ॥ ११ ॥

सन्नद्धस्वसदृशवाहिनीसमग्रः सङ्ग्रामे क इव निवेद्यतामयं ते ।
वक्तव्यं किमपरमेधि सावधानः संजातं जगदखिलं तुलाधिरूढम् ॥ १२ ॥

सुग्रीवः स्वयमभवत्ततः[2] पुरस्तादध्यास्त[3] श्वसनसुतः प्रदेशमूलम् ।
संवव्रुर्[4]भयमितरे कथञ्चिदन्तः सौमित्रिं रघुपतिरन्तिके चकार ॥ १३ ॥

यूथेन्द्रैरथ पृथुचन्दनाङ्गदाद्यैरायन्त[5]ः पिशितभुजः प्रतीयिरे[6] ते ।
संमूर्छत्खरजवकीर्णरेणुजातैर्जीमूताः प्रतिपवनैरिवोल्लसन्तः ॥ १४ ॥

तूर्याणामुभयचमूसमुद्भवानां संमूर्छन्मलयसुवेलयोर्गुहासु ॥
मूकत्वं किमपि दिशन्नभश्चराणामातेने गगनमपारमारवोर्मिः ॥ १५ ॥

रक्षोभिः कपिषु शरैस्[7]ततः प्रजह्रे तैस्[8]तेषु द्रुमगिरिदुर्दिनं वितेने ।
आवर्तैः कतिभिर्[9]अपि क्षपाचराणां स व्यूहः समजनि कुम्भकर्णशेषः ॥ १६ ॥

नाश्रौपीत्कटुमपि सिंहनादमारान्नाद्राक्षीत् प्रलघुतयाऽग्रतोऽपि[10] किञ्चित् ।
जग्राह क्षतज[11]विलोकनात्स्ववर्ष्मण्यारम्भं कपिकवलाय[12] कुम्भकर्णः ॥ १७ ॥

नादत्त प्रथमकपीरितान् प्रहारानृक्षाणां न महदनीकमैक्षतापि ।
सुग्रीवप्रहतिविबुद्धयुद्धकण्डूः संवेग[13]प्रतिसदृशं च संचचाल[14] ॥ १८ ॥

काभ्यांचित्[15]प्रसभमपूरयत्कपोलौ जग्राह द्विजशिखरैर्यदृच्छयाऽन्यान् ।
जिह्वायां लयमनयच्च कांश्चिदश्नन् प्राकाम्यं कपिषु कपित्थ[16]केष्विवाप ॥ १९ ॥

भूयोऽन्यानभिमुखपातिनः सलीलं पर्यस्यन्नलिन इव प्लवङ्गयोधान् ।
निर्याण[17]द्युतिचकितामरप्रवीरः संरेजे त्रिजगदरातिगन्धहस्ती ॥ २० ॥

नासा[18]स्यश्रुतिकुहरेषु कामचारं[19] निर्विश्य क्षितिधरकन्दरादरेण ।
तस्यान्तर्जठरविवर्तनाद्धि जग्मुर्ब्रह्माण्डोदरचलनं वलीमुखेन्द्राः ॥ २१ ॥

---

१. BCD त्वात् । २. A भिवर्तितः । ३. A स्तः । ४. BC चक्रु । ५. A यान्तः CD यातः । ६. A वि । ७. BC स्त्या ८. BC तत ९. A वि १०. BC न्तिके ११. C क्षिति १२. BC मपि रणा १३. B स्वैरं तं D स्वरंभ १४. A समं १५. BC केषां १६ A किमिच्छ १७. BD र्वा १८. A मा १९. A रात्रि

तारेयश्चरणरजोऽङ्घ्रिपैर्दुधाव क्षोणीध्रैर्दहनसुतो ममर्द जङ्घे ।
तस्यास्यं झटिति खटा[1]दिखण्डखाद्यैः सामीरिः समरखले समाससाद ॥ २२ ॥

संसज्य द्रुम[2]धरणीध्रजालमन्ये[3] निःशङ्कं नभसि गतां[4]ङ्घ्रयो हरीन्द्राः ।
तस्यान्त[5]र्मदभरमन्थरस्य दस्योर्दंष्ट्राणामकृपत किष्कुभिः प्रमाणम् ॥ २३ ॥

नीलाद्याः कपिपतयः सहस्रमाजावासीदन्नधरशरीर एव तस्य ।
सुग्रीवः कथमपि संभ्रमोद्धुरत्वाद्दिन्नाभिः प्लुतिभिरवापदूर्ध्वकायम् ॥ २४ ॥

आसेदुर्मुकुलितचक्षुषः पुरस्तात्ताराद्याः कपिपत[6]यस्तमद्रिहस्ताः ।
कस्तस्य प्रलयपतङ्गमण्डलाभौ दृग्गोलाववलमवलोकितुं द्विषत्सु ॥ २५ ॥

नापश्यत्मलघुतया बहून् घ्नतोऽपि स्पर्शेन स्फुटमवधीद्बहूनुपेतान् ।
सोऽङ्घ्रिभ्यां मृद इव पर्यटन्ननैपीच्चूर्णत्वं रणचतुरान्बहून्हरीन्द्रान् ॥ २६ ॥

तावत्तं कपिमशकाः समाकुलत्वं सङ्कीर्णे रणसदने समेत्य निन्युः ।
दुर्वारप्रतिघहुताशयोनिरुच्चैर्धूम्येव भ्रुकुटिरुदेति नास्य यावत् ॥ २७ ॥

स भ्राम्यन् मृधभुवि दृश्यते स्म दैवैर्देहेन क्षतजविनिर्गमारुणेन ।
संचारी गिरिरिव गैरिकस्रवन्तीसम्भिन्नाखिलदृषदां समुच्छ्रयेण ॥ २८ ॥

स क्वापि द्रुघणमपातयद्गदां वा गम्भीरप्रतिघरयो निशाचरेन्द्रः ।
तद्धाहुद्रविणविलोकवीतगर्वा सर्वाऽसौ कपिपरिषद्दिशः पपात ॥ २९ ॥

संरुध्य स्वशपथदन्तिभिः पुरोगान् जग्राह क्षतजभुजं भुजद्वितीयः ।
सुग्रीवः शिखरिभिरञ्जनासुतादिप्रेष्यौघत्वरितसमुद्धृतोपनीतैः ॥ ३० ॥

तद्दैवैर्दिनपतिसंभवस्य भूयः संभूय स्तुतमितरेष्वदृष्टपूर्वम् ।
यत्तस्य प्रधर्नविमर्दसंप्ररूढप्रस्वेदः किमपि चुकोप कुम्भकर्णः ॥ ३१ ॥

तेनाहङ्कृतिरशनाधुतापसारो घोराजिक्रतुचतुरेण चेष्टमानः ।
ग्रीवायां करयुगलेन पीडयित्वा सुग्रीवः पशुरिव साधितः शमित्रा ॥ ३२ ॥

हाहेति ध्वनिरुदभून्नभश्चराणां भूलोकः क्षयतमसीव नश्यति स्म ।
विन्यस्य प्लवगपतिं विसंज्ञमंसे निस्त्रिंशः स निजपुरं प्रति प्रतस्थे ॥ ३३ ॥

१ C. खडा BCD षडा २. BCD न्यस्यद्रुत ३ A ङ्के ४ BC ङ्कोरसिनिमितां ५. BCD मांयोरासीदन्नुदरसमीप ६, BCD अपिकप ७. ABC दत्ति ८. BC स्मै प्लवग.

प्रच्छन्नः पवनसुतस्तमन्वयासीन्मूर्छातः कपितिलकं जहार काल:।
पाणिभ्यां रदशिखरैः स वेगशाली तस्यारेः सपदि चकर्त कर्णनासम् ॥ ३४ ॥

संरुद्धोऽनिलतनयेन सोऽथ विग्रः सुग्रीवं प्रति विनिवृत्य संप्रधावन्।
निष्पीय स्वरुधिरमस्रभुक् प्रमत्तस्तस्यापि व्यधित वधाधिकामवस्थाम् ॥ ३५ ॥

निस्संज्ञं कपिमपहाय कुम्भकर्णः संरब्धो दशरथसूनुमाह्वतोच्चैः।
स स्मेरस्तमधिरुषं ववर्ष बाणैर्घोणास्रस्नापितकरालदन्तमालम् ॥ ३६ ॥

आह स्म स्मितकुपितः स राममुच्चैर्जानीषे मनुजपशो न मां यथावत्।
सञ्जातस्तव खरदूषणाख्यरक्षःसामन्तापशदवधात् किलावलेपः ॥ ३७ ॥

चक्षुष्मानसि यदि पश्य नः प्रमाणं घोणायाः श्रवणयुगस्य किं क्षतेन।
दंष्ट्राणां पटलमुदीक्ष्यतामिदं भोः स्वानर्थे हुतकपिचक्रचक्रवालम् ॥ ३८ ॥

पाशासिद्रुघणपरश्वथाङ्कुशानां को नु त्वं कुसुमपलाशकोमलाङ्गः।
आगच्छ प्रहर निषीद नश्य वा त्वं नात्यर्थं त्वयि रुषमेति कुम्भकर्णः ॥ ३९ ॥

किं नामोपहससि नः शनैस्तथैव स्वास्थ्यं तेऽनधिगतमेव किं गतासोः।
तिष्ठारान्निजनिधनत्वरोत्थिता चेन्निर्भीकः पतसि पृषत्कपाणिरेषः ॥ ४० ॥

इत्युक्त्वा तमभिपपात जातरोषः संमृद्नन् प्लवगबलानि संपतान्ति।
काकुत्स्थः पुनरपि सस्मितः शिताग्रैर्जग्राह द्रुतमिषुभिस्तमापतन्तम् ॥ ४१ ॥

संपातिः शतवलिरङ्गदः सुषेणः सुग्रीवः शिखितनयः समीरजन्मा।
तस्योच्चैरधिरुरुहुर्जगत्त्रयारेरङ्गानि प्लुतिरभसाः प्लवङ्गवीराः ॥ ४२ ॥

सौमित्रिर्घनशरसंहतिप्रमोक्षाद्दिक्ष्वन्धन्तम इव तस्य सन्ततान।
निर्धूय त्रिदशजयी विपाठजालं रामस्य स्फुटमिषुवाहिनीं जगाहे ॥ ४३ ॥

नालीकैर्भ्रमरविपाठसिंहतुण्डैरर्धेन्दुक्षुरविहगास्यवत्सदन्तैः।
पर्याप्तं वपुषि निशाचरस्य तस्य प्राणानां गमनपथं ससर्ज रामः ॥ ४४ ॥

बाणानां मनुजपतेर्विपद्य वेगं जग्राह द्रुघणमसृग्भुजामधीशः।
पूर्वस्रग्व्ययचकिता नभश्चरौघाः पर्यन्ते लयमभजन्नभोऽङ्गणस्य ॥ ४५ ॥

---

१. BCD न्तंकपितिलकेचंका २. BC वेगात् ३. BC स्थानत्वंगत ४. D न्तः ५. A स्तइ।

वैरूप्यं पिशितभुजस्तदुग्रमाजौ सौमुख्यं किमपि रघूद्वहस्य तच्च ।
सन्दध्युः सदृशविगर्हणप्रशंसै[1]श्चेतांसि त्रिदशवधूकदम्बकानि ॥ ४६ ॥

स भ्राम्यन् भुवनभयङ्करः प्रतीये रामस्य ज्वलनशरेण मुद्गरः खे ।
[2]ज्यावलग्नानिलविलून[3]मूलबन्धो विन्ध्याद्रिः मलयसहस्रकोटिनेव ॥ ४७ ॥

आदत्त स्वधितिमथ क्षपाचरेशस्तस्यार्थे रघुपतिरग्रहीत्क्षुरप्रम् ।
मुष्टिभ्यां रजनिचरस्तमन्वयासीत्तं रामः कुणिमकरोच्छरद्वयेन ॥ ४८ ॥

तस्याङ्घ्री सपदि महीन्दुरै[4]र्धचन्द्रद्वन्द्वेन द्रुतमहरत्प्रधावितस्य ।
जानुभ्यामथ स तथैव सक्थिद[5]घ्नीरुल्लङ्घ्य क्षतजतरङ्गिणीर्विवल्ग ॥ ४९ ॥

काकुत्स्थप्रलयघनाघनेषुधारासंभेदश्लथसकलाङ्गसानुसन्धे[6]ः ।
प्राभूवन्नचलतनोस्ततः प्रपातप्रोद्भिन्नप्रणदितवेणयोऽस्रनद्यः ॥ ५० ॥

प्रभ्राम्यै[7]त्कपिकुणपावलिप्रकामग्रासेच्छातरलतटस्थजम्बुकेन ।
तस्योच्चैरपिदधिरे भुवः सुदूरं पूरेण क्षतजमहातरङ्गिणीनाम् ॥ ५१ ॥

क्रोशार्धादहरत जिह्वया चलन्त्या दन्ताग्रै[8]र्ग्रहपतिगोचरेऽप्यगृह्णात् ।
निष्ठीवैरवकिरति स्म वानराणां दृक्सीमाभुवि च कुलानि कुम्भकर्णः ॥ ५२ ॥

तत्सर्वैः[9] कपिपतयो न चक्रुरङ्गैः संक्रुद्धो रदरसनेन यच्चकार ।
अत्याक्षीत्तद[10]नु रघूद्वहस्तदानीं व्यङ्गत्वादुपनिहितामवध्यबुद्धिम् ॥ ५३ ॥

ग्रासाय प्लवगपतङ्गमण्डलानां यावत्से[11]व विवृतमुखः स धावति स्म ।
तावत्तं द्रुतमसुरा[12]रिरात्तराहुव्यापारं विशिरसमाशुगेन चक्रे ॥ ५४ ॥

कीलालं कलश इवोद्वमन् स सर्वैः[13] मूर्धा[14]ऽरेर्दशरथसूनुबाणलून[15]ः ।
आनीतः क्षयपवनोद्धृताद्रिशङ्के लङ्कायां पिशितभुजः शतं पिपेष ॥ ५५ ॥

निर्घाताधिकविकरालतन्निपात[16]प्रध्वानप्रचकितचञ्चलास्यमालः ।
चक्रन्द स्वयमनुभूतसोदरान्तस्तन्द्रार्तिर्ष्विति विललाप चास्रपेशः ॥ ५६ ॥

हा भ्रातस्त्वमपि हुतो मयाऽऽहवाग्नौ केनाद्य द्रुतमुपनेयमीप्सितं मे ।
धिग्दैवं नरपरमाणुना मुहूर्ताद्रक्षोऽद्रिर्युधि यदयं विलय कीर्णः ॥ ५७ ॥

१. A णं प्रशंसां । २. D सं ३. BD लोल ४. A क्षुद्रियमवनिन्युर ५. BC थम ६ AD रसन्धे ७. BC भ्रश्य ८. B ते सर्वै ९. A व १०. BC म ११. BD न्नो १२. BC प्रथममुरा १३. A ऊर्ध्वम् मृद्धैः १४. D पूर्द्धा १५. A लूनः १६. AD मूर्ध

स्नेहस्याभजत सदृक् तव प्रहस्तः स्वस्रेयः परमयमेव कुम्भकर्णः ।
किं वक्ष्यत्यफलविलम्बितानुयात्रो निर्लज्जः कुलरिपुरेष रावणस्तु ॥ ५८ ॥

पुत्राक्ष श्रयसि सनाथतामिदानीं नीतस्ते निकटमयं द्विषा पितृव्यः ।
भ्रातृव्यैः[1] परिगत एष दुःखमास्ते दोष्णीह च्युतवति केवलं दशास्यः ॥ ५९ ॥

विस्रब्धं वदत बुधाः शृणोमि सर्वं किं कस्यापहृतमहं समर्पयामि ।
अन्यायास्त्रिजगति यद्भुजाश्रयेण प्रारब्धाः स मम गतोऽद्य कुम्भकर्णः ॥ ६० ॥

जन्तूनामुचितमनित्यता न पश्यत्युत्पादं परमियमीक्ष्यते नृशंसा ।
क्षुद्रायां यदयमगच्छदन्तमाजावव्याजप्रथमजभक्तिरेकशूरः ॥ ६१ ॥

मूर्धाऽ[2]यं समधिगतः समग्रमौलिः प्रत्यार्द्रः समिति विचीयतां कबन्धः ।
सुभ्रातुः शकलयुगं विधाय वक्षस्यक्षे[3]पी प्रविशतु रावणः कृशानुम् ॥ ६२ ॥

वाचस्ताः श्रवसि कृता न यद्गुरूणामात्तं यन्न च वचनं विभीषणस्य ।
तस्यैतत्कटुतरपाकमक्रमेण क्रूरस्योपनमति कर्मणः फलं मे ॥ ६३ ॥

कं वीक्षे क्व बत निवेदयामि दुःखं कुत्रोच्चैररिवधसंश्रवं शृणोमि ।
त्वय्येकप्रकटपराक्रमे गतेऽद्य भ्रातर्मे भुवनमिदं विभाति शून्यम् ॥ ६४ ॥

शोकार्तं पितरमिति प्रतीतसत्त्वाश्चत्वारः प्रियतनयाः समं समीयुः ।
साकूतंस्त्रिभिरवलोकितः कनिष्ठैर्ज्येष्ठत्वादिदमवदद्धचस्त्रिमूर्धा ॥ ६५ ॥

किं तात त्रिभुवनजित्त्वमेकशूरः शोकाय स्वमिति निहीनवद्ददासि ।
नन्वेभिः कृतबहुविद्रवाय दोर्भिर्दातव्यस्तव रिपवेऽस्ति कालधर्मः ॥ ६६ ॥

सा तात श्वशुरसमर्पिताऽस्ति शक्तिस्तच्चोग्रं त्रिनयनदत्तमस्ति शूलम् ।
अस्त्यस्त्रं तदखिलमागतं विरिञ्चेः किं चेतश्चकितमिवाद्य ते विभाति ॥ ६७ ॥

शक्रारिः स तव तथैव सूनुरास्ते पश्यैनं सुलमतिकायमन्तिकेऽपि ।
सन्नद्धौ सुरमनुजान्तकावितस्त्वां याचेते रिपुकदनं मदाननेन ॥ ६८ ॥

मय्येव प्रकटय वा पितः प्रसादं प्रेक्षस्व प्रियसुतमाहवोद्धुरं माम् ।
कत्थस्व प्रथममिहोद्धृतोद्धतारिस्तीव्रोऽयं विरमतु कुम्भकर्णशोकः ॥ ६९ ॥

१. BC सोदर्यैः २. D पहांरे ३. BCD स्याक्षेपात ४. BC वध त्वां

न त्यागस्तव महसः कदाऽपि शत्रौ नत्यागः किमिदमुदीरितं त्वयाऽद्य।
मुष्णाति प्रसभमसौ धियं न केषामुष्णाऽतिप्रियजनविप्रयोगबाधा ॥ ७० ॥

चतुर्णामाकर्ण्योर्जितमिति वचस्तत्तनुभुवां
तमुच्चैरत्याक्षीदनुजवधशोकं दशमुखः ।
निर्जाशंसोत्तालं युगलमपरं स्वावरजयो-
रमीषां बालानां समिति सहसाऽनुप्लवमशात् ॥ ७१ ॥

प्रतिनृपसुरमौलिरत्नराजीरुचिरुचिरप्रसवार्पिताङ्घ्रिपूजः ।
कृतसदृशनुतिर्महाकवीन्द्रैर्जयति चिरं युवराजमेदिनीन्द्रः ॥

इत्यभिनन्दकृतौ रामचरिते महाकाव्ये कुम्भकर्णवधवर्णनो
नाम चतुस्त्रिंशः सर्गः समाप्तः ॥



१. BC माथ २. A दया ३. A भावद्रुतमगात् D संद्रुतमशात ४. D omits this sloka

# अथ पञ्चत्रिंशः सर्गः ॥



कुमारास्तेऽथ चत्वारः पञ्चतोत्सुकिता इव ।
ययुः सहस्रं भ्रातृव्यान् पितृव्यद्वयसंयुताः ॥ १ ॥

प्रससार पुरस्तेषामश्वारूढो नरान्तकः ।
उल्लासयन् कुन्तलतामुत्पातोल्कामिवानिलः ॥ २ ॥

मन्ये[1] महिषमुत्सृज्य तुरङ्गेण त्वरान्वता ।
आससाद समिद्राजस्तद्व्याजेन यमः कपीन् ॥ ३ ॥

तं वृक्षवर्षैरकिरन्मश्नन्तं रामसैनिकाः ।
मन्दराद्रिमिवोदन्वत्कल्लोलाः शीकरोत्करैः ॥ ४ ॥

अन्येऽभ्यवर्षन्नचलैस्तं सोढद्रुमदुर्दिनम् ।
गुर्वस्त्रमोक्षमिच्छन्ति ज्ञातसारेषु वैरिषु ॥ ५ ॥

तान् कुन्ताशनिमुद्यम्य हयसादी स राक्षसः ।
हर्यश्वं[2] इव संक्रुद्धः[3] क्षितिध्रानभितोऽभिनत्[4] ॥ ६ ॥

पुरतः पार्श्वयोः पश्चात् पाशाग्रेषु ततः स्वयम्[5] ।
उत्केसरानग्रथयत्[6] कपीन् कुसुमलीलया ॥ ७ ॥

हतशेषानथाशासुँ[7] वीक्ष्य विद्रवतो हरीन्[8] ।
ऐहत स्वयमभ्येतुमभ्यराति हरीश्वरः ॥ ८ ॥

ततः संवर्त्य संग्राहं सुग्रीवानुज्ञया व्रजन् ।
पिपेष तं वालिसुतः सतुरङ्गं रणाङ्गणे ॥ ९ ॥

श्रान्तमन्तरयामास मार्गवाहनिरङ्गदम् ।
रुन्धानस्त्रिशिरःसेनां तामनन्तां कृतान्तवत् ॥ १० ॥

स जघान त्रिमूर्धानं दशाननसमुद्भवम् ।
दृष्टाङ्गसौष्ठवो देवैर्देवान्तकमनन्तरम् ॥ ११ ॥

---

१ B C अन्यो २. B C क्ष ३. B C क्षुब्ध ४. B क्षुब्धानभिततो । ५. A प्रासाग्रे पततः समम् । ६. A प्रणयन् । ७. A स्वस्थ ८ B D तान् कपीन् ।

ते रथातिरथाः सर्वे ते सर्वे गजवाजिनः ।
ययुस्तदानीमुन्मुष्टौ निष्ठामेकहनूमति ॥ १२ ॥

नीलकालानले शोषमगान्नागसमन्वितः ।
दूरोल्लसितरोषोर्मिर्महोदरमहार्णवः ॥ १३ ॥

उल्लसत्पत्रबहुलं सरित्पूर इव द्रुमम्[1] ।
सुषेणः[2] पार्श्वसंप्रासं महापार्श्वमपातयत् ॥ १४ ॥

प्रतीयुरतिकायस्य समेत्य हरयश्चमूम् ।
जयसंमर्दसंसृष्टयज्ञारिसं[3]मरश्रमाः ॥ १५ ॥

भग्नेषु कपिसैन्येषु स जघ्ने शक्तिशालिना ।
रामानुजकुमारेण रावणात्मजदानवः ॥ १६ ॥

मेने स निर्व्यूढ इव रणभारो नभश्चरैः ।
गतयोरन्तकागारं कुम्भकर्णातिकाययोः ॥ १७ ॥

ययावराक्षसं कृत्वा सौमित्रिर्भ्रातुरन्तिकम् ।
जयोत्सवादगणितै[4]र्व्रणौघैः प्लवगैर्वृतः ॥ १८ ॥

ते नामचिह्नाः प्रत्यङ्गमतिकायशिलीमुखाः ।
उदखन्यन्त सौमित्रौ सुषेणस्य समाधिना ॥ १९ ॥

ऊचे विभीषणो हृष्यन् रक्षोवीरकथेयती ।
तिष्ठतः कष्टजेतव्यौ परं रावणिरावणौ ॥ २० ॥

अतिकायादयो वीराः सर्वेऽमी सत्यविक्रमाः ।
मेघनादस्तु मायास्त्रच्छन्नकार्यो[5] न कोऽपि सः ॥ २१ ॥

नीतिर्निरभ्युपायेव लङ्का साऽद्य न[6] शोभते ।
प्रकृष्टामन्तरेणेमां राजपुत्रचतुष्टयीम् ॥ २२ ॥

महोदरमहापार्श्वौ विना तौ च भुजाविव ।
नूनं निन्दति निर्दोषमात्मानं रावणोऽधुना ॥ २३ ॥

१. A. निधनाय प्रधावन्तं नीलाङ्गदहनूमताम् । २. ऋषभः ३. A त्रयःसंमर्दसंमृष्टसञ्चारि । ४. A वसि
५. A च्छिन्नमायो नकोऽपि सन् ६. BC द्य न वि

नालं विसोढुं कषयः कम्पं प्रत्येकमद्य वः ।
छिन्नप्रधानयोधाङ्घ्रिः श्लथो दशमुखद्रुमः ॥ २४ ॥

निकुम्भिलायां ब्रह्मास्त्रं मेघनादः प्रसाधयन् ।
गत्वा निहन्यतामाशु निहतः सोऽस्तु रावणः ॥ २५ ॥

इति वादिनमादित्यो विभीषणमभीशुना ।
मुकुलीक्रियमाणेन पाणिनेव न्यवारयत् ॥ २६ ॥

अपश्यन्निव कल्याणं रामस्यासन्नरावणेः ।
जहौ रविस्तूर्णरथो रणसाक्ष्य[1]मनोरथम् ॥ २७ ॥

ददृशेऽथ न दिक्षु[2] क्वापि दिग्व्यापी कपिभिः परम् ।
मेघनादचमूघोषो घोरस्तमसि शुश्रुवे ॥ २८ ॥

नादृश्यत पुरः किंचिन्न पश्चान्न च पार्श्वयोः ।
शरबन्धनिशीथिन्यामवसेदे वलीमुखैः ॥ २९ ॥

धृतगर्भगतावस्थौ काकुत्स्थावपि सेदतुः ।
छन्नाकृतेः प्रतीच्छन्तावरातेरस्त्रदुर्दिनम् ॥ ३० ॥

आस्वास्व वत्स सौमित्रे शत्रुषु प्रहरत्स्वपि ।
नाविज्ञातविशेषेषु विसृजन्त्यस्त्रमुत्तमाः ॥ ३१ ॥

वरं विपन्नमावाभ्यामस्त्रेऽस्मिन् परमेष्ठिनः ।
न तु च्छन्नतनौ दीने द्विषि[3] दिव्यास्त्रमुज्झितम् ॥ ३२ ॥

सन्तो मुहूर्त[4]सन्धानान्मन्त्रिणो[5] जाम्बवन्मुखाः ।
चिन्तयिष्यन्ति कान्तारं नापर्यन्त[6]मिदं द्विषः ॥ ३३ ॥

उद्यतं ब्रह्मणोऽस्त्रेण तदा कर्तुमराक्षसम् ।
रुरोधावरजं क्षुब्धमिति वादी रघूद्वहः ॥ ३४ ॥

एषोऽहमहितोन्माथी[7] रथी दशरथात्मजौ ।
प्राप्तः समितिं संहर्तुं भूयो वां सह वानरैः ॥ ३५ ॥

---

१. BC शोच्य २. BC यद्यसच्चनसः D यद्यसक्षस्य ३. BC निशि । ४. A शत्रोर्मु ५. BC त्वानाम
६. BCD रमर्पय ७. BCD मिन्द्वजिन्मा

हन्यमानं मयेदानीं पाहि राम विभीषणम् ।
किं निषीदसि रे तूष्णीमयं ते शरणागतः ॥ ३६ ॥

पितृव्य शक्रजिद्व्यालः सोऽयं ते समराजिरे ।
नरवानरवीराणां प्राणैः क्रीडति वार्यताम् ॥ ३७ ॥

एह्येहि जीवयेदानीं विहङ्गेश रणाङ्गणे ।
मया कालभुजङ्गेन गाढदष्टाविमौ पुनः ॥ ३८ ॥

तमसाऽऽवृतरूपस्य रिपोर्बाणान्तरोज्झिताम् ।
शुश्रुवानपि तां वाचं रामः किमपि नाकरोत् ॥ ३९ ॥

प्रतिकारदरिद्रेण तदुरुक्तं दुरात्मनः ।
चक्षमे लक्ष्मणेनास्य शरीरेण न चेतसा ॥ ४० ॥

ताः कर्कशाः कपीन्द्रेण श्रुता नेन्द्राजितो गिरः ।
स्थाने प्रतीष्टं पुरतस्तेन मोहस्य शासनम् ॥ ४१ ॥

उपोढमुखभङ्गेन नाङ्गदेनापि सा मुहुः ।
तस्य प्रार्थयतो वाणी कदर्येणेव शुश्रुवे ॥ ४२ ॥

प्रहारनिस्सहैः सर्वैः कपिभिः सोढगर्जितैः ।
जगाम तर्जितः पृष्ठे कालेन रजनीचरः ॥ ४३ ॥

दस्यौ दूरं गते तस्मिन्नुत्थाय व्रणवान् शनैः ।
चचार तां महीं घोरामुल्कापाणिर्विभीषणः ॥ ४४ ॥

ध्वस्तवित्रस्तसर्वाङ्गानपश्यत् परितः कपीन् ।
शकलीकृत्य शक्रेण विकीर्णानिव पर्वतान् ॥ ४५ ॥

स तत्र शोकविकलः प्रस्खलन् कुणपालिषु ।
आललम्बे मुमूर्षूणामस्थिच्छेदश्लथैर्भुजैः ॥ ४६ ॥

अयं शेते सह भ्रात्रा भ्रातृव्यशरपूरितः ।
सर्वोत्तरगुणारामो रामः कर्मफलेन मे ॥ ४७ ॥

१. BC वेण २. BCD रावणिनो ३. BC omit five lines ४, BCD स्तु सुगर्जते ५, BCD omit this line. ६. BCD वक्रपाणि ७. A पीडि

[1]अपीषुच्छिन्नदेहस्य देवस्यास्य निषे[2]दुषः ।
अधिकोच्छ्वासिनी दीप्तिः प्रतिहारयतीव माम् ॥ ४८ ॥

नूनं मानयतः सन्नौ[3]वस्नं धातुर्नरोत्तमौ ।
न मुक्तजीवै[4]र्योर्जातु भव्यते[5]ऽयमुदीक्ष्यते ॥ ४९ ॥

जीवन्मृतः पुनरहं निर्वादनिरयोष्मणा ।
यदुत्पश्यामि भूयिष्ठमनयोर्जीवसंशयम् ॥ ५० ॥

हा हा हतोऽस्मि धिग्धिङ्मा यन्मयाऽयमुदीक्ष्यते ।
अस्तारूढ इवादित्यः सुग्रीवः स्नपितोऽसृजा ॥ ५१ ॥

धिग्दैवमङ्गदः सोऽयं शेते शत्रुशरार्[6]चितः ।
भूमावव्यवधानायामविधान इवेतरः[7] ॥ ५२ ॥

हा कष्टमयमुत्तानो गतासुर्गन्धमादनः ।
अयं सन्दर्श्य धरणीं प्राणान्मुञ्चति चन्दनः ॥ ५३ ॥

ताडितः शरधाराभिर्मेघनादस्य रक्षसः ।
अयं निर्वाति नीलाग्निर्निरुद्धो मोहभस्मना ॥ ५४ ॥

अयमस्तं गतो वीरः केसरी हनुमत्पिता ।
कपीन्द्रश्वशुरस्तारस्तरत्यस्रनदीमयम् ॥ ५५ ॥

अयमृक्षपतिर्धूम्रो[9] धमनीशेषकें[10]न्धरः ।
न मुञ्चत्याहवश्रद्धामुत्तरार्धेन विस्फुरन् ॥ ५६ ॥

अयं पिबी[11]ति कीलालं धमन्यादाने[12]भीषणैः ।
[13]वमन् व्रणमुखैर्वाष्पै[14]नसह्यान्तर्व्यथैः[15] पृथुः ॥ ५७ ॥

गुर्वी सर्वेन्द्रियग्लानिरिन्द्रजानोरियं पुनः ।
अयं विपद्यते पश्चाद्वीरबाहुर्विधेर्बलात् ॥ ५८ ॥

अयं दधिमुखोऽमात्यश्छिन्नस्त्यानैरसृक्पथैः[16] ।
अयं पिशितपङ्कस्थः सानुप्रस्थो हरीश्वरः ॥ ५९ ॥

---

१. A पिप्रछ २. BCD निषेदुपइलातले । ३. BD शवा ४. A देह ५. A व्यंदेह ६. BCD इशरार्दि । ७. BCD वोत्त ८. AC न्दि ९. BC भूमौ १०. A केश ११. A वम १२. A वमिन्यापार १३. A अन्त्रं १४. A बाष्पम १५. A व्रणैः १६. BC अयैः

मीलत्येष प्रमीलावान् सर्वशिल्पनिधिर्नलः ।
अयमात्मास्त्रशय्यायां शेते शतवलिर्बली ॥ ६० ॥

शरभः शरतल्पेऽस्मिन् निद्रामेति निरायताम् । नातिदीर्घाम्
प्राणैः प्रभुप्रसादानामनृणत्वमुपेयिवान् ॥ ६१ ॥

अयं बत नतो मन्त्री निजमन्त्रं बहिर्गतम्[1] ।
अनादृत्य वलत्याराद्विनतं प्रति चक्षुषा ॥ ६२ ॥

अयमुज्झितसर्वाङ्गस्वास्थ्यः समरसञ्चरात् ।
क्रव्यादान् पतितोऽभ्याशे निषधो न निषेधति ॥ ६३ ॥

अयमप्रतिबोधाय प्रसुप्त इव पन्नदः ।
पनसः पश्यतीवायमुद्वृत्तारुणलोचनः ॥ ६४ ॥

विडम्बितोऽयं गवयश्छिन्नपुच्छो मुमूर्षति ।
बत वीतमदः सीदत्ययं लूनकरो गजः ॥ ६५ ॥

एते बहिर्गते दूरं वीक्षणे वेगदर्शिनः ।
अलुप्तप्रत्यभिज्ञानाः संपातेः शकला अमी ॥ ६६ ॥

अयं गवाक्षः पतितो गोलाङ्गूलचमूपतिः ।
विशीर्यते गवस्यैतद्वपुर्विपुलतेजसः ॥ ६७ ॥

एष गाढप्रहारोऽपि मैन्दो मन्दं न चेष्टते ।
द्विधा कृतोऽपि द्विविदो वदतीवाननत्विषा ॥ ६८ ॥

श्रुतः पद्मो विकलितः क्व बतेत्थं शिलीमुखैः ।
कुमुदस्य च कुत्रेदं निशि व्यसनमीक्षितम् ॥ ६९ ॥

कोटयः कपिमुख्यानां तेनैकेन दुरात्मना ।
अद्य विध्वंसिताः सायं धिङ्मां तद्वीर्यसाक्षिणम् ॥ ७० ॥

हनूमन्तं न पश्यामि स मन्ये पुण्यवान् गतः ।
प्रत्यानेतुमसूनेषां सशरीरोऽन्तकालयम् ॥ ७१ ॥

ऋक्षराजस्य क्वानु स्यादिह प्रतिसरस्थली ।
कं पृच्छामि शवानीके तस्योद्देशं महामतेः ॥ ७२ ॥

1. D चगर्हि

दूरमेति सहृत्सार्थः सर्वोऽयं सममेव ते ।
कस्य हेतोस्त्वमेकाकी विभीषण विलम्बसे ॥ ७३ ॥

धिग्दैवं ध्रियतेऽद्यापि गदापाणिर्विभीषणः ।
अमित्र इव मित्राणामीक्षमाणो दशामिमाम् ॥ ७४ ॥

धर्मं त्रातुमशक्तस्त्वमधर्माय कृतं नमः ।
हतानि रामसैन्यानि जितं रावणसैनिकैः ॥ ७५ ॥

इति वादिनमश्रोषीन्निकषा निकषासुतम् ।
अन्तराले प्रमीलानां मौलिमुन्नम्य जाम्बवान् ॥ ७६ ॥

अवादीच्च समुद्वीक्ष्य हर्षाश्रुद्रवया दृशा ।
पौलस्त्यं पुत्रहार्देन स पितामहसंभवः ॥ ७७ ॥

कच्चित् प्राणिषि पौलस्त्य काकुत्स्थौ कच्चिदीक्षितौ ।
ऋक्षवानरवीराणां कच्चिदुच्छ्वसतीश्वरः ॥ ७८ ॥

उपसंगृह्य पाणिभ्यां पादौ तस्य विभीषणः ।
पुरस्तात् प्रह्वमासीनः शनैरित्यब्रवीद्वचः ॥ ७९ ॥

जीवन्ति कपयः सर्वे जीवतस्तौ नरेश्वरौ ।
अस्मिन्महति संवर्ते यत्त्वं जीवसि जाम्बवन् ॥ ८० ॥

कच्चिन्नार्यस्य कायोऽयमनार्यस्य शरैः क्षतः ।
कच्चित् पश्यसि रामस्य ससैन्यस्य पुनः शिवम् ॥ ८१ ॥

सैन्यानि प्रतिजीवन्ति पुनरुन्मीलतः प्रभू ।
केनेदमभ्युपायेन स्वप्नवृत्तसमं भवेत् ॥ ८२ ॥

प्रत्युवाच तमृक्षेशः कच्चिद्दृग्विषयं गतः ।
विभीषण सुषेणस्ते सोऽस्ति वा पवनात्मजः ॥ ८३ ॥

तदभावे किमस्माभिः किं सुषेणेन किं त्वया ।
अप्यस्मिन् सर्वसंहारे सोस्ति चेत् सर्वमस्ति नः ॥ ८४ ॥

ब्रूहि पौलस्त्य विस्रब्धं नास्ति मृत्युर्दृढस्य मे ।
कच्चिदप्रोषितप्राणावीक्षितौ रामलक्ष्मणौ ॥ ८५ ॥



१. A दक्ष.

न्यवेदयद्यथादृष्टमृक्षराजाय राक्षसः ।
तौ द्वौ ततः सुषेणस्य गन्तुमुच्चलितौ दिशम् ॥ ८६ ॥

तावथोल्कार्चिषा वीक्ष्य वीक्षापन्नावुपासदत् ।
अक्षतः क्षतजाभ्यक्तौ समन्दाक्षोऽञ्जनासुतः ॥ ८७ ॥

महापदि महात्मानौ मुमुदाते विलोक्य तम् ।
जगत्प्रलयकाष्ठायां रुद्रं ब्रह्माच्युताविव ॥ ८८ ॥

अकृतात्मचिकित्सेन व्रणबीभत्सवर्ष्मणा ।
प्रमीतेष्वपि सैन्येषु संग्रहस्फीतचेतसा ॥ ८९ ॥

ऊचे तेभ्यः सुषेणेन पृच्छद्भ्यः प्रयतात्मना ।
अभ्युपायस्य दूरत्वादुद्वृत्तालसपाणिना ॥ ९० ॥

व्यसुविश्लिष्टविच्छायसशल्यवपुषः प्रति ।
भेषजान्युपदेक्ष्यामि ध्रियमाणे हनूमति ॥ ९१ ॥

पुनस्तं प्रह्वमवदद्दुद्दिश्यानिलनन्दनम् ।
अनन्यकरणीयेन करणीयेन संप्रति ॥ ९२ ॥

उद्यम्य रभसात् पुच्छं गच्छ गन्धवहात्मज ।
अर्धयामेन यामिन्याः पुण्यमोषधिपर्वतम् ॥ ९३ ॥

हैमकूटस्य निकटे दूरे हिमवतो गिरेः ।
कैलासर्षभयोर्मध्ये महीध्रः स प्रतिष्ठितः ॥ ९४ ॥

चतस्रस्तस्य चतसृष्वाशास्वोषधयोऽद्भुताः ।
सन्ति भानावनुदिते ताभिरत्र प्रयोजनम् ॥ ९५ ॥

मृतसञ्जीवनी शुक्ला सन्धानी कनकप्रभा ।
शल्यनिर्हरणी नीला बभ्रुवर्णा सवर्णकृत् ॥ ९६ ॥

दूरीभवन्ति नश्यन्ति चकासति च ताः पुनः ।
अपूर्वेऽर्थिनि संप्राप्ते सव्रीडा इव कन्यकाः ॥ ९७ ॥

चरमं चारुशीलानां विनयेन विमार्गताम् ।
आविर्भवन्ति भव्यानामभव्यानामगोचराः ॥ ९८ ॥

१. A बहु B चतुर्व

मानसे सरसि स्नात्वा नत्वा विघ्नविनायकम् ।
शिवार्पितमनाः पुण्यं तमारोह महीधरम् ॥ ९९ ॥

गणगन्धर्वयक्षाणामृषीणामूर्ध्वरेतसाम् ।
तत्र क्षोभमकुर्वाणः प्राप्स्यसि त्वं महौषधीः ॥ १०० ॥

सङ्गः क्वापि न कर्तव्यः कृती शीघ्रमवातर ।
जीवन्तु सर्वसैन्यानि यशः स्वीकुरु शाश्वतम् ॥ १०१ ॥

ऊचे तमृक्षराजोऽपि शीघ्रं साधय मारुते ।
राघवार्थस्त्वयाऽऽरब्धस्त्वयैवाद्य समाप्यताम् ॥ १०२ ॥

वह गुर्वीं धुरमिमामञ्जनासुत पाहि नः ।
समे सर्वे वयममी विषमे[1] विषमे भवान् ॥ १०३ ॥

तद्वाक्यं वृद्धयोरोमित्यादाय शिरसाऽनिलिः ।
वर्धमानः सुवेलाग्राद्रागगच्छदुदङ्मुखः ॥ १०४ ॥

तत्पादभरभग्नानां पततां शिखराश्मनाम् ।
रवेण रावणो निद्रां विजहौ विजयाहताम् ॥ १०५ ॥

ते हनूमति विश्वासाल्लब्धाश्वासा इवाभवन् ।
मूले मनुजसिंहस्य ऋक्षराक्षसवानराः ॥ १०६ ॥

उत्तरस्यामथ दिशि ददृशुस्ते सविस्मयाः ।
भित्वा दूरं तमो नैशमुन्मिषन्तीस्ततीस्त्विषाम् ॥ १०७ ॥

ते मारुतिमभिज्ञाय जिज्ञासानन्तरं ततः ।
स्फुटमालोक्य तं शैलं दूरं ववृधिरे मुदा ॥ १०८ ॥

विलम्बशङ्की हनुमान् कृत्स्नमेव महीधरम् ।
आजगाम तमादाय पुरस्तेषां मनोरथात् ॥ १०९ ॥

यथाविधि यथाबाधं ताः प्रयुज्य महौषधीः ।
स चक्रे बलमुल्लाघं लाघवेन महाभिषक् ॥ ११० ॥

प्रत्याव्रजन्निजस्थाने निधायाद्रिं महौषधिम् ।
हनुमाननुमानेन विज्ञातव्यगतागतः ॥ १११ ॥

1. A ये

कथ्यमानः सुषेणेन लज्जमान इवानिलिः ।
पपाताद्भुतमुग्धस्य रघुनाथस्य पादयोः ॥ ११२ ॥

एते प्राणास्त्वमस्माकमिति गद्गदभाषिणा ।
उत्थाप्य संभ्रमेणासौ रामेण परिषस्वजे ॥ ११३ ॥

साऽथ प्रभाता रजनी रामसेना च सोत्थिता ।
स्मरन्ती रात्रिवृत्तान्तं स्वप्नतुल्यमिवाद्भुतम् ॥ ११४ ॥

सुषेणं तुष्टुवुः केऽपि तुष्टुवुः केपि चौषधीः ।
तुष्टुवुः स्तुत्यकर्माणं केऽपि केवलमानिलिम् ॥ ११५ ॥

अन्योन्यसह्यप्रश्नेन प्रमोदेन महोत्सवैः ।
ययौ कपीनां तदहश्चिन्तामौनेन रक्षसाम् ॥ ११६ ॥

राक्षसानामनिष्कासाज्जाततत्कदनत्वरः ।
लङ्कादाहाय सुग्रीवः प्रमुखानादिशत्कपीन् ॥ ११७ ॥

तामथोद्दीपयामासुः प्रविश्य कपयः पुरीम् ।
स विशालशिखो वह्निर्दूरं द्यामप्यदीपयत् ॥ ११८ ॥

तेनादीपनकोपेन कपींस्तानाततायिनः ।
पेतुः पिशाचप्रमुखाः संभूय पिशिताशिनः ॥ ११९ ॥

रक्षोभिरनुबद्धस्य कपिसैन्यस्य निर्यतः ।
सस्रतुः सज्यधन्वानौ रक्षार्थं रामलक्ष्मणौ ॥ १२० ॥

रामलक्ष्मणबाणानामासारं सोढुमक्षमाः ।
विविशुर्विग्रहखलात्ते लङ्कां राक्षसर्षभाः ॥ १२१ ॥ रणाङ्गनात्

अन्येऽपि ये पुण्यजनाः स्वनाशं निश्चित्य निश्चक्रमुराहवाय ।
न तेऽपि काकुत्स्थशरस्रवन्तीपूराहताः स्थातुमलंबभूवुः ॥ १२२ ॥

सा यामिनी सङ्कुलजन्यदोलाकोलाहलेनोभयसैन्यजेन ।
अगादगालीवलयप्रतिश्रुत्प्रतिश्रुताशेषवियद्ग्रहेण ॥ १२३ ॥

प्रमृष्टः संजज्ञे कथमपि स तावत्प्रतिचमू-
जिघांसावीभत्सो दशवदनसेनाकलकलः ।
श्रुतोऽभूदत्यर्थं चिरचकितनाकिश्रुतिसुखो
जयोद्घोषः स्फीतः प्लवगशतजन्मा रघुपतेः ॥ १२४ ॥

गतवति लयं दिक्षु ध्वान्तैः सहास्रभुजां बले
मुखरुचिरुचा दीप्त्या विष्वग्विजित्य चकासतः ।
स्फुटपरिमलामातन्वानाः प्रसिद्धिसरोजिनीं
जगदुरुदयं रामार्कस्य प्लवङ्गमरीचयः ॥ १२५ ॥

---

जयति मुग्धमृगाङ्कसुतो बुधः सुरवधूशतगीतगुणोदयः ।
कविगुरूपनतिक्रमवर्धितः स्वपरभागविशेषसमुच्छ्रयः ॥

---

इत्यभिनन्दकृतौ रामचरिते महाकाव्ये राजकुमारचतुष्टयीकदनमेघनादब्रह्मास्त्रमोक्षणससैन्यरामविकलताहनूमदोषधिसमानयनवानरसेनोल्लाघतावर्णनो नाम पञ्चत्रिंशः सर्गः ।



# अथ षट्त्रिंशः सर्गः ॥



तेनोत्तमोत्तमनिजध्वजिनीपतीनामत्याहितेन हतशेषचमूजयाशः ।
ऊचे शुग[1]न्तरितयुद्ध[2]रसो दशास्यः कुम्भेन डिम्भपृतनापतिपुङ्गवेन ॥ १ ॥

देव प्रसीद तव कः पुरुषाधमोऽसौ जाने शयान इव तेन हतः पिता मे ।
प्रत्यग्रबोधरभसे भवति[3] क्व पातस्ताते विलुम्पति वलीमुखयूथपौघान् ॥ २ ॥

आसीदसौ विजयवेगवशात् प्रमादस्तातस्य यत्कवलितः कपिराण्ण हत्वा ।
तत्कारणं मरणमस्य रणेऽधमे वा सृष्टं किमत्र विधिना यमितः करोतु ॥ ३ ॥

एतानि शोकतिमिरोपहतच्छवीनि राजन्ति राक्षसपते न तवाननानि ।
तत्पागिव ज्वल पुलस्त्यकुलप्रदीप कस्ते विपक्षशलभेषु महाविषादः ॥ ४ ॥

दूरं व्यतीत्य कपिकर्दमसमुद्धृतेन म्लानारविन्दलघुना मनुजाननेन ।
क्रीडन् करिष्यति समीकसरोनिवृत्तस्त्वां कुम्भकर्णतनयः सहसा सहासम् ॥ ५ ॥

किं शक्रजित्प्रभृतिभिर्युवराजवीरैः ज्यायोभिरूर्जितसुराजिनियोजनीयैः ।
बालेषु लोलकपिकीटकुलक्षयाय मामेकमादिश निकुम्भमथानुजं मे ॥ ६ ॥

विस्रब्धमादिश किमाहरतु प्रियं ते राजन् प्रियावरजसंभव एष कुम्भः ।
संभावयैनमनुरूपनिदेशदानाच्छिन्धि द्विषन्निधनसूतमिदं[10] प्रदीर्घम् ॥ ७ ॥

कः कर्कशाहवसहे सति कौम्भकर्णौ वीरान्तरार्भकचमूघटनादरस्ते ।
रौद्रौ[11] स्थिते मघवतो रिपुनिग्रहार्थे देवात्मजेषु न वलन्ति विलोचनानि ॥ ८ ॥

भ्रातुः सुतं तमिति वादिनमादरेण संप्रेक्ष्य पङ्क्तिवदनः[12] सदनं विवेश ।
कुम्भः स्मृतागतसमस्तबलाङ्गभेदः संभिद्यते स्म हरिवीरवरूथिनीषु ॥ ९ ॥

तेषामुदारतर[13]सां हरियूथपानां तेषाञ्च तीव्रमह[14]सां निकषासुतानाम् ।
जज्ञे मिथः प्रथम[15]संक्रमसंप्रवृद्धं युद्धं ततस्तुमुलतूर्यरवोर्मिरौद्रम् ॥ १० ॥

१. DC सुता B चा । २. A यो । ३. स बत ४. BC ग. । ५. A स्ट B सृ । ६. D घटि । ७. B C D वसा ८. A ते ९. B C वह D हवसु १०. CD षन्नि धनतस्त्वमदं ११. B C रुद्रे १२. A रिपु १३. B C D मव १४. D नीचमन १५. A C मथन

एषोऽन्तकाधिकभयङ्करसंप्रहारः कुम्भः कुमारपृतनापतिरग्रतो वः ।
संभूयतां त्यजत चापलमित्यवादीत् रुष्टः[2] पुलस्त्यकुलमौलिमणि[3]ः प्लवङ्गान्[4] ॥ ११ ॥

बभ्रूर्ध्वमूर्धजनिबद्धकरालमौलिं तं क्रूरकेकरै[5]र्विलोहितमण्डलाक्षम् ।
उत्कूणितोष्ठपुट[6]विस्फुटदंष्ट्रमापुरुद्वीक्ष्य रोद्धुमसहाः कपयः प्रकम्पम् ॥ १२ ॥

किं विद्विषोऽप्युपचरत्यधुना सुषेणो यन्नोऽभिषेणयति संप्रति कुम्भकर्णः ।
तत्तुल्यमात्मजमुदीक्ष्य तदा क्षमन्ते[8] (?) इत्यूचुरुज्झितगृहीतभयाः प्लवङ्गाः ॥ १३ ॥

सोत्साहमुक्तसविडम्बरसिंहनादः संहारकालघनमेदुरकायबन्धः ।
तेनेऽन्धकार[10]मुपरुध्य सहस्रभासं सोऽस्त्राशनै[11]ः समरभूमिसदां[12] कपीनाम् ॥ १४ ॥

तं संस्मरन्निजपितुर्निकृतिप्रपञ्चं कुम्भः क्रुधा विवृतरौद्रमुखान्तरालः ।
और्वः समुद्रसलिलौघमिवावसानं तन्नेतुमारभत कीशबलं बलीयान्[13] ॥ १५ ॥

आक्रान्तसंमुखसमस्तनभोऽन्तरालमज्ञातनिष्पतितरामशरावलीकम् ।
आलोक्य कङ्कटकरालमुरस्[14]तदीयं दूराद्दुः[15] प्लवगवीरबलानि पृष्ठम् ॥ १६ ॥

कैश्चिद्विवृत्य विवृत्त[16]प्रतिघैरघानि कैश्चिद्ध्य[17]तर्जि स विदूरत एव वीरः ।
कैश्चिद्व्यडम्बि मुखवैकृतडम्बरेण कैश्चित् परीत्य परुषाणि बहून्यभाणि ॥ १७ ॥

इत्यग्रतः कपिभिराहवकेलिलोलैः प्रत्याहतेषु पुनरुक्तमुपप्लवेषु ।
क्रान्तासु चाभिसरडिम्भचमूषु कुम्भः संजातकर्कशविहारकुतूहलोऽभूत् ॥ १८ ॥

ताः पांसुपर्णतृणशाखिमहीधराणां वृष्टीर्विधूय विदधे स वलीमुखेषु ।
केऽमी पुरः क्रमय इत्यनुदीरितास्त्रः शस्त्रव्ययं सदृशसंयुगसंनिबद्धम् ॥ १९ ॥

चुक्षोद कोटिमपिनद्ध प्रयुतं प्रहस्य चिक्षेप लक्षमनवेक्ष्य बभञ्ज पद्मम् ।
शङ्कुं[18] समीकृतलनिश्चलमुच्चखान शाखामृगप्रवरयोधपताकिनीनाम् ॥ २० ॥

स ज्यातलध्वनिविभिन्नदिगन्तरालश्चस्खालै[19] न क्वचिदपि क्षणदाचरेशः ।
बभ्राम संयति युगान्तमरुत्प्रचण्डो निर्धृष्टनीरदलघून् प्लवगान् धुनानः ॥ २१ ॥

---

१. D जघन २. A त्रस्तान् ३. B C णिं ४. D ङ्गाः । ५. B C D रित ६. B C D दष्टोष्ठमुद्गुरविनिर्गत ७. A मीयुः D भासम् ८. B C D नसून् ९. A तदीयमन्तरि । १०. BCD स्वेनात्तसार ११. B C D स प्रासरत् १२. B C सीम १३. A कनी । १४. A च १५. A ययुः १६. A त C वृ १७. B D स B C व १८. B C क्रुद्धः १९. B C D चुक्षोभ ।

क्षिप्तोऽङ्गदः क्षितिमभूद्भ्रमितोऽग्निसूनुः पिष्टो नलः कमलयोनिसुतोऽवधूतः ।
तेन प्रसह्य पिशिताशकिशोरकेण तत्राहवे हनुमतोऽपि हतोऽवलेप[1]ः ॥ २२ ॥

तं भास्करिः स्फुरितभास्वरवक्त्रबिम्बः संवर्तकालतिमिरौघमिवापतन्तम् ।
अभ्यासदत् प्रततपादपशैलवृष्टिः विश्रामदष्टसुविशिष्टतर[2]प्रतापः ॥ २३ ॥

ऊचे स तेन रविसूनुरभिप्रवृत्तो[3] धृष्टेन कच्चिदधिगच्छसि बाहुयुद्धम् ।
ओमित्युदीर्य रभसोन्नतपुच्छकोटिरास्फोटयद्विकटवर्ष्म[4] वलीमुखेन्द्रः ॥ २४ ॥

रक्षः कठोरकरघातविजृम्भमाणस्वोरःस्थसव्यभुजमण्डलचण्डनादम् ।
उन्नद्धगाढघनकर्परमाजिमूर्ध्नि रेजे नियुद्धरभसेन रथावतीर्णम् ॥ २५ ॥

तौ नर्तकाविव ततः क्षणमेकमल्लौ तुल्याहवोत्सवसमागमजातहर्षौ ।
संघर्षहेतुभिरुपस्थितसैन्यचक्रौ चिक्रीडतुर्विकटरीतिभिरङ्गहारैः ॥ २६ ॥

चूर्णीकृताभिरपविध्य[6] गुणान्मणीभि[7]ः वक्षोऽकिरत्कपिकरोटिभिरेव रक्षः[8] ।
शैलैश्च मुष्टिदलितैश्छुरयाम्बभूव पृष्ठोपनीतवनमालमुरो हरीशः ॥ २७ ॥

तौ चित्रहस्तरचनारचितेन्द्रजालौ भूयश्च[9] हस्तपुटमुष्टिनिविष्टशिल्पौ[10] ।
निर्व्यूढबाहुयुगलच्छटको[11]दिभेदादुद्वर्तकैरनुपदं मृधमारभेताम् ॥ २८ ॥

नक्तश्चरेण कपिराट् पिपिषे सुवेले तेन क्षणादविकलेन स चिक्षिपेऽब्धौ ।
तत्कालमेव[12] कलिताङ्घ्रियुगः सपत्नं[13] व्योम्नि प्रदूर[14]मनयत्क्रमणा[15]वसाने ॥ २९ ॥

तेनाप्यकारि समुपेत्य स पूर्णकुम्भः कुम्भेन चुम्बितभुवा विदधे वराही ।
स्वाङ्गानि कच्छपिकया कपिचक्रवर्ती संहृत्य न प्रचलति स्म [16]चलत्यरातौ ॥३०॥

अत्युग्रमुष्टिकुलिशाहतिपिष्टनिष्कावत्युद्धुराङ्घ्रियुगलङ्घितमौलिबन्धौ[17] ।
आघोर्षनिर्गतनिदाघकृताङ्गरागौ तौ रेजतुः स्फुटरुचा निजविक्रमेण ॥ ३१ ॥

एकेन घृष्टं[19] परेण दृढं निपिष्टमन्येन रुद्धमपविद्धमथेतरेण ।
निर्भग्नमस्थि पटिति[20] स्फुटनादमन्येनान्येन वर्म[21][18] चटिति त्रुटदाशु कृष्टम् ॥ ३२ ॥

---

१. B समपि कोपः । B C जजान कोपः । २. C D तरलारिजन ३. A तिप्रविष्टो ४. B C लु ५. A बन्धुर ६. A द्ध ७. A C D नाम् ८. B C D रक्षोऽभिनत्करिकुथादिभिरेकवक्षः । ९. B C स्व १०. BC शल्यौ ११. B CD मुद्गरमुसलोत्कटकादि १२. A त्य १३. A एवम १४. A म्नोऽपि १५. BCD द्रमना १६. B लितःप्र १७. B C रत्नौ १८. A अप्यौघ १९. A पृष्ठ २०. C मडि २१. B C च

तौ केशकेसरसटोदरगाढमुष्टी दंष्ट्राललाम[१]तिलकौ समरोदरेषु ।
अन्योन्यदेहलय[२]निर्जितखर्व[३]चन्द्राविन्द्रादिभिः सुरगणैश्चिरमैक्षिपाताम् ॥ ३३ ॥

द्वावप्युपोढदृढबाहुबलावलेपौ द्वावप्यनेकसमराधिगतप्रतिष्ठौ ।
द्वावप्यमर्ष[४]भरबृंहितसिंहनादौ द्वावप्यजस्रमतिकर्कशसंप्रहारौ ॥ ३४ ॥

द्वावप्युदीर्णरभसोत्करणानुरागौ द्वावप्यसोढपरिकर्म[६]कलाविलम्बौ ।
द्वावप्युदग्रनिजसैन्यजयप्रघोषौ द्वावप्युपास्थितनभश्चरपुष्पवर्षौ ॥ ३५॥

रक्षः कदाऽपि कपिरेव परं कदाऽपि द्वन्द्वं कदापि रज एव तयोः कदापि ।
शब्दः कदापि न किमप्युभयोः कदापि सैन्यैः समस्तमुभयोर्ददृशे कदापि ॥ ३६ ॥

व्यावल्गतोश्च वल[७]तोश्च विनिघ्नतोश्च[८] निर्गच्छतोश्च विशतोश्च[९] नियुद्धमार्गैः ।
दध्वान दूरमनमत् प्रचचाल विष्व[१०]क् विश्वम्भरा भर[११]मसोढ तयोः कथञ्चित् ॥ ३७ ॥

तौ द्वौ तदेति भुवनत्रयबान्धवारी[१२] बन्धोपबन्धविधिभिः सुमहानुबन्धौ ।
संभेजतु[१३]र्भुजसमीकममर्षरौद्रं रुद्रान्तकाविव कपिक्षणदाचरौ द्वौ ॥ ३८ ॥

आलोक्यतामधिपतिः प्रथमं कपीनां निर्वर्ण्यतां तदनु पुण्यजनप्रवीरः ।
किं दर्पणेन पुनरुक्तमुदीक्षितेन जातं समग्रमिदमालि तमालपत्रम् ॥ ३९ ॥

किं दूरमाप[१४]तसि मानसवेगपुत्रि पत्रं न पत्ररथवर्त्म विगाहते नः ।
अत्रैव तिष्ठ निधनोत्सवसाक्षिणीना[१५]मेष्यन्ति नः स्वयममी सुभटाः[१६] समीपम् ॥४०॥

प्रत्यक् प्रतीर्य रिपुबाणनदीरुपेतः सोढा न ते सुभट एष कटाक्षबाणान् ।
एषोऽप्यरातिकरिकुम्भ[१७]विभेददक्षः सन्नस्तवालि कुचकुम्भविलोकनेन ॥ ४१ ॥

एष्वेव निर्वृ[१८]तिघमृत्युरसोद्धुरेषु रम्भे रमस्व रजनीचरपुङ्गवेषु ।
दिव्यानुभावनिरपायरणोत्सवेन वामोरु वानरबलेन किमीक्षितेन ॥ ४२ ॥

कस्येदमानतमुखं सु[१९]भटोत्तमस्य विश्वं[२०] निवेशयसि चेतसि चित्रलेखे ।
अङ्गैः सबाधवलनैरवलोकमात्रात् त्वं कस्य ताम्यसि कृते सखि पत्रलेखे ॥४३॥

किं पृष्टमेव सखि पृच्छसि पञ्चचूडे रुष्टेव किं वदसि मामलके न किञ्चित् ।
उन्मादिनीव किमियं त्वमपीन्द्रलेखे नाख्यासि मय्यपि किमाधिमनङ्गसेने ॥४४॥

---

१. B C D करालवदनौ २. C ज ३. B C D त ४. AB रस ५. BC D प्युपोढ ६. A फ ७. B ल्ग ८. B C नियच्छ ९. B C चल १०. A श्वम् ११. B श्चराचर १२. B C D धकारौ १३. B C मम्लेच D यस्तेचतु १४. A नम D तप १५. D त्वम् १६. B C D विभियः १७. B C णंनबि १८. B C D नत्र १९. A यमानतमुखी २० A बुद्धि

आरादरोचकिनि तिष्ठ तिलोत्तमे त्वमेत्यूर्वशी सरभसात्र विशेषभूषैः ।
वीरप्रिया वियति वीरविमर्दजन्मेत्यङ्गैर्मृधाङ्गणरजोऽपि समाहरन्ती ॥ ४५ ॥

कोऽयं तवाविरतचन्दनपङ्क[1]शेषेष्वङ्गेष्वनङ्गवति कम्पसखो निदाघः ।
एते वचस्सु बत केच तवाप्यकस्माद्धीरे तरङ्गवति गद्गदिकातरङ्गाः ॥ ४६ ॥

एह्येहि देहि सुभगे सुभटाय हस्तं न्यस्तेन किं प्रतिमुहुः (?) प्रतिकर्मणा ते ।
नेतव्य एष सखि सत्वरया कयापि तर्हि त्वयाऽश्रुविधुरं परमासितव्यम् ॥४७॥

दृष्टो रणस्तरुणि ताम्यसि किन्निमित्तं किं व्याकरोति करभोरु तवोरुकम्पैः[3] ।
किं घूर्णसे घनविशालकुचादुरस्तः स्रस्तं समुद्धर वराङ्गि वरांशुकान्तम् ॥ ४८ ॥

वीरद्रुमं कमवलम्बितुमम्बरेऽस्मिन्नुद्वेल्लसीत्थमलसाऽपि लते लतेव ।
कस्यानुभावमयमाह तवाप्यकस्मादुत्फुल्लसत्परिमलो मुकुले विकासः ॥ ४९ ॥

हंसीव हंसगमने किमियं कुचाभ्यां कं चुम्बतीव सखि संनमताऽऽननेन
त्वं चाग्रतः किमिव कामिनि मन्यमाना मन्यूत्तरैर्वियदुपालभसे वचोभिः ॥ ५० ॥

गत्वा विमानमणिवीथिमिमां विविक्तमङ्गानि देहि सुरसिन्धुसमीरणाय ।
निर्वातु निर्गतकणः कुचयोरयं ते वीरव्रजोच्चयपरिश्रमजो निदाघः ॥ ५१ ॥

सङ्कल्पसंनिहितवीरभुजोपगूढा बाढं निमीलसि मुधैव मदालसे त्वम् ।
त्वं चाप्यसंशयमलीकवियोगतापं मेने विनोदयसि चन्दनचर्चिकाभिः ॥ ५२ ॥

दृष्टाः प्रहृष्टमनसः सुभटाः सहस्रमभ्यागताः शतममी जयिनो युवानः ।
कर्तव्यमस्ति रतिमन्दिरमिन्दुमौलेर्यामः किमाहवसमाप्तिसमीक्षणेन ॥ ५३ ॥

केऽमी समस्तगगनेचरचक्रवर्तिसाधारणाः सुरगिरेः शिखरप्रदेशाः ।
यत्सत्यमेतदपि संप्रति नाकपृष्ठं नार्हत्यमून् प्रकटिताद्भुतशौर्यशोभान् ॥ ५४ ॥

पद्मोदरेष्वपि शिराः करजैरुदस्य प्रान्ते निवेश्य कलमञ्जुगिरः षडङ्घ्रीन् ।
मध्येविमानमभिमानिनि पुष्पशय्या कस्यातिवल्लभतरस्य कृते कृतेयम् ॥ ५५ ॥

अर्हन्त्यमी तव घनस्तनि हस्तमाराद्वीरा विमानपरिवेषतलान्तभाजः ।
एते च सोढसुदृढारिपृषत्कवर्षा वर्षं मुहुः सुमनसां मधुशीतलानाम् ॥ ५६ ॥

इत्याहवं तमवलोकितुमागतानां वाचः प्रहृष्टसुभटान्तरदर्शनोत्थाः ।
ईर्ष्याकषायहृदयैस्त्रिदिवाङ्गनानामाकर्णिताः कथमपि त्रिदशप्रवीरैः ॥ ५७ ॥

१. C D शो २ B C D तवावलम्बितेव ३ B C D वातकम्पा

सोऽभज्यताथ रणमूर्ध्नि कपीश्वरेण कुम्भः क्षितिः क्षतजवारिभिराप्लुताऽभूत
दासीव दर्शितमहाभयवेगदीना सेना निवृत्य दशकण्ठतले पपात ॥ ५८ ॥

विज्ञाय कुम्भनिधनं रजनीचरेन्द्रः चक्रन्द योषिदिव दुर्धरशोकवेगः ।
अत्रान्तरे तदखिलं पुरमाततान हाहेति रुद्धसकलध्वनिरार्तनादः ॥ ५९ ॥

प्रत्यालयं तदनु वीरपरिग्रहाणां जज्ञेऽनुमाररवतूर्यरवोर्मिरुच्चैः ।
तेनाहतो जलधरागमनिम्नगायाः कूलद्रुमं दशमुखस्तुलयाम्बभूव ॥ ६० ॥

हा मातुलप्रभृतयः क्षणदाचरेन्द्राः दूरीकृतः किमयमेकपदे दशास्यः ।
एह्येहि कुम्भ मम देहि भुजावलम्बमित्यूचिवान् दशमुखः सुचिरं जुघूर्णे ॥ ६१ ॥

भेजे निकुम्भ इति कुम्भजघन्यजस्तं जन्योत्सवादरतिरस्कृतशोकदैन्यः ।
ऊचे च संभ्रमविशेषितमन्युवेगमुद्वेगलङ्घितविकत्थनसंनिरोधः ॥ ६२ ॥

शोकस्य लोकनिधनोद्धुर कः क्रमोऽयं कालोऽयमप्रतिहतः प्रतिघानलस्य ।
शाधि त्रिलोकमखिलं कवलीकरोमि कस्तापसः कपिकुमिध्वजिनीसमेतः ॥ ६३ ॥

पित्रा न यत्कृतमनुत्तमपौरुषेण भ्रात्रा च तेन जगदद्भुतविक्रमेण ।
प्राप्तेन रूपमनयोरनुशासनाभ्यां तत् पश्य तात कृतमद्य मयाऽऽजिमूर्ध्नि ॥ ६४ ॥

स्थूलोच्चयान् प्रथमतः प्लवगानशुङ्क्ष भूयश्च यः समिति शेषयति स्म कांश्चित् ।
सोऽयं समापयति संप्रति विद्विषस्ते तातस्तृतीयमवलम्ब्य निजप्रभेदम् ॥ ६५ ॥

आरामलक्ष्मणवधाद्गुरुणा गृहीतस्तेन प्लवङ्गपृतनानिधनाधिकारः ।
दूरान्तरोऽपि सुतसञ्चरितात्मरूपः तातः स एव तव तात निहन्ति शत्रून् ॥ ६६ ॥

जातोऽस्मि वर्मदरं एष शिशुर्न सोऽहं[3] को मां सहेत भवदङ्कतलप्ररूढम् ।
नालोक्यते मदकलैरपि जृम्भमाणः सन्दिग्धदन्तमुकुलो मृगराजशावः ॥ ६७ ॥

उच्छिष्टतामुपगतौ[5] रणमूर्ध्नि गुर्वोः[6] गुर्वाहवोत्सवरसप्रसृतो निकुम्भः ।
तावद्य मर्त्यमृतकौ भवतो निदेशान्निश्शेषतां नयतु पश्य दिशो विविक्ताः ॥ ६८ ॥

आनीय वीतगुरुचापरवौ कराभ्यां युद्धोद्धताग्रहरिवीरतरङ्गमालौ ।
तावुत्पिबन् युगपदुच्चलिताविवाब्धी कुम्भोद्भवं हसतु कुम्भजघन्यजन्मा ॥ ६९ ॥

१. BCD कुमारवध. २. BCD वंध । ३. A द्रुम् । ४. BC त्तिष्ट । ५. BC तौ । ६. BC गवों ।
७. AC D धीर or वीर ८. BCD क्षुद्योद्ध ।

उक्त्वा गता बहुतरं बहवस्तवाग्रे तद्गर्जितेन किमकारणमूर्जितेन ।
तात प्रसीदसि रणाङ्गण एव शृण्वन् भ्रातुः सुतस्य मम शत्रुषु सिंहनादम् ॥७०॥

गच्छामि शत्रुकदनाय किमाज्ञया ते को वल्लभानुजसुतस्य ममोपराधः ।
सत्यं पितुः शिशुरहं तदपि द्विपस्तानग्नेः कणस्तृणचयानिव निर्दहामि ॥७१ ॥

तेनात्मनः शिशुजनस्य सुभाषितेन तद्वैमनस्यमजहात् क्षणदाचरेन्द्रः ।
अन्तर्गतस्य कथयन् प्रमदस्य भासमास्यैरवोचदिति विस्फुरिताधरैस्तम् ॥ ७२ ॥

एह्येहि वत्स गुरुवत्सल शौर्यशालिन्नालिङ्ग मां विनयबन्धुर वीतबन्धुर्म्[1] ।
जानामि वक्ति पुरतो मम कुम्भकर्णः कुम्भोऽथवा पुनरुपेत्य रिपुक्षयाय ॥७३॥

यत्सत्यमुक्तमिति न प्रथमं प्रदीप्तं[2] ताभ्यामपि प्रधनकर्मणि दीक्षिताभ्याम् ।
किं भूयसा यदि वदेत्[3] पुरतो हरस्य क्रौञ्चारिरादिसुरवीरवधार्थमेवम् ॥ ७४ ॥

त्वां वक्ति कः शिशुरिति स्फुटवाचमेवं त्वं नः कुमार कुलवृद्धतमेषु कोऽपि ।
यत्प्राप्तकालमनुतिष्ठ तदात्मनैव जानाति वः किमपि संप्रति नैष नेता ॥ ७५ ॥

मां चेत् प्रमाणयसि वत्स भजस्व मायां मायाबलेन बलिनो वयमाहवेषु ।
तामन्तरेण रणमूर्ध्नि गतौ गुरू ते मुक्तो युनक्ति कुशलैर्न खलु स्वैधर्मः ॥७६॥

इत्यादि तोषभरगद्गदकण्ठमुक्त्वा मुक्त्वा शुचं सकलबन्धुभवां दशास्यः ।
विश्रम्य[6] विश्रुतभयङ्करसाहसेनं[7] सेनापतिर्त्वविजयाय तमादिदेश ॥ ७७ ॥

अविशदथ रथी बलं कपीनां कपिशशिखण्डकभासुरो निकुम्भः ।
अधिगतचरमानिलश्वैलार्चिश्चयरुचिरोऽग्निरिवौघमाङ्घ्रिपानाम् ॥ ७८ ॥

प्रथमजवधमन्युदीपितेन प्रकटमपि प्रधनाङ्गणोद्गतेन ।
प्लवगपरिवृढस्य तेन तेजः शिखिन इवाह्नि विवस्वता निरुद्धम् ॥ ७९ ॥

रघुवृषभपुरोगास्तेऽथ शाखामृगेन्द्राः दशमुखशिशुसेनानायकेनाशु तेन ।
बलिभुज इव नक्तं नीडवृक्षाग्रलीनाः तिमिरनिकरभाजा जघ्निरे कौशिकेन॥ ८० ॥

हरिपतिमथ मार्गन्मार्गवाहिं स वेगादुपनतमुपतस्थे यूथपेषु द्रवत्सु ।
दिनमणिमुपरुन्धन् तत्क्षणात्प्राट्पेण्यैः[10] पवनमिव पयोदः प्रोषितेष्वाकुलेषु[11] ॥ ८१ ॥

---

१. BCD रवन्धो । २. BCD नं प्रदिष्टम् । ३. D दन् । ४. B कुलस्य ५. D टाम् ६. B D श्रान्त
७. B C D माहसेनाः ८. A नाःसपत्न ९. B C लाश्च १०. A शुचिसमयनिरोधाद्युत्थितो विप्रतीपं
११ B D प्रोषितस्त्रीकुलेषु ।

प्रवृद्धः किं विन्ध्यः पुनरपि निरोद्धुं रविरथं[1]
निकुम्भो निष्क्रान्तः किमयमथ कुम्भान्तकुपितः ।
कपिस्कन्धावारे कनकशिखरीवोल्लसति कः[2]
स नूनं सामीरिः स्फुटमिति जगुर्देवनिवहाः ॥ ८२ ॥

तयोरासीद्दीर्घः तरुपरशुपातव्यतिकरः
ततो जज्ञे भूयानचलकुलिशोत्सर्गरभसः[3] ।
ततो दन्तादन्ति प्रधनमभवत्तुल्यरसयो[4]–
रसुग्रन्थिच्छेदं कपिरकृत कृच्छ्रादथ[5] रिपोः ॥ ८३ ॥

ननाद सुरदुन्दुभिर्भुवमियाय पुष्पं दिवो
जगुस्त्रिदशचारणा ननृतुरप्सरःश्रेणयः ।
भृशं ववृषुराशिषो मुनिगणाः समीरात्मजे
जुगूह मघवा मुदं[6] सपदि[7] मेघनादं स्मरन् ॥ ८४ ॥

विभीषणमभाषत प्लवगराड् जितो रावणः
तमोमिति जगाद स श्लथ इवावशेषेक्षणात् ।
खरात्मजविकत्थनाद्वितथमेव हर्षं ययौ[9]
निकुम्भनिधनेऽपि यद्दशमुखस्य सा मूर्खता ॥ ८५ ॥

—— ——

१. A नवि २. D रस्थूलगतिकः । ३. B तलपातप्रहरणः । D शानर्थरभसः । ४. BC तरसोः D रमसोः ५. A सुहृदः । ६. BCD मुदमङ्गदः ७. A मनसि ८. B णिः ९. BC पौंचयो

जयति[1] जगन्ति भ्रमन्ती कीर्त्या सह हारवर्षनृपशशिनः ।
शिरसि कृता कृतविद्यैः कृतिरियमार्याविलासस्य ॥

ऋक्षाणां[2] भूरिधाम्नां श्रितमधिपतिना प्रस्फुरद्भीमतारं
स्फारं नेत्रानलेन प्रसभमनियमितोच्चापमीनध्वजेन ।
रामायत्तं पुरारेः कुमुदशुचि लसन्नीलसुग्रीवमङ्गं
प्लावङ्गं सैन्यमन्यद्दशवदनशिरश्छेदहेतुः श्रियेऽस्तु ॥

पौलान्वयाम्बुजवनैकविरोचनाय[3]
तस्मै नमोऽस्तु युवराजनरेश्वराय ।
कोटिप्रदानघटितोज्ज्वलकीर्तिमूर्तिः
येनामरत्वपदवीं गमितोऽभिनन्दः ॥

किं शीधुभिर्भवतु फाणितशर्कराद्यैः
किं वा सितासहचरैः क्वथितैश्च दुग्धैः ।
दुग्धाब्धिलब्धसुधया च किमन्यदेव
यत्राभिनन्दसुकवेर्विचरन्ति वाचः ॥

तथा गृही न पौत्राणां नवोढानाञ्च योषिताम् ।
युवराजः कवीन्द्राणां प्रणयान्मोदते यथा ॥

इत्यभिनन्दकृतौ रामचरिते महाकाव्ये कुम्भनिकुम्भवधवर्णनो नाम षट्त्रिंशः सर्गः ।



१. C D omit this sloka. २ B only reads this sloka. ३ C only reads these three slokas.

## परिशिष्टम्[1] । १ ।

# अथ सप्तत्रिंशः सर्गः ॥



अथ कुमारकुलक्षयकातरं पितरमेत्य सरोषमिवाब्रवीत् ।
धृतसुदुर्विषहश्रवणज्वरं परबले रवलेपिनि शक्रजित् ॥ १ ॥

जितवतस्तव तात जगत्पुरा क इव हस्तमदत्त सनाभिषु ।
ननु जुषः स्वयमेव जयत्वरां गतवती तव तीव्ररुषः क्व सा ॥ २ ॥

किमनुशोचसि निष्फलमर्भकान् क इव कर्कशवर्त्मसु तेऽरिषु ।
तव समृद्धिरुपैतु मयि स्फुरत्करणके रणकेलिविलोकनम् ॥ ३ ॥

किमिव सीदसि कुप्यसि मे न चेत् किमिव तात न योजितवानसि ।
अनवधानविवर्धितविद्रवः स्वपृथुकं पृथुकम्पकृतं द्विषाम् ॥ ४ ॥

क्व स रथः खरकोटिधुरन्धरः क्षणमितः समुपेत्य विलोकय ।
कलितजैत्रपरिच्छदसंहतेर्मम रणं मरणं च वनौकसाम् ॥ ५ ॥

तव लसन्तु गृहेषु महोत्सवाः प्रविश तात नियुज्य रणाय माम् ।
जयसि यासि न भाजनतां शुचः पृतनया तनयार्पितया पुनः ॥ ६ ॥

किरतु संप्रति संसरणस्थलीः विशिखजालमनन्तरमेव ते (मे) ।
किमपरं निपतन्नवलोक्यतां रिपुरसौ पुरसौधशिखाततेः ॥ ७ ॥

जय पितः कुपितः कलशोद्भवं भज निजासनमेतदचञ्चलम् ।
उपहरामि तवोत्कलिकाकुलं कपिबलं पिब लङ्घितसागरम् ॥ ८ ॥

इति वदन्तमभाषत रावणस्तनयमिन्द्रजितं जितवेदनः ।
जयति वत्स भवान्न वहन्त्यमी मम करा मकराक्षपरिक्षये ॥ ९ ॥

अपिच वत्स न विस्मृतिमीयते समरमूर्ध्नि स कुम्भनिकुम्भयोः ।
प्लवगवीरकदम्बकनिग्रहः श्रमसहे मसहेतुरसुव्ययः (?) ॥ १० ॥

प्रहर दूरत एव जय च्छलाद्विचर वत्स परेष्ववधानवान् ।
श्रवणयोः कथयामि निशम्यतां न सुतरां सुत रामशरावली ॥ ११ ॥

---

[1] बहुमातृकासंवादेन शैलीतारतम्येन चाभिनन्दस्य कृतिः षट्त्रिंशत्सर्गान्ते विच्छिन्नेति संभाव्यते । इदश्च परिशिष्टमन्येन कविनाऽभिनन्दनाम्ना प्रक्षिप्य पूरितमित्यपि प्रतीयते ।

जयकलाः सकलास्त्वमधीतवान् गुरुरसि च्छलयुद्धविपश्चिताम् ।
अवितथं त्वमभीप्सितमीशिषे गमयितुं मयि तुङ्गमनोरथः ॥ १२ ॥

न मनसा विमृशामि नरद्वयं न कलयामि कपीनितरानपि ।
त्वयि तनूज कठोरपराक्रमे हनुमतोऽनुमतोऽद्य मम क्षयः ॥ १३ ॥

नगरदाहपराभवपांसुना मलिनमात्मकुलं धवलीकुरु ।
त्वयि समाप्तिमुपैतु स वातभूर्द्रवकरोऽवकरोपमतां गतः ॥ १४ ॥

स्मरसि तात सुरेन्द्रजयं मम प्लवगजन्तुषु कैव समित्कथा ।
सदृशमादिश देहि जयाशिषं जय मया यमयामि नरौ पुनः ॥ १५ ॥

स वच इत्यभिधाय समुल्लसद्विकटकाञ्चनकेसरिकेतुना ।
रथवरेण रणाङ्गमधावत ध्वनिभृता निभतारिमहाभटः ॥ १६ ॥

अनुययुस्तमुदीरितभीषणध्वजवरूथवितानकुथा रथाः ।
प्लवगचक्रचमत्कृतिकारिणः प्रयुतशोऽयुतशोभिसमृद्धयः ॥ १७ ॥

प्रहरणाभरणप्रभया पुनः कपिकुलं स चकार चमत्कृतम् ।
नरयुगं परमैक्षत सोऽग्रतः सुरुचिरं रुचिरञ्जितदिङ्मुखः ॥ १८ ॥

प्रकिरतस्तरुभिः प्रथमं कपीनुपजहास दशाननन्दनः ।
न पिदधे विशिखैरचलायुधान्न समरे समरेचितविक्रमान् ॥ १९ ॥

ययुरसृग्भुजि पर्वतवृष्टयः प्रतिहतिं प्लवगध्वजिनीरिताः ।
हनुमतः प्रविवेश न साऽङ्गकेष्वपि शिता पिशिताशशरावली ॥ २० ॥

हरिपृथुक्रथनीलनलाङ्गदा द्विविदकेसरितारदरीमुखाः ।
युयुधिरे सह दंष्ट्रिभिरस्त्रपैः सुदशना दश नायकयूथपाः ॥ २१ ॥

हरिरमार्गदनर्गलविक्रमान् शतबलिर्विममर्द बलीयसः ।
अभिजघान दशाननन्दनादनितरानितरान्न (न्स) समीरभूः ॥ २२ ॥

विटपिभिः स पिपेष धुरन्धरान् ध्वजमपातयदस्य महीधरैः ।
अकृत सूतमभीक्ष्णमुपप्लवैर्विधुरितं धुरि तंतुशतैर्युतम् ॥ २३ ॥

अभजतान्यमथाहवसाधनं पितृनिदेशनिधापितमिन्द्रजित् ।
अपि मुहूर्तमभून्न स विघ्नवानुपरतः परतश्च स मारुतिः ॥ २४ ॥

तमजयत् प्लवगं त्रिदशेन्द्रजित्तदुपरुद्धरथो ददृशे न सः ।
पुनरजृम्भत रावणिरानिलिः पुनरसौ नरसौष्ठवहृद्धभौ ॥ २५ ॥

अभिजघान घनैर्घटमुष्टिभिर्निकटमेत्य निशाचरमानिलिः ।
प्रतिजघान निवृत्य स मुद्गरैरुरसि तं रसितं बहु मोचयन् ॥ २६ ॥

सच शचीरमणैकरिपुः कपेस्तदसहन्मुहुराहवचापलम् ।
अविचलन् बलवानपि दोर्बलान्निजगृहे जगृहे किल तेन सः ॥ २७ ॥

कपिरुवाच तमुद्धतवालधिर्विजितवानसि यत्समयैव मे (माम्) ।
प्रहर तद्वदुपैषि न संप्रति प्रकुपितः कुपितस्त्वयि मारुतिः ॥ २८ ॥

यदपराद्धमृषिष्वसकृत्त्वया पितुरधीतमसच्चरितं च यत् ।
गुणलवो न यदार्यविभीषणादधिगतो धिगतो भवदुद्भवम् ॥ २९ ॥

तमितिवादिनमिन्द्रजयी हसन् प्रतिजगाद वलीमुखमग्रतः ।
गुरुरिव प्लवगाधम किं वदस्ययमितो यमितोऽद्य भविष्यसि ॥ ३० ॥

स्मरसि यत्तदनेन महौजसा नियमितोऽधिगलं निशि नीयसे।
तव करोतु किमद्य स रावणिर्वि(र्वे)द हरे दह रे नगरं पुनः ॥ ३१ ॥

प्रभुरुपैतु स ते रविनन्दनः सच पुमानुपसर्पतु सानुजः ।
त्वमपि तिष्ठ तथा सति मे सदृग्भुजवतो जवतोऽधिगतो मृधः ॥ ३२ ॥

दशरथात्मजयोस्तपनात्मजे त्वयि च वज्रतनौ पवनात्मजे ।
जयनिकामसमाप्तिरवाच्यतामयति मे यतिमेति नराधमे (?) ॥ ३३ ॥

प्रहर तत्प्रभुयुग्मपुरस्कृतः क्षिपसि कालमकारणमेव किम् ।
अथ परिश्रमवानसि गम्यतामयमहं यमहन्तृसमः स्थितः ॥ ३४ ॥

जनयिता पवनस्तव कोन्वसौ चरति नः पुरि पौरमनोरथैः ।
मम पिताऽधिगतैरभवद्वरैर्गिरिशतोऽरिशतोष्मनिषूदनः ॥ ३५ ॥

इति मिथः स्फुटवाग्व्ययिनोस्तयोः सुभटयोर्झटिति ज्वलितं मनः ।
प्रववृते समरः समवीर्ययोः सुरसभे रसभेदमपश्यति ॥ ३६ ॥

स गत (तदनु) चित्तमकारि वलीमुखं दशमुखप्रभवेण रणाङ्गणात् ।
कुसृतिभिर्विनिवर्तयितुं असह्यतमदा तमदात्तपराक्रमम् ॥ ३७ ॥

अथ भयाकुलपक्ष्मललोचना हनुमतः पथि लोचनयोरभूत् ।
उपगता युवतिर्विरहातुरा धुरमरेरमरेन्द्रजितः स्फुटम् ॥ ३८ ॥

तदुपमानदरिद्रमिदं मुखं तदिदमाश्रवणं द्वितयं दृशोः ।
चरणपाणि तदेतादिदं वपुस्तदिव सा दिवसान्तसरोजिनी ॥ ३९ ॥

इति वितर्कनिपातितसंभ्रमस्तिमितनेत्रयुगेन हनूमता ।
निगमिता गृहिणी जगतः प्रभोः प्रतिभयातिभयाकुलभाषिणी ॥ ४० ॥

किमपरं रभसः स निशाचरः शितमसिं परिगृह्य लुलाव ताम् ।
चिरमघूर्णत वीक्ष्य तदाऽऽनिलिः करुणयाऽरुणया रहितस्त्विषा ॥ ४१ ॥

अवसराधिगमेऽपससार स प्रतिययौ कपिरप्यतिकातरः ।
किमिदमित्यथ पृच्छति राघवे तदवदद्दवदग्ध इव द्रुमः ॥ ४२ ॥

अहह किं वदसीति विशुश्रुवे रघुपतेरुदभून्न वचस्ततः ।
अवरजः कथमप्युपसान्त्वनैरतमसं तमसन्नमिवाकरोत् ॥ ॥ ४३ ॥

इति जगाद च तं विशदं मनाक् किमियताऽऽर्य गतोऽसि विजिह्मताम् ।
असदृशग्रहकल्मषपावके बहुतराहुतराज्य तवाहवः(?) ॥ ४४ ॥

बत यदोज्झितवानसि गामिमां तव तदैव गताऽऽर्य महिष्यपि ।
सुविशदाहवलभ्यमनामयं भुजपदं जप दम्भविनाकृतः ॥ ४५ ॥

अपितु राज्यसुखेषु घृणावतस्तव तपोवनमेव हृदि स्थितम् ।
शुभमभूद्यदभाग्यवती गता न भवतो भवतोऽद्य भयं क्वचित् ॥ ४६ ॥

नरपतिर्भरतो जननीबलादवनिमद्य भुनक्ति ससागराम् ।
त्वमहमित्युभयं विधिना हतं निधनभाग्धनभाग्यविवर्जितम् ॥ ४७ ॥

जयति नः कुलवेश्मनि मन्थरा वितनुतेऽद्य न किञ्चन कैकयी ।
परगृहेष्विव ते परमावयोर्वनगयोर्नगयोरिव शुष्कयोः ॥ ४८ ॥

धनमिति स्फुटमुच्छ्वसितं नृणामपधनोऽपगतासुरुदाहृतः ।
मलिनिमापि जडैरभिनन्द्यते धनवतो नवतोयभृतो यथा ॥ ४९ ॥

भज महाव्रतमेहि महावनं प्रविश वा दहनं सहलक्ष्मणः ।
स्फुरसि न त्वमतीर्णपराभवस्तव तमो बत मोक्षपथोऽप्यसौ ॥ ५० ॥

जुहुधि देहमिहैव महाहवे मयि समित्तुलया सुहुते पुनः ।
भवति शुद्धिरवन्ध्यपथार्पिता तव दशा वद शाम्यति केन सा (?) ॥ ५१ ॥

उपनताऽऽर्य तव स्वपदत्यजः सुमहतीयमनर्थपरम्परा ।
किमधुनाऽधमवत्परितप्यसे ननु भवान्नु भवापदि विज्वरः ॥ ५२ ॥

इदमुशन्ति नराधमलक्षणं विपदि यद्विधुरत्वपरिग्रहः ।
स्खलति चित्तगतिर्विषमे लघोः सुमहतामहता हि मनोरथाः ॥ ५३ ॥

व्रज रणाजिरमास्स्व मुधा रुदन्नयमहं विनिहन्मि तव द्विषः ।
बत स एष न तेऽवरजोऽधुना निभरतं भरतं हतवान्न यः ॥ ५४ ॥

बलमपेतमिदं विपिनौकसां वद विभीषणमेत्वभयां दिशम् ।
युधि न यावदिह क्रियतेऽरिणा स(श)कलशः कलशः सुनयाम्भसाम् ॥ ५५ ॥

अथ जगाद निजं बलमाकुलं द्रुतमुपेत्य कुतोऽपि विभीषणः ।
कपटमेतादिति क्व विदेहभूर्निहत तं हततन्त्रमसृग्भुजम् ॥ ५६ ॥

इदमसत्यमसत्यमरातिना कपिरयं पिशुनेन निवर्तितः ।
कृतकया जनकात्मजया रणे निहतया हत यातुचमूशतम् ॥ ५७ ॥

ऋजुरयं पवमानसुतः कपिः स्फुटमुपैति समस्तमरेरपि ।
भगवती हतरावणसूनुना शकलिता कलिता यदनेन सा ॥ ५८ ॥

शृणुत रामकपीश्वरलक्ष्मणाः प्रहरतीन्द्रजिदित्थमरातिषु ।
इदमनित्थमपोहितुमुद्गता युवतयो बत योधतमा अपि ॥ ५९ ॥

इति विधाय गतः स निकुम्भिलामभिचरन्निशि तिष्ठति तत्र सः ।
कुरुत विघ्नमुपेत्य स हन्यतामितरथा तरथास्य न वाहिनीम् ॥ ६० ॥

निकटसिद्धिरसौ विधिरस्य भोः प्रतिहतः क्रियतां कपिभिर्द्रुतम् ।
पततु रावणिना सह रावणः प्रभवतां भवतां कथितं मया ॥ ६१ ॥

अथ विभीषणमारुतिजाम्बवत्प्रमुखविश्रुतवीरचमूवृतः ।
अभिययावनुजस्त्रिजगत्पतेस्तमहितं महितं मरुतामपि ॥ ६२ ॥

श्रुतिमुपेयुषि लक्ष्मणसंश्रवे तदभिचारविधानपरोऽभवत् ।
प्रसभमाहवमूर्ध्नि महेन्द्रजिन्न सहते सह तेन शरव्ययम् ॥ ६३ ॥

उदगमन् कपयः पितृकाननं तदपि यत्र स पुण्यजनः शनैः ।
मखमथर्वमहोष्मसमर्थकं मतनुतेऽतनुतेजासि रावणे ॥ ६४ ॥

कपिभिराददिरेऽथ निकुम्भिलाककुदभूतमहावटमूलगाः ।
क्षतजमज्जवसाघृतपिच्छिलाः सरणयो रणयोग्यवहिर्भुवः ॥ ६५ ॥

जुहुधि जोषमुदेति हुताशनात्तव रथोऽयमदूरमनोरथः ।
रथकुटुम्बिन एष शिरोमणेः करचयो रचयोरि(मि)तिमा(सा)दरम् ॥ ६६ ॥

अयमसिः सुतया ( गदया ) सह सिध्यति स्फुरति कुन्तलताग्रमिदं पुरः ।
इदमुदेति निपीय जुहूमुखाद् घृतवसे तव सेषुधिकं धनुः ॥ ६७ ॥

इदमितश्च यथायथमाहितस्फुरितवेगविडम्बरमीक्ष्यते ।
कुलमिव स्फुटमम्भसि यादसां हुतवहे तव हेतिकदम्बकम् ॥ ६८ ॥

जय कपीनखिलान् जय राघवौ जय कुलद्विपमाशु विभीषणम् ।
किमपरं मदनारिमधुद्विषौ सविधिकौ विधिकौशलतो जय ॥ ६९ ॥

जय दशाननपुत्र जगत्रयं हयरवः श्रुतिमेति महानयम् ।
लसति हास्तिकमेतदतिस्फुटं ध्वजपटं जपटङ्कृतिनिर्गतम् ॥ ७० ॥

इत इतः खलु शौर्यरसादमी समुदयन्त्यसिवर्मभृतो भटाः ।
रणति रावणनन्दन दुन्दुभिर्विजयदो जयदोहदिनस्तव ॥ ७१ ॥

परिसमाप्त इव क्रतुरेष भोः कतिचिदाहुतयः परमासते ।
कुरु पितुः करणीयमिदं क्रुधो जय जवं यज बन्धुरिताननः ॥ ७२ ॥

इयमुपप्लवकारकवानरव्रजमयी भवतो बत कैव भूः ।
जयसि कर्मबलोपनतामरत्रय दिवं यदि वञ्चयसि क्षणात् ॥ ७३ ॥

इदमुदेति समिद्धरबन्धुरं कवचरत्नमितश्च शनैः शनैः ।
भगवता विधिनैव समन्ततो घृतवता तव तात विनिर्मितम् ॥ ७४ ॥

ग्रहजुहूसमिदाज्यचरुस्रुचामुपरि पश्य चमूं चतुरङ्गिणीम् ।
परिगृहाण कृती सकलामिमामव कुलं वकुलं तव राघवः ॥ ७५ ॥

अयमहं भवतः कुलदेवता कमलभूर्वद वत्स किमिच्छसि ।
जगदिदं वितरामि तवाचिरादकलहं कलहंसमपि स्वकम् ॥ ७६ ॥

रिपुरपि क्रतुयापितमत्सरः शृणु सुजात यदाह जनार्दनः ॥
निभृतमास्व निहन्त्यहितानयं तव यमो वयमोमिति च स्तुमः ॥ ७७ ॥

सततसन्ततमर्चति रावणस्त्वमपि तर्पयसीत्थमतः स ते (?) ।
भवसि वत्स शिवस्य गुहादपि प्रियतरो यतरोपरयो रुचः (?) ॥ ७८ ॥

विशसिताः पशवः शतसंख्यया धनभरैर्गमिता मुदमृत्विजः ।
निमिषमेधि यथाविधि मा विधेर्बलवतो लवतोऽपि कृथाः क्षतिम् ॥ ७९ ॥

इदमनीकमनेकपरिच्छदं विभव एष धनाधिपदुर्लभः ।
तव जयाय समृद्धिरियं चरोरुदयते दयते विधिदेवता ॥ ८० ॥

इति निशम्य निशाचरसंपदं कपिवरप्रकराः पुरतोमुखाः ।
विलुलितं व्यधुराहितमीहितं हविरतो विरतो विधिरस्त्विति ॥ ८१ ॥

नुनुदुरुन्नदतः सदयं पशून् विजहसुर्विघृणं शतमृत्विजाम् ।
परिययुर्यजमानमनु क्षमाधृतरुषं तरुषण्डतलस्थितम् ॥ ८२ ॥

किमसि भो निभृतः कपियूथपैरयमसृक्पिशिताहुतिलालितः ।
अभिमुखैरपि वेद विलुप्यते हुतवहस्तव हस्तविदूषितः ॥ ८३ ॥

स्वयमशान शवामिषमाहितं क इव मूर्ख तवैष मखग्रहः ।
हसति लक्ष्मण एष विलक्ष ते समरतोऽमरतोषमुपाहर ॥ ८४ ॥

उपरतोऽसि न जीवसि रावणे तव यशो गतमिन्द्रजयार्जितम् ।
न यदिदं झटिति स्फुटमानया रिपुरुषा पुरुषाधम दीप्यसे ॥ ८५ ॥

निकृतिभिर्निकटेषु हरीश्वरास्त्वरितमाहरतास्य हृदि क्रुधः ।
इह तथा सति विक्रमतामरौ सुरपतेरपतेजसि लक्ष्मणः ॥ ८६ ॥

इति वचोऽनुपदं कपिविद्रवे महति मुक्तसमाधिपरिग्रहः ।
अभजत क्रुधमैक्षत नाध्वरश्रियमसौ यमसौहृदमोहितः ॥ ८७ ॥

मुदमगुस्तमुदीक्ष्य वनौकसः प्रतिगताद्भुतनूतनसंपदम् ।
स्मृतसमेतसमस्तचिरन्तनप्रधनसाधनसाध्यजयश्रियम् ॥ ८८ ॥

पृथगुपेतगृहीतचिरिद्रुमः कपिगणस्तमुपेत्य समाह्वत ।
स हनुमन्तमभाषत भारतीमिति मितां तिमितां मदवीचिभिः ॥८९॥

युगशतान्तरिताहवकर्मवित्तमरुणत्तरसाऽधिकविक्रमः ।
प्रसभमृक्षपतिः क्षणदाचरं हरिवरैरवरैरुदितोदितम् ॥ ९० ॥

गतिरहो वपुरेतदहो बत व्रज कपीन् कवलीकुरु नाकुषु ।
क इव वैकृतयुक्तिभवानिति स्थविरतो विरतो युधि सोऽभवत् (?) ॥ ९१ ॥

समुपयातु युवा बलवान् स वो मम समत्वसहः समरेषु यः ।
विरम नश्य विषीद न सर्वथा जरति रे रतिरेति भवादृशि ॥ ९२ ॥

वद पितृव्य गदायुधकौशलं यदि चिरेण न विस्मृतवानसि ।
व्रजति शोषमपक्रमरोपिताऽत्तनयतोऽनयतोयनिधिर्भवान् ॥ ९३ ॥

कुलविनाशपटो रिपुनन्दन व्रज विभीषण नैष विलोक्यसे ।
मितनिमित्तगतागतगर्हितादपि शुनः पिशुनः परिभूयते ॥ ९४ ॥

त्वमपि पूयसमीरणज व्रज स्वभुजरोपितलक्ष्मणमस्तकः ।
प्रथमजो धृतिमेतु विडम्बयन्नवरजं वरजम्बुकतां गतः ॥ ९५ ॥

इति निगद्य निरन्तरपातिनामुपरि तेन करद्वयशालिना ।
शरततिर्विततां विपिनौकसां निधनदा धनदानुजसूनुना ॥ ९६ ॥

विषमभूरिभयङ्करकोटिभिः स्फुटधनुर्मुखमण्डलनिर्गतैः ।
प्लवगचक्रमभीक्ष्णमशेषयत्तदशनैर्दशनैरिव सायकैः ॥ ९७ ॥

हरिजिताऽऽशु तमोऽस्त्रविसर्जनात् क्षणविलम्बितलक्ष्मणदीक्षयः ।
पिहितजन्यदिशः प्लवगेश्वरा ददृशिरे दृशि रेणुहता इव ॥ ९८ ॥

उदयशैलमहीयसि मारुतौ नमितचण्डशरासनमण्डलः ।
शरमहोभिरनन्तविकर्तनस्तदधुनादधुनाऽनुपदं तमः ॥ ९९ ॥

कृतवलीमुखपद्मनिमीलने तमसि तत्र विमूर्छति रावणेः ।
स्मितहिमप्रभया परमुद्भभावविधुरो विधुरोमिति लक्ष्मणः ॥ १०० ॥

हर इव प्रधनाभिमुखे कृते दिविषदां धृतसज्यशरासनः ।
अहरदन्तिकभाजि वनौकसां भयमरौ यमरौद्रमहिम्नि सः ॥ १०१ ॥

इतरवानरवद्ध(वन्न)रवानरास्तदिषुनामजलव्यसनं महत् (?) ।
सपदि तेऽपि तपान्तसमुत्थितादिनवतो नवतोयधरात् पपुः ॥ १०२ ॥

स वव्रृधे नरनैर्ऋतयोस्तयोः समधिकोत्तरदिव्यशरव्ययः ।
अधरशस्त्रपरिग्रहणादरव्युपरमे परमेश्वरयोर्मृधः ॥ १०३ ॥

क्षयमियाय गवाक्षपताकिनी गजगवौ गवयानुपदं गतौ ।
जगृहिरे च दिशो न विषेहिरे शरभरं रभरम्भदरीमुखाः ॥ १०४ ॥

अपिशिताखिलमुक्तशरादिवक्षितिरुहातु महायुधसङ्कुले । (?)
स्मितविविक्तदृशस्त्रिदशास्तदा महति खे हतिखेदभयं जहुः ॥ १०५ ॥

उदपतत्परितः कपिराक्षसद्रुमनगेष्वसृगाशनिदुर्दिनम् । (?)
हतविधूतविहस्तहरिश्चिरं रविरथो विरथोऽभवदम्बरे ॥ १०६ ॥

वरुणवह्निमरुद्यमरूपिणं कपिषु रोपमरोपयदिन्द्रजित् ।
व्यथितवक्षसि रक्षसि लक्ष्मणस्त्रिगतिकं गतिकम्पजितं शरम् ॥ १०७ ॥

वलितमुष्टिरनोकहसंचयात् कपिरतीव समीपमियाय सः ।
अगमयत् क्षयमुद्धृतवानसिं द्रुतमसौ तमसौ रजनीचरः ॥ १०८ ॥

तदथ युद्धमविन्दत चन्दनः शरभिया शरभो न विचक्रमे ।
प्रसरति स्म निशाचरयूनि कः श्रुतरवे तरवे तरुगोचरः ॥ १०९ ॥

भुवि निषीदति वानरमण्डले सुरगणे दिवि साक्षिणि लक्ष्मणः ।
विशिखमिन्द्रजिति स्वभुवोऽसृजन्मरणदं रणदम्भनिराकृतः ॥ ११० ॥

यदि ममार्यमुपैतु न कश्मलं जनयिता यदि तेऽपि मयस्ततः (?) ।
तव लुनातु शिरोऽस्त्वमिदं विधेरशबलं शवलम्पटचेतसः ॥ १११ ॥

स एवं ब्रह्मास्त्राद्विमलविकरालांशुपरिधेः सुराणां प्रत्यक्षं सह दशरथेनोपरिसदाम् ।
सुमित्रायाः सूनोः स्मरणसमुपेताहतिमहानहोरात्रैरन्तं त्रिदशपतिशत्रोस्तदिगात् (?)॥११२॥

स कृत्वा कर्तव्यं परममिति कृत्स्नस्य जगतो गतो रामस्यान्तर्गुरुतरमुदः पादयुगलम् ।
तदानीं रूढारिप्रतिविशिखमार्गेण वपुषा सुषेणस्य स्पर्शान्नव इव बभौ धर्मविजयी॥११३॥

इत्यभिनन्दकृतौ रामचरिते महाकाव्ये सप्तत्रिंशः सर्गः ।



# अथाष्टत्रिंशः सर्गः ॥

सौमित्रिशैलप्रभवावि( भि )रासीत् प्रवेशिता रावणकर्णमूलम् ।
असृग्भुजामश्रुतरङ्गिणीभिः सा मेघनादस्य वधप्रवृत्तिः ॥ १ ॥

नोचे न चक्रन्द मुमोच नाङ्गं तस्थौ बत स्तम्भ इव क्षणं सः ।
सर्वस्य तस्य व्यसनस्य मूलमुच्छेत्तुमुर्वीतनयामियाय ॥ २ ॥

कृतं कुमारेण रणे न युक्तं मायामयी यत्पुरतो हताऽऽसीत् ।
सत्येन सीतानिधनेन शत्रोः करोमि संहारमहं तदद्य ॥ ३ ॥

निश्चित्य निस्त्रिंशतया तदैव चकर्ष कोशादथ चन्द्रहासम् ।
कोपार्दितस्यास्य तदोद्धृतासेर्दूरं ययुर्मूलसदः प्रवीराः ॥ ४ ॥

रुरोध निर्गत्य कुलीनभावात्तमाकुलं व्याकुलकेशपाशा ।
मन्दोदरी तुल्यशुचा समेत्य मात्राऽतिकायस्य जगाद चेति ॥ ५ ॥

मा मा महाराज तपस्विनीं तामावां स्वजाये शकलीकुरुष्व ।
विराजते पुंसि तवैष वेगो वधूजने कः कृपणे कृपाणः ॥ ६ ॥

निवर्ततां नाथ न वर्तते ते वीरस्य नारीषु नृशंसभावः ।
यतस्व तस्यैव रिपोर्वधार्थमर्थान्तरं शक्त्यवसादमाहुः ॥ ७ ॥

जातो गतः संयति मेघनादः किमेति भूयः क्रिययाऽनया ते ।
अहं न शास्मि स्वयमेव देव दैवस्य दोषे सदृशं विधेहि ॥ ८ ॥

जहि द्विषश्चक्रमिदं प्रशाधि चक्रेशयान् विद्धि कदापि कोऽपि ।
प्रकाश्य यत्किञ्चन दूषणं ते विभीषणस्यानुकृतिं करोति ॥ ९ ॥

देहि प्रमीताय हुताशतोये सान्द्रव्रणान् सद्मुपेत्य पृच्छ ।
सञ्जातसर्वायुधयुग्यनाशानयाचितः संविभृहि प्रवीरान् ॥ १० ॥

पितुः पदे रोपय वीरपुत्रान् दिश स्नुषाणामनुमर्तुमाज्ञाम् ।
शनैरपुत्रस्य विचिन्त्य यत्नात्तद्बन्धभाजः सुभटान् गृहाण ॥ ११ ॥

त्वत्कारणादन्तरितैकपुत्राः प्रतीच्छ मातॄरिह सान्त्वनाभिः ।
गृहे गृहे लुम्प मलीमसं त्वं जातं शुचा शोकमिमं निगृह्य ॥ १२ ॥

श्रुत्वा समाप्तं युधि मेघनादं मन्दोदरी जीवति जीवितेश ।
त्वं रक्ष रक्षोऽधिप मामवीरां कुरुष्व मा मन्त्रिगृहाणि गच्छ ॥ १३ ॥

प्रसीद खड्गैकसखः सपत्नानुच्छिन्धि कस्त्वामधुना रुणद्धि ।
तवेत्थमस्तङ्गतसर्वबन्धोर्न सन्धिमिच्छत्यबलाजनोऽपि ॥ १४ ॥

हा मेघनादं सुतमेकवीरं पितुः पुरस्तात् प्रधनानभिज्ञम् ।
इति श्रुते तारतरं तदानीं रुरोद कण्ठैर्दशभिर्दशास्यः ॥ १५ ॥

हा मेघनाद क्व गतोऽसि मुक्त्वा लङ्काधिपत्यं तृणवत् क्षणेन ।
साक्षात् पितुः पङ्क्तिमुखात् किमिष्टः कनिष्ठतातस्तव कुम्भकर्णः ॥ १६ ॥

क्वासि प्रहस्त प्रतिहारपाल कुम्भं हृदि स्थापय तम्निरुर्वी ।
भग्नः स चेद्दर्शय मे निकुम्भमम्भोनिधिं तद्विरहे विशामि ॥ १७ ॥

बत क्व सा पुत्रचतुष्टयी मे गता पितृव्यद्वितयेन सार्धम् ।
निवर्तते कोऽपि न किं समीकादेकोऽहमेषोऽधिपतिर्विरौमि ॥ १८ ॥

पुत्रातिकाय स्मर नः प्रसादानर्धासनं गोत्रभिदः कियत्ते ।
किं दूषणं मे सुत मेघनाद त्वयेक्षितं यत्सहसोज्झितोऽस्मि ॥ १९ ॥

प्राभातिकाम्भोजदलायताक्षं द्रक्ष्याम्यहं कुत्र कुमारमक्षम् ।
नवाम्बुदश्यामतनुः पुनर्मे कदाऽग्रतो यास्यति जम्बुमाली ॥ २० ॥

शोकादिति प्रत्यहसङ्गरोत्थात्तमुत्थितोत्तालविलापदैन्यम् ।
कथञ्चिदन्तर्हितमन्युवेगा मन्दोदरी सान्त्वयितुं प्रपेदे ॥ २१ ॥

तवाग्रतो वक्तुमहं न जाने जानामि जीवेश जगद्व्यवस्थाम् ।
संस्थापयात्मानमरिस्वभावान्न ते विलापावसरः प्रसीद ॥ २२ ॥

अल्पायुषस्ते कतिचिद्विपन्नास्तपोभिरन्ये घटिता भटास्ते ।
तथैव देवाशु दयस्व पत्न्योरपुत्रयोः पुत्रगुणग्रहान्नौ ॥ २३ ॥

ब्रह्मास्त्रमासीद्विफलं सुतस्य तवाद्य गान्धर्वमरीन्निहन्तुः ।
स्मराथवा देव तमेकदैव द्विषोस्तयोः पाशुपतं प्रयुङ्क्ष्व ॥ २४ ॥

गुरून् प्रमाणीकुरु वर्तमानान्न सर्वदा त्वत्क्रिययाऽस्ति सिद्धिः ।
रहस्यमन्यं विधिमारभेथाः क्षयीणि ते पूर्वतपःफलानि ॥ २५ ॥

किं दुष्करं पुष्कलसंपदस्ते विशङ्कनीयः स विभीषणोऽस्ति ।
निकुम्भिलायां निशि मेघनादो येन द्विषा विद्विषि कथ्यते स्म ॥ २६ ॥

आनाय्यतां बुद्धिबलेन राजन् स भेद्यतां मानुषयोः कथंचित् ।
एतावतैव द्विपतामपैति द्वन्द्वं किमिन्द्राभ्यधिकः स रामः ॥ २७ ॥

अन्तःपुरं सर्वमिदं तथैव तथैव लङ्कापुरमस्ति पूर्णम् ।
तथैव ते रावणबाहुदण्डास्तथैव सर्वं न परं कुमारः ॥ २८ ॥

उवाच ते तीव्रशुचौ शुचार्तः पत्न्यौ प्रयत्नप्रतिपन्नधैर्यः ।
प्रसीदतं गच्छतमुत्थितोऽस्मि प्रमाणमाज्ञा युवयोः सदा मे ॥ २९ ॥

देव्यौ किमित्थं प्रतिकूलदैवः करोतु वां रावण एष दासः ।
किं दैवमेवात्र बलेन जित्वा निरत्ययः शत्रुबलं निहन्मि ॥ ३० ॥

प्रविश्यतां पश्यतमभ्युपेतमुत्खातरक्षःकुलकण्टकं माम् ।
तामद्य सीतामचिरादवीरां पर्यायदासीं युवयोः करोमि ॥ ३१ ॥

तयोस्तदत्यादरतस्तदानीं विशोकमन्तःकरणं बभूव ।
स्तोकं हि तोकं धनमङ्गनानां गतं सति स्वामिनि सुप्रसन्ने ॥ ३२ ॥

तमूचतुस्ते जय जीवनाथ दीर्घानुगे संविहिते तवावाम् ।
रणेऽपि किं नौ भवतः पुरस्तात् तथापि तावन्निलयं गते स्वः ॥ ३३ ॥

कुर्वन्तु शान्तिं कुलदेवतास्ते करोतु रक्षां निकषा च माता ।
त्वां चिन्तयन्त्वङ्घ्रिरजांसि धातुस्तव प्रसीदन्तु पुलस्त्यमिश्राः ॥ ३४ ॥

इति प्रसादाभिमुखे महिष्यावसह्यतादात्विकतद्वियोगः ।
स पार्श्वयोः संरुरुधे भुजाभ्यामुदासिताष्टादशबाहुदण्डः ॥ ३५ ॥

रुरोद ताभ्यां सह मुक्तकण्ठः पुनर्नवं मन्युरयं विवृण्वन् ।
अह्नः क्षणार्धस्य सहस्रकृत्वस्तस्योद्ययुः शोकसमुद्रवेगाः ॥ ३६ ॥

हा पुत्र हा पुत्र पुरन्दरारे मन्दोदरीनन्दन मेघनाद ।
कथं कुथच्छन्नमहारथस्थो हतोऽसि तेनाद्य नराधमेन ॥ ३७ ॥

उवाच साचीकृतकण्ठपङ्क्तिर्जाये स नक्तंचरचक्रवर्ती ।
किमेकदैव त्यजथः पतिं मां तमस्यगाधे विनिधाय देव्यौ ॥ ३८ ॥

यातः क्रमालम्ब्य च विस्खलन्त्यौ शोकान्धकारेण दिशो निरुद्धाः ।
निर्वापितौ दुर्विनयान्मया वामत्युज्ज्वलावात्मजरत्नदीपौ ॥ ३९ ॥

इति ब्रुवन् वैरिविलुप्तचक्रश्चक्रन्द नारीव निशाचरेन्द्रः ।
ससार भिन्नप्रतिषेधसेतुः प्रत्यालयं कोपि तदा रवौघः ॥ ४० ॥

निवारयामास पुनर्विलापकोलाहलं स प्रतिपन्नमौनः ।
क्षणेन शुद्धान्तमनाययच्च ते धर्मपत्न्यौ निजसौविदल्लैः ॥ ४१ ॥

निमन्त्रयामास महाहवाय वीरानशेषान् स गृहीतनाम्नः ।
इयेष वर्षान्तरवासिनां च साहायकं संप्रति चेतसैव ॥ ४२ ॥

सन्नाहभेरीमुरजानकादितूर्यारवं घोरमथादिदेश ।
पप्रच्छ कः प्राणिति सारणस्य शुकस्य को वाऽद्य कुलावशेषः ॥ ४३ ॥

अत्रान्तरे तन्त्रभरेण दूरात् प्रापद्बिडालाक्ष इति प्रवीरः ।
प्रागल्भ्यदुर्वारमुरःप्रणुन्नद्वारं विरूपाक्षबलं विवेश ॥ ४४ ॥

अदृश्यतोच्चैः खरकेतुरग्रे समग्रसेनाङ्गसमूहशाली ।
बभौ दशग्रीवसभाङ्गणं तत्पूर्णं हयग्रीवचमूभरेण ॥ ४५ ॥

विवेश हर्षादथ संप्रणृत्यन्नुन्मत्त इत्यस्रभुजामधीशः ।
स रावणेनादरगद्गदेन शिरोभिरूहे भगवानिवोग्रः ॥ ४६ ॥

मत्तः स्खलन् खेल इवोपतस्थे वीरस्त्वराशेषितवीरपाणः ।
स्वान्तःपुरस्वस्त्ययनप्रपञ्चात् कथं कथञ्चित्प्रतिपन्नयात्रः ॥ ४७ ॥

संख्यानदीर्णैरपि राजपुम्भिरनाप्तहस्त्यश्वपदातिपारः ।
अम्भोधिरुद्वेल इवाविवेश प्रतर्दनो नाम निशाचरेन्द्रः ॥ ४८ ॥

संह्रादिनश्छेदतरङ्गभीमा ममुर्न तूर्यध्वनयो धरायाम् ।
विष्फूर्जथुः क्रोधविषप्रसूतो दिक्षु द्विजिह्वस्य च दुस्सहोऽभूत् ॥ ४९ ॥

आपृच्छ्य दुर्वारसहप्रयाणमनोरथानर्धपथेऽवरोधान् ।
उरोभिरार्द्रस्तनकुङ्कुमाङ्कैर्लङ्केश्वरं केऽपि ययुर्युवानः ॥ ५० ॥

किं वर्मणा नर्मभिदो न यावद्विभीषणस्य क्रियतेऽवसानम् ।
इत्येकवासा युवभिर्युवाऽन्यो ययौ परिच्छेदधिया न वाचा ॥ ५१ ॥

दिग्वाससं कोऽपि चकार स स्त्रीं सा वीक्षिता किञ्चिदितीष्टशंसि ।
नान्यः समैक्षिष्ट रणोद्धतत्वाद्दूर्वादलं दुर्बलयोपनेयम् ॥ ५२ ॥

नाप्रीयतान्यः स्वविलासवत्याः श्लथोत्तरीयेण पयोधरेण ।
आशंसितारातिकरोटिभङ्गमयोगुडं पाणिगतं नुनाव ॥ ५३ ॥

संमृज्य भूयः स्वपटाञ्चलेन सास्रक्कलङ्कां करवालधाराम् ।
ययौ निषिद्धोऽप्यपरः सुहृद्भिरार्द्रव्रणोन्मोचितपट्टबन्धः ॥ ५४ ॥

वृद्धाशिषामग्रहणादुदीर्णस्वान्तस्थितासुव्ययदोहदस्य ।
कस्याप्यलब्धानुनया वितेने मनस्विनी मङ्गलसंविधानम् ॥ ५५ ॥

प्रकाशराज्ञीशतचाटुवादं विवेश नान्तःपुरमेकवीरः ।
ययौ जिगीषारसभावितात्मा समीकमेवोद्यतसिंहनादः ॥ ५६ ॥

आचार इत्यध्वनि ते किलायं सृष्टोऽपसर्पाय ममानुबन्धः ।
बद्धच्छ धीरं किमियं त्वरेति गामश्रुतां कोऽप्यकरोत् प्रियायाः ॥ ५७ ॥

मया विमुक्तोऽसि न मुञ्चतीयं त्वां नाथ सौभाग्यवती नवोढा ।
मूढे समाश्वासय गेहिनि त्वमितीषदुक्त्वा सुभटो जगाम ॥ ५८ ॥

एकः प्रियाबाहुलतोपधानमाश्लिष्य पुष्पास्तरणं रणाय ।
ययौ विलीनश्च्युतहस्तिहस्तां तामन्तशय्यां बहुमन्यमानः ॥ ५९ ॥

दृष्ट्वापि कश्चिन्निजवासगेहादुद्गाढसंग्रामरसः प्रियायाः ।
विहस्तताविश्लथमेखलाया नाभीतलं निष्कलवज्जगाम ॥ ६० ॥

जगाम कश्चिन्निजवासगेहान्नितम्बिनीं द्वारगतामतीत्य ।
असावुपेक्ष्यः शिथिलोच्चयश्रीः प्रभुप्रसादान्न गुरुर्नितम्बः ॥ ६१ ॥

किं रावणालोकनलाघवेन यामो वयं यत्र रघुप्रवीरौ ।
इति स्वदोर्दण्डबलावलेपादालोकयन्ति स्म मिथो रणोत्काः ॥ ६२ ॥

आपृच्छ्य भृत्यानखिलानयासीदाशंसितात्मैकभुजो भटोऽन्यः ।
अन्योन्यसंवासमनोरथेन वहन्नसाधारणमाजिभारम् ॥ ६३ ॥

तले सति क्षुद्रमुशन्ति धीराः सहस्रधारं किमनेन यामः ।
इत्युज्झितव्यासुतया तदानीं निजासुनाथामपि तत्यजुस्ते ॥ ६४ ॥

तिष्ठन्ति कारास्वमरस्त्रियो वः किमाहवेनेति वधूर्वदन्तीः ।
वीक्ष्य क्षणं सस्मितमीयुरेव वीराः परीहासरसं न भेजुः ॥ ६५ ॥

विवृत्य दन्तैकपदं पुरस्तादन्यो मुखत्राणमुदस्य किंचित् ।
दूरानुयात्रां दयितामचुम्बत् पपौ न बिम्बोष्ठमधित्वरोऽस्याः ॥ ६६ ॥

संभोगबाधाशयितामुरस्तः प्रेर्य प्रियामेकपदे यदीयुः ।
तेन प्रकामोदितकेलयोऽपि रक्षोभटा राक्षसतां विवव्रुः ॥ ६७ ॥

आमोदनिद्रागमनादतीये न बाहुपाशं सुभटः प्रियायाः ।
कश्चित् प्रियालम्बितकण्ठ एव भटः प्रतस्थे दशकण्ठमूलम् ॥ ६८ ॥

तदङ्गनालिङ्गनलालनीयं शृङ्गारलीलायतनं क्षणेन ।
रक्षांसि जग्मुः परिवृत्य रूपमरातिरोषप्रतिघातहेतोः ॥ ६९ ॥

तद्दाम पौष्पं नृकपालमाला तच्चन्दनं लोहितमस्रचर्चा ।
तेषां तु यूनां रदनाश्च रम्या दंष्ट्रा बभूवुः कुटिलायताग्राः ॥ ७० ॥

आस्वादितं मांसमिदं कपीनां निपीतमेवं नरयोरसृक्च ।
आपानगोष्ठ्यामिति कश्चिदूचे मनोरथं सिद्धमिव स्वकीयम् ॥ ७१ ॥

शून्यावुभौ यत्र नरप्रवीरावृत्याः(क्षाः) शतं ते कपयश्च मुख्याः ।
तयोर्न चास्माकमिदं च यानमुक्त्वेति संशप्तकवृन्दमीये ॥ ७२ ॥

जायायुगस्थापितखड्गचर्मवर्माऽर्धमत्तः स्वयमेव युञ्जन् ।
आपानगोष्ठीं ललितामियाय जन्यक्रियां कोऽपि च मन्यमानः ॥ ७३ ॥

अवातरन्नर्कविमानजुष्टादसृग्भुजः खादसिखेटकाभ्याम् ।
पातालमूलादुदगुस्तदाऽन्ये कालाग्निरुद्रप्रतिवेशिनोऽपि ॥ ७४ ॥

ज्वालामुखाः सूचिमुखाः प्रसस्रुः स्वनः श्रुतोऽभूत् कटपूतनानाम् ।
चस्खाल कङ्कालकुलं पुरस्तादहस्तपादं पिशिताय धावत् ॥ ७५ ॥

मिथः कराग्राहितफक्कबन्धं कबन्धवृन्दं निरियाय नृत्यत् ।
दन्तोष्ठजिह्वाभ्रुकुटीजटाभिः दीप्तानि दिग्भ्यो निरगुः शिरांसि ॥ ७६ ॥

आखूरगव्याघ्रबिडालचक्रन्यस्तस्वहस्ताङ्घ्रिशिरःकटीकम् ।
अलं विकुर्वाणमितस्ततश्च वेतालवृन्दं विकटं पुरोऽभूत् ॥ ७७ ॥

मुण्डा जटाला विकटा विशालाः कालाः करालाश्च दिगन्तरेभ्यः ।
तमीयिरे तूर्यनिनादहूताः पतिं पशूनामिव भूतभेदाः ॥ ७८ ॥

नासीरबन्धाय निषेदुराराद्रालजङ्घाः पिशिताशसङ्घाः ।
तूर्याणि तूर्णाद्भुतबोधनानि रेणू रणौत्सुक्यभृतां भटानाम् ॥ ७९ ॥

आसन्नपाथोनिधिकूलपीठात् पीठेश्वराः क्ष्मां च दिवं च रुध्वा ।
युद्धाय लब्धप्रमदप्रकर्षाः समीयिरे राक्षसपादमूलम् ॥ ८० ॥

आकेतितादप्यतिदूरभाजः क्षेत्रेश्वराः सत्वरमभ्युपेयुः ।
विलुप्यते न प्रभुषु प्रमत्तैः द्विषत्क्षणोपेक्षणजन्यमागः ॥ ८१ ॥

इति क्रमाप्तप्रतिहारमूलास्तदैव निर्ज्ञातकुलावदानाः ।
निवेदितास्ते सुभटा बभूवुः प्रहस्तपुत्रेण दशाननाय ॥ ८२ ॥

प्रणेमुरन्ये त्वनिवेद्यमानाः क्रव्याशिनः क्रव्यभुजामधीशम् ।
अर्हन्ति पूजां हि विशेषभाजः सामान्यभृत्याः प्रणमन्त्युपेत्य ॥ ८३ ॥

तद्वीक्ष्य लङ्काधिपतिः समन्तादनन्तमात्मीयमनीकचक्रम् ।
जहौ शुचं पूर्वभटावसानसमुद्भवां गूढमहा महेच्छः ॥ ८४ ॥

संभूय भेजे सह तैस्तदानीं स वीरपाणं मधुनेतरेण ।
स उन्मना राघवयोरसृग्भिः पानान्तराय प्रधनावसाने ॥ ८५ ॥

तैः पूर्वयोधाभ्यधिकप्रपञ्चैः पञ्चत्वलोलैः सुभटैः परीतः ।
रथेन मथ्नन् कपियूथपालीर्विनिर्ययौ सान्द्रशवध्वजेन ॥ ८६ ॥

नेशुस्तमालोक्य वलीमुखेन्द्राः सेन्द्रा इवादौ मरुतां निकायाः ।
स रामसौमित्रिहनूमतामप्यभूत्तदा विस्मयनीयतेजाः ॥ ८७ ॥

विभीषणेनाथ चिरं चकम्पे तं प्रेक्ष्य रक्षोधिपसैन्यशेषम् ।
तत्पूर्वसङ्ग्राम इवावतेने स जाम्बवानप्यतिसाध्वसेन ॥ ८८ ॥

नलस्य न स्म प्रतिभाति किंचिन्नीलस्य हस्तादगलन्महीध्रः ।
तारस्य चेतस्तरलं चचाल न केसरी भद्रमुवाच पृष्टः ॥ ८९ ॥

ईये न जीवान्तमहं गदेऽस्मिन् गृहीतपादो रघुनन्दनस्य ।
पृच्छत्सु पृच्छत्स्विति सत्यमूचुर्विशिष्यताऽऽस्येन सुषेणमिश्राः ॥ ९० ॥

गजो ललज्जे गवयो मिमील मनोऽविशत्कश्मलमङ्गदस्य ।
ययौ रुमण्वानपदिश्य यत्तद्धौ न पुच्छं पनसस्तदोच्चैः ॥ ९१ ॥

दरीमुखः क्षुब्ध इव क्षणार्धं सुक्रोशनः क्रोशमतीत्य तस्थौ ।
समं गवाक्षेण विलक्ष एव गवोऽपि गव्यूतियुगं जगाम ॥ ९२ ॥

मा भैष्ट मा भैष्ट गृहीतशैलाः समं मया सर्पत वानरेन्द्राः ।
इत्यर्कसूनुर्वचसा बभाषे न चेतसाऽस्तंगतसौष्ठवेन ॥ ९३ ॥

इति रजनिचराणां विक्रमेण प्रणुन्नं
दिशि दिशि तदनश्यद्वानराणामनीकम् ।
तरणिसुतहनूमज्जाम्बवद्वालिपुत्रैः
कथमपि च चतुर्भिः स प्रसादः प्रपेदे ॥ ९४ ॥

रघुपतिरपयानं तत्कपीनामियेष
द्विषि बलवति मृत्युर्निश्चितः कातराणाम् ।
अनुजमपि तदानीमिन्द्रजिद्युद्धखिन्नं
कथमपि शपथौघैरात्मपृष्ठे चकार ॥ ९५ ॥

अयमवरजः सुग्रीवोऽयं पुरो हनुमानयं
मम च कतिचिद्बाणास्तेऽमी निषङ्गनिषादिनः ।
किमसि विमनाः कोऽयं पापः कृती भवसि क्षणात्
क्षणमिति गिरं रामेणोच्चैरभापि विभीषणः ॥ ९६ ॥

उदितमभवद्दृष्ट्वा देवैः समिद्भुवि तावुभा-
वनुचितमिदं पद्भ्यां देवो रथेन यदस्रभुक् ।
मनसि मरुतामीशश्चिन्तामधादथ निश्चया-
दनलसबलचक्षुर्मालः स मातलिमैक्षत ॥ ९७ ॥

इत्यभिनन्दकृतौ रामचरिते महाकाव्येऽष्टत्रिंशः सर्गः समाप्तः ।



# अथैकोनचत्वारिंशः सर्गः ॥



अथान्तरिक्षाद्वपुषः प्रभाभिर्लिम्पन्दिशो दाशरथेः पुरोऽभूत् ।
निबद्धसर्वारिकुलप्रमाथं रथं समादाय सुरेन्द्रसूतः ॥ १ ॥

स मातलिर्भूतलगोचराय देवाय देवार्थसमुद्यताय ।
नमश्चकार प्रथमं विपाश्चिज्जगाद पश्चादिति सूनृतानि ॥ २ ॥

प्रतीहि मां मातलिमिन्द्रसूतमात्मानमिन्द्रानुजमप्यवेहि ।
त्वमादिदेवो भगवाननन्तस्त्वमन्तहेतोरिह रावणस्य ॥ ३ ॥

मीनस्त्रयीमन्वसरस्त्वमप्सु त्वं विश्वमेतत् कमठो बिभर्षि ।
दंष्ट्राङ्कुराग्रेण समुद्रमूलात्त्वया वराहेण धरोद्धृतेयम् ॥ ४ ॥

जगत्त्रयीविद्रवदं हिरण्यपूर्वं पुरा त्वं कशिपुं व्यदारीः ।
तथाऽर्धसिंहार्धमनुष्यमुग्रं कृत्वाऽद्भुतं रूपमभूतरूपम् ॥ ५ ॥

मायामयं वामनविप्ररूपमुत्पाद्य पादत्रययाचनेन ।
बलिं तथाक्रान्तसमस्तलोकं रसातले वासितवानसि त्वम् ॥ ६ ॥

परश्वथाग्नौ हुतराजलोकं त्रिःसप्तकृत्वस्तदनन्तमूर्तेः ।
त्वमेव रूपं मलिनीचकर्थ स्वरध्वरोधाद्वपुषाऽमुनैव ॥ ७ ॥

जयस्यरीनित्थमपि त्वमुर्व्यामेभिः किमस्माभिरिहागतैस्ते ।
परं गृहाणाग्रजगौरवेण पौरन्दरीमभ्युपपत्तिमेनाम् ॥ ८ ॥

इदं तदाहुः कवचं निवातमिदं पयोदाभिजनं धनुश्च ।
सहस्रसंख्या भगवन्नमी ते मयूरकण्ठद्युतयस्तुरङ्गाः ॥ ९ ॥

प्रतीच्छ सर्वं विजयस्व वेगात् प्रसीद पश्य द्रवतः कपीन्द्रान् ।
अनेन मच्छन्दचरेण घोरं जहि द्विषं दाशरथे रथेन ॥ १० ॥

तेनेन्द्रसाहाय्यमहोत्सवेन समीयुरुद्दामगिरः कपीन्द्राः ।
विलज्जमानोऽधिरुरोह रामः क्षणादपर्यस्तकुथं रथं तम् ॥ ११ ॥

स देवसूतः सविशेषमूर्छद्धुर्यानुगुण्यप्रथितानुभावः ।
तमस्तुताश्चर्यरथाधिरोहक्रियागुणन्यक्कृतशक्रशोभम् ॥ १२ ॥

प्रशस्य भूयस्तमिदं जगाद मानुष्यके विस्फुरितं मयैतत् ।
तवोपयातस्य महेन्द्रमूलमुपेन्द्रभावेऽपि न दृष्टमासीत् ॥ १३ ॥

रथस्तवायं हरयस्तवामी तवाहमग्रे वद किं करोमि ।
वैरोचनेर्वञ्चनकारणेन भ्राता कनीयानसि वासवस्य ॥ १४ ॥

प्रसीद सन्धेहि पृषत्कधाराः सौत्रामणं चापमिदं गृहाण ।
तपान्तजीमूत इव प्रसर्पन् जयोद्धतश्रीर्दिशि दक्षिणस्याम् ॥ १५ ॥

ततः प्रतीताः कपयः प्रतीयुर्निशाचरानागतसंप्रहर्षान् ।
ते पूर्वमासन्नमुरवारिभङ्गादलब्धयुद्धैकमहा महान्तः (?) ॥ १६ ॥

ततान तारः प्रकरं गिरीणां न प्रागिवाकर्ण्यत शङ्कुकर्णात् ।
क्रमप्यधाज्जन्यकलावलेपं नलस्तलेनाहतहस्तिकर्णः ॥ १७ ॥

पिपेष भूयः पिशिताशयूनामेकोऽङ्गदः कोटिमनोकहाङ्गैः ।
अग्रे यदृच्छाधिगतेन घोरं ग्राव्णाऽवधीत् कुम्भहनुं हनूमान् ॥ १८ ॥

आदेहपातादयमाहवोऽपि रामस्य सारोऽपि विलोकनीयः ।
क्षपाचराः खादत खादतापि न घातमात्रादरयोऽद्य हेयाः ॥ १९ ॥

इति श्रुतायां प्रभुघोषणाया रक्षोबलं तत् क्षुभितं चचाल ।
तद्वीक्ष्य दूराज्जगदुः प्लवङ्गाः परस्परं साध्वसकश्मलाङ्गाः ॥ २० ॥

स कुम्भकर्णः सच मेघनादः सच प्रहस्तः खलु नैव कश्चित् ।
एतेऽधुना राक्षसशब्दवाच्याः पुरः पिशाचैः सह युद्धमासीत् ॥ २१ ॥

को मातलिः के हरयस्तथाऽमी स एव को वा मघवाऽभ्युपेतः ।
युद्धस्य रक्षोधिपतेः पुरस्तादस्य त्रिलोक्येव न क्वापि के स्मः ॥ २२ ॥

यस्यानिशं दूषणमेव जाल्मो विभीषणः श्रावयति प्लवङ्गान् ।
सोऽयं समभ्येति चमूसमग्रः क्षुब्धो दशग्रीव इति प्रवीरः ॥ २३ ॥

इति प्रतापाचकितैः कपीन्द्रैरैन्द्रं मुहुः स्यन्दनमाश्रयद्भिः ।
अदृश्यत प्रष्ठनिशाचरालीकालीनिमीलद्दशदिग्दशास्यः ॥ २४ ॥

रे राम रे लक्ष्मण रे हनूमन् यूयं त्रयः केवलमाहवेऽस्मिन् ।
अस्मासु जञ्झानिलभीषणेषु विभीषणो रेणुरयं वराकः ॥ २५ ॥

ध्वस्तः पुरा रावणिरावणाभ्यां येनागमज्जम्बुकवद्विडौजाः ।
तेनाधुना संप्रति गच्छ राम निर्वाहको मातलिरागतस्त्वाम् ॥ २६ ॥

इत्यग्रहीद्बाणपरम्पराभिरग्रे सुमित्रातनयं प्रसृत्य ।
छेत्तव्यदन्ताधरतालुजिह्वानसश्रुभुजः कर्णकटूपदेशान् ॥ २७ ॥

वनौकसामाहवलक्षणानां चचाल कोटिः सह लक्ष्मणेन ।
तं रावणस्योपशयस्थमीये कृत्वापसव्यं रथमिन्द्रसूतः ॥ २८ ॥

सा कण्ठहेषालहरी हरीणां स रासभानां रसितोर्मिरुच्चैः ।
विवव्रतुर्भूरजसि प्रवृद्धे तद्द्वैरथं युद्धमभूतपूर्वम् ॥ २९ ॥

यत्सत्यमिन्द्रादपि सातिरेकं रामः स्तुतो मातलिना तदानीम्
मरुद्भिरस्तूयत सौष्ठवं तदपुण्यराशेरपि रावणस्य ॥ ३० ॥

योग्याभिरायोधनसाधनानामुभौ समानौ मुहुरैक्षिपाताम् ।
स पक्षपातश्चक्रे मरुद्भिर्यत्पुष्पवर्षेण रघुप्रवीरः ॥ ३१ ॥

असंख्यशाखामृगराक्षसक्षमसंख्यसेनाङ्गविशेषसंपत् ।
असंख्यशङ्खादिकतूर्यभाण्डं चण्डप्रतिद्वन्द्वि नियुद्धमासीत् ॥ ३२ ॥

क्रूराङ्गुलिः सङ्गरगोचराणामावेदयन् मर्म सलोहितानाम् ।
विभीषणो रावणलोचनानामभूत् पुरो राघवकर्णमूले ॥ ३३ ॥

ततश्चकम्पे गुरुसाध्वसोर्मिर्विभीषणः संवरणोद्धुरोऽपि ।
ररक्ष रामे रथिनि क्षितिस्थं तं लक्ष्मणः पङ्क्तिमुखाननेभ्यः ॥ ३४ ॥

आलोकनोद्भूतनिजान्ववायद्रोहक्रियारम्भफलोपभोगात् ।
स रावणात् कारणरूढवैरान्माभीतिवादः कपिभिः प्रपेदे ॥ ३५ ॥

रथस्य तार्क्ष्यादपि कामगत्वं योग्याबलान्मातलिराजहार ।
वाहाश्च ते बर्हिरुचः प्रकामं तमूहुरावल्गिभिरङ्गहारैः ॥ ३६ ॥

ते तेऽवतस्थुः( प्रजहुः )कपयोऽभ्यमित्रं जैत्राभिरामैः करणप्रभेदैः ।
महौजसो भूमिषु तासु तासु कराङ्घ्रिलाङ्गूलगृहीतलीलाः ॥ ३७ ॥

रथं वरूथं कुथमक्षमश्वान् सूतं च नाभीक्ष्णमभीक्षते स्म ।
सौमित्रिसुग्रीवसमर्पितात्मा रामः परं लक्षमिषोश्चकार ॥ ३८ ॥

शरेष्वमोघेषु रघूद्वहस्य जग्मुः क्षयं राक्षसवीरवर्याः ।
व्रणे सुषेणस्य दृशैव रोहत्यविघ्नरोषा हरयो ववल्गुः ॥ ३९ ॥

दूरं ममज्जे दशकन्धरेण स्वकन्धरालीरुधिरापगासु ।
रराज रामः परितः प्रवृत्तास्तदा यशःक्षीरसमुद्रवीचीः ॥ ४० ॥

जानूरुनाभीकुचकण्ठघोणाललाटकेशान्तशिखाधिकाभिः ।
क्षपाचराः काननगोचरेभ्यो ररक्षिरे शोणितनिम्नगाभिः ॥ ४१ ॥

निषूदिताग्रेसरयातुधाना वनौकसः शेषमभिप्रवृत्ताः ।
सेदुः स्खलन्तः समरस्थलीषु नासृङ्नदीकर्दमपारमीयुः ॥ ४२ ॥

रिपावपि स्वार्थकणानुबन्धान्मूर्ध्नः प्रणामप्रवणस्य पातात् ।
ननर्त जातोत्सववत्कबन्धः फेरुण्डकोलाहलडम्बरेण ॥ ४३ ॥

पपुः शिवा न व्युषितान्यसृञ्जि जुगुञ्जुरुष्णोष्णनवास्रपानात् ।
व्यसोरपि क्रव्यलवान्न गृध्रा भेजुर्भटास्यभ्रुकुटीभयेन ॥ ४४ ॥

ममर्द रक्षोधिपतिः कपीन्द्रानिन्द्रक्रुधा मातलिमभ्यधावत् ।
रामः प्रतीयेष तमापतन्तं पृषत्कवर्षेण भुजान्तराले ॥ ४५ ॥

हसन्नवादीच्च क एष कोपः मृते दशग्रीव रिपुस्तवाहम् ।
ततस्तमुत्सृज्य निशाचरेन्द्रस्ततान रोषेण रघुप्रवीरम् ॥ ४६ ॥

स्मेराननस्तं वदति स्म रामश्चिरात् प्रपन्नं सदृशं त्वयैतत् ।
सन्धेहि सन्धेहि शरानुदारानुदारमोजः शृणुमस्त्वदीयम् ॥ ४७ ॥

पौलस्त्य पौलस्त्य बली किलासि कैलासमुन्मूलितवानसि त्वम् ।
प्रकाशयाशु द्रविणं तदद्य त्वयारिणा तुष्यतु रामभद्रः ॥ ४८ ॥

ततः कपीन्द्राः प्रभुसूनृतेन तेनोन्मदस्तेष्वरिपु प्रजह्रुः ।
जह्रुर्भयम्लानरुचः पिशाचानुत्तेजसः पुण्यजनानमार्गन् ॥ ४९ ॥

बलोत्तरं वालिसुतो जघान जघान वीर्योत्तरमाञ्जनेयः ।
अभूदसंख्या युधि राक्षसानां यथोत्तरं जाम्बवता हतानाम् ॥ ५० ॥

ततश्चमूदुर्गतिसंभृतक्रुन्निर्गत्य वेगेन रणाङ्गणस्थः ।
हस्तैरुदस्तैः कपिमात्तमात्तमभुङ्क्त नक्तञ्चरचक्रवर्ती ॥ ५१ ॥

अमोचयन्मोचनिभान् कपीन्द्रान्दन्तोष्ठजिह्वागलतालुभेदी ।
द्विपस्ततः स्वादुभुजो भुजाभ्यां दिग्धेषुपूगोपनयेन रामः ॥ ॥ ५२ ॥

नालीकनाराचविकर्णकर्णिविपाठवैतस्तिकसिंहतुण्डैः ।
गोजाविगोधाननवत्सदन्तैराजघ्नतुस्तावितरेतरस्य ॥ ५३ ॥

शस्त्रेषु वैयर्थ्यमुपागतेषु सस्मार सोऽस्त्राणि निशाचरेन्द्रः ।
रामः पुरस्तानि परिस्फुरन्ति प्रत्यस्त्रवर्षेण हसन्नुनोद ॥ ५४ ॥

आर्तस्वरं रावणजं जिगाय स योग्यया केवलयैव रामः ।
वस्त्वन्तरग्राहममुष्य बुद्धेरद्वैतवादी मितया गिरेव ॥ ५५ ॥

अस्त्रान्तरैरन्तरयाञ्चकार दशाननः संनिहितावसानः ।
मुहूर्तमस्त्राणि रघूद्वहस्य मन्दक्रुधः काम इवेश्वरस्य ॥ ५६ ॥

दशाननत्रासचलाग्रहस्तमुत्साहयामास रघुप्रवीरः ।
सूतं हरेः स त्रपया मुहूर्तमवाङ्मुखश्चोदयति स्म धुर्यान् ॥ ५७ ॥

किमग्रतो याति किमेति पश्चात् किमीयतेऽधः किमथोपरिष्टात् ।
स्थितः किमन्ते किमकाण्डलोलः संवर्तवायोः परिणामभेदः ॥ ५८ ॥

किमर्थहेतुः किमनर्थहेतुः किमन्धकारः किमुत प्रकाशः ।
इति द्विषस्तस्य गतैर्वितेने महेन्द्रजालानि महेन्द्रसूतः ॥ ५९ ॥

आसादितारातिजयोद्धुरत्वादभीक्ष्णमाविष्कृतसामवादः ।
आत्माधिकां सारथिवृत्तिमिन्द्रः स्वसारथेर्दाशरथौ ददर्श ॥ ६० ॥

अहो रथस्यास्य हरेरिदानीं सत्त्वोद्धुरः संयति संप्रचारः ।
असावधिष्ठातृकृतो विशेषः स्विदित्यनुचैरमरैर्बभाषे ॥ ६१ ॥

स रावणः शत्रुरथं शरौघैः सहस्रकृत्वः कृतमाजिवाह्यम् ।
प्रक्षेतुमासीत् प्रधनात्तदानीं नालं तिलस्यार्धमपि स्वदोर्भिः ॥ ६२ ॥

रामक्षुरमैरविपद्यवेगैः शिरांसि लूनानि शरोत्तरेण (?) ।
नाबुध्यत व्यग्रतया दशास्यस्तदुष्णकीलालपरिप्लुतोऽपि ॥ ६३ ॥

एकं न जज्ञे हतमुत्तमाङ्गं शरं निषङ्गादिव बाणपूर्णात् ।
जहर्ष मूर्धास्यभराद्बहूनां ( द्विलूनात् ) लघूभवन्नर्धवपुर्भरेण ॥ ६४ ॥

अपश्चिमेनाथ रघूद्वहस्य प्राप्तान्तरालानि शरानिलेन ।
निपेतुरुत्पाकपरिश्लथानि रक्षस्तृणेन्द्रस्य शिरःफलानि ॥ ६५ ॥

वेलां न सिन्धोर्नमुचेर्न मूलमासाद्य लङ्कामपि नैव तस्थुः ।
असृग्भुजो रामशरप्रणुन्ना विशश्रमुर्मृत्युमुखान्तराले ॥ ६६ ॥

ते दक्षिणाशामुखसंप्रसूताः पीतार्कभासो दशकण्ठबाणाः ।
काष्ठामुदीचीमनयन् कपीन्द्रान् घर्मान्तमेघा इव राजहंसान् ॥ ६७ ॥

चकार तूणीरशतं च तुच्छं न किञ्चिदाधत्त परोपघातम् ।
नचापराद्धेषुतया ललज्जे जहर्ष गोणीभिरयोगुडानाम् ॥ ६८ ॥

आमूललूनानि शिरांस्यरोहन् भुजो भुजांशैर्जघनैर्न कृत्तः ।
न राघवस्यापि शराः शितास्ते ददुः क्षतिं कामपि रावणस्य ॥ ६९ ॥

चापान्तरं पार्श्वचरोपनीतं सद्यः समादाय समाहितेषुः ।
रघुप्रवीरस्य शरासनज्यां लक्ष्यं चकार क्षणदाचरेन्द्रः ॥ ७० ॥

स तर्जितः सारथिनार्धमार्गे तस्यैव सैन्यावयवे पपात ।
एवं न किंचित्तु ददुस्तदीयाः शराः रथोत्सारणयावधूताः ॥ ७१ ॥

अकैतवोपस्थितमुत्तमायामप्युज्झाति प्राग्वडवो न रेमे ।
सत्यं गतोऽसीत्यभिधाय मूढां स्मरन् प्रियामप्सरसि प्रवीरः (?)॥ ७२ ॥

अयुध्यतायोधनमूर्ध्नि दीर्घं गवः शराकारकृता भटेन ।
जित्वा बिडालाक्षमनुक्षतेन वीरं विरूपाक्षमहन् गवाक्षः ॥ ७३ ॥

द्विधा चकार द्विविदो हताक्षं ममाथ रुष्टः शतमिन्द्रजानुः ।
मम्ले पिशाचाय निजे गजेन न चन्दनस्तृप्तिमगादरीणाम् (?) ॥ ७४ ॥

द्रुतं दशग्रीवरथः स भग्नः सुग्रीवनुन्नेन शिलोच्चयेन ।
रथान्तरस्थेन स तेन पश्चादपश्चिमायां निदधे दशायाम् ॥ ७५ ॥

हा मित्र सुग्रीव हतोऽस्यनेन पापीयसेति प्रममील रामः ।
तं मातलिर्बोधयति स्म यावत्तावद्वितन्द्रः शुशुभे कपीन्द्रः ॥ ७६ ॥

एकेषुणा सन्नशिलाशतानि विशालविष्फारविडम्बराणि ।
हसन् हसन्नेव शरासनानि रामो दशास्यस्य दशाप्यलावीत् ॥ ७७ ॥

संवेगभिन्नप्रतिशस्त्रजालादलातसङ्घातनिभादभीक्ष्णम् ।
रामस्य रक्षोधिपसायकौघान्मर्माणि धर्मः सुतरामरक्षत् ॥ ७८ ॥

स वीरवादानिलविप्रणुन्नो विलोचनोल्कावलिदुर्निरीक्ष्यः ।
निर्वाणमेष्यन्निकटीबभूव रामाम्बुदे रावणकृष्णवर्त्मा ॥ ७९ ॥

अथोत्पतद्भिः क्षतजप्रवाहैः शिरोधराभ्यो दशकन्धरस्य ।
दूराद्द्रवन्तोऽपि घृणारयेण नभस्सदामाददिरे समूहाः ॥ ८० ॥

अथ दिवमुपनीते रावणे राघवेण प्रथममनिमिषाणामम्बरे डिम्बमासीत् ।
प्रसरदनयभावेनोपसंगृह्यमाणास्त्रिदिवसदनभूतास्तेन पश्चान्ननन्दुः ॥ ८१ ॥

रणरवलमवतेरुः कर्मणा तेन विष्णोरुपहितपरितोषाः सर्व एवामरौघाः ।
दशरथ इति राजा सोऽपि शक्रेण सार्धं निजसुतविजयश्रीदर्शनायाजगाम ॥८२॥

शतमख सखे दुर्भार्यायाः प्रमाणयता वचो मनुजातिलकस्तैस्तैः कष्टैर्मयैष कदर्थितः ।
विलसितमभूत्तद्देवानां न तद्युवयोः कृतं कृतमनुशयेनेति स्मेरो हरिस्तमसान्त्वयत् ॥ ८३ ॥

ददृशुरमरा भूयो जैत्रैर्वपुर्भिरधिव्रणै-
रमृतमपतद्धारासारैः परीत्य रणस्थलीम् ।
अभिनववपुःशोभाभाजः सभाजितनाकिनो
जहृषुरसुभिः प्रत्यायातैः प्लवङ्गमयूथपाः ॥ ८४ ॥

समुत्थाप्याघ्रातः शिरसि पृषदश्वेन हनुमान्
जतु( मृदु )ज्वालाजालः सुचिरमपृशन्नीलमनलः ।
स्फुटं सुग्रीवं च स्फुटकलितरोमाञ्चनिकरो
निनाय स्वोत्सङ्गं निजकरसहस्रेण सविता ॥ ८५ ॥

कृतार्थानां तेषामिति समरपारं गतवतां
गतं तत्तत्राहस्त्रिदशगणसंवादसुभगम् ।
विधाय ज्येष्ठस्य व्युपरतवतः कर्म विहितं
रुदन्ग्रामादेशात् पुरमविशदेकः पलभुजाम् ॥ ८६ ॥

---

इत्यभिनन्दकृतौ रामचरिते महाकाव्ये एकोनचत्वारिंशः सर्गः समाप्तः ।

# अथ चत्वारिंशः सर्गः ॥



अथाविर्भूतहर्षास्ते सहस्राक्षसमश्रियः (?) ।
पितुः स्मरति सोत्कण्ठं रामे सौमित्रिणा सह ॥ १ ॥

स्वपुत्रार्तिनिरासार्थं हरिपादरजांसि च ।
परिमार्गति सुग्रीवे स्वैरं शिरसि पाणिना ॥ २ ॥

एह्येहि दृष्टोऽसि चिरादिति गद्गदभाषिणः ।
वायोः स्तुवति वात्सल्यमर्धोत्क्षुद्धे हनूमति ॥ ३ ॥

अङ्गार्पणैर्व्यञ्जयति स्वैरं मुग्धे पितुः पितुः ।
मरुत्पतेः परिष्वङ्गं वर्तमानमिवाङ्गदे ॥ ४ ॥

कुतो गतास्तव ज्वालाः स्पृश कामं न रोदिमि ।
इति स्वप्नायमाने च नीले बाल इव क्षणम् ॥ ५ ॥

स्वयम्भुवः क्षणे तस्मिन् जाम्बवत्परिणाहवाः (?) ।
विनिश्चिन्वति रामस्य प्रवृत्तिं मैथिलीं प्रति ॥ ६ ॥

शयानेष्वेव कपिषु तमस्यरुणजर्जरे ।
प्रवाति वाते सुरभौ नलिनीकोशनिर्गते ॥ ७ ॥

प्रपन्ने तूर्यपटहैर्मौने शून्येषु वेश्मसु ।
स्फुटं रटितुमारब्धे लङ्कानिष्कुटकुक्कुटैः ॥ ८ ॥

हा मन्दोदरि सम्राज्ञि क्व गतासि हता वयम् ।
इतीव भाषयन्तीषु वापीषूर्मिभुजैरुरः ॥ ९ ॥

कासांचिदवशिष्टानामवैधव्यविलम्बिते ।
उन्मूर्छति भटस्त्रीणामनुमारमहारवे ॥ १० ॥

सम्यगादिश्य दारूणि स्नुषाणां करुणावशात् ।
जगाम राघवाभ्याशं शान्तवेगो विभीषणः ॥ ११ ॥ ( कुलकम् )

स दूरात् प्रत्यभिज्ञातः क्षपान्तक्षणयामिकैः ।
आवेद्यतासन्नतरः प्रथमं कपिनायके ॥ १२ ॥

प्रविश्य प्रश्रयवशात्तल्पान्तं पवनात्मजः ।
विभीषणस्यागमनं कथयामास लक्ष्मणम् ॥ १३ ॥

रजनौ सावशेषायामेव राजा विभीषणः ।
समायात इति श्रुत्वा रामः शयनमत्यजत् ॥ १४ ॥

कार्यमार्यागतं वेद्मि वक्तुमभ्युद्यतत्वरः ।
अयमह्नाय संप्राप्तस्तवाप्तेषु विशेषवान् ॥ १५ ॥

वदतीति सुमित्रायास्तनये कोसलात्मजः ।
उत्थाय महयामास महाराजं विभीषणम् ॥ १६ ॥

आसांचक्रे समं तेन सुग्रीवमुपवेशयन् ।
सगौरवं जाम्बवति व्यावर्तितमुखाम्बुजः ॥ १७ ॥

पप्रच्छ समुदाचारपर्यन्तेऽथ विभीषणम् ।
लङ्कागतमनातङ्कं त्वराशङ्की रघूद्वहः ॥ १८ ॥

पप्रच्छ तं प्रह्वशिराः सौमित्रिस्तदनन्तरम् ।
वेपमानः प्रजावत्याः प्राणितव्ये विनिश्चयम् ॥ १९ ॥

सत्यं ब्रूहि वलत्यार्या रावणे निहतेऽपि यत् ।
सपर्या स्वयमार्याया देवपादैरुपेक्षिता ॥ २० ॥

आर्य विज्ञापयाम्येष किमार्या विस्मृतेव वः ।
तदनन्तरवृत्तान्तं यन्न पृष्टो विभीषणः ॥ २१ ॥

तावूचे वाक्यसंक्षेपान्मितवादी विभीषणः ।
नाथौ किं बहुनोक्तेन गम्यतां यत्र जानकी ॥ २२ ॥

मयि स्थिते स्थितैवासावसून् संरुध्य गत्वरान् ।
एतावत्सु मुहूर्तेषु संशयो मम तां प्रति ॥ २३ ॥

प्रसीद गम्यतां नाथ जीवन्ती वीक्ष्यतामियम् ।
म्रियेत वेलामियतीमप्रामाण्यादसंशयम् ॥ २४ ॥

अवोचत सभास्तारानभीक्ष्णं समुदीक्ष्य सः ।
विदाङ्कुरुत वैदेही विलम्बान्नावलोक्यते ॥ २५ ॥

मान्ये ततो जाम्बवति हनूमत्येकवल्लभे ।
सुग्रीवे सुहृदि प्रह्वे बहून् व्यञ्जयतीङ्गितम् ॥ २६ ॥

तारे हरौ केसरिणि सुषेणे शरभे रभे ।
सानुप्रस्थे पृथौ धूम्रे, धूम्राक्षे गन्धमादने ॥ २७ ॥

दरीमुखे च सुमुखे कपौ दधिमुखेऽङ्गदे ।
तत्र तत्रापि विज्ञातसाहायकमहागुणे ॥ २८ ॥

विभीषणस्यानुगुणं भाषमाणे रघूद्वहः ।
प्रह्वमालम्ब्य सौमित्रिमशोकवनिकां ययौ ॥ २९ ॥

उन्मीलोन्मील वैदेहि पश्य देवि दिशः शुभाः ।
एति त्वत्पतिमादाय क्षणादार्यविभीषणः ॥ ३० ॥

गतो दुःसहदुःखोष्मा कालः कमललोचने ।
अनन्यशीताः सुचिरमावृत्ता दिवसास्तव ॥ ३१ ॥

उन्मूलितं रिपुकुलं सुवेले पतिदेवरौ ।
मनोरथः स्तोकशेषः किं तथैव विषीदसि ॥ ३२ ॥

यद्यपीदं प्रियसखि त्रिजटे तदपि स्फुटम् ।
न ममात्मनि कल्याणमन्तःकरणमीक्षते ॥ ३३ ॥

शृणु कारणमन्तःस्थमार्यपुत्रस्य वेद्म्यहम् ।
स बिभेति महासत्त्वः कौलीनस्य कणादपि ॥ ३४ ॥

एकाकिनी दीर्घमहमुषिता शत्रुसद्मनि ।
मित्रस्थानस्थितोऽपीह कः साधु मयि वक्ष्यति ॥ ३५ ॥

आन्तरः पुरुषो वेत्ति वेत्ति वायुः शिखी तथा ।
वेत्तीयं द्यौर्भगवती वेत्ति भूर्जननी च माम् ॥ ३६ ॥

पश्यन्त्येव जगद्वृत्तं न वदन्ति किमप्यमी ।
अहं साध्वीति संपृष्टा कथं वक्ष्याम्यसाक्षिकम् ॥ ३७ ॥

किं भूयसा भगिनि मां गणयान्यगतामितः ।
विरहज्वलनोच्छिष्टं जुहोमि ज्वलने वपुः ॥ ३८ ॥

मैवं मैथिलि भर्ता ते वृद्धसेवी रघूद्वहः ।
वेत्ति वेदवतीवृत्तं रम्भावृत्तं च स ध्रुवम् ॥ ३९ ॥

अत्यरुन्धति च स्त्रैणमापाणिग्रहणात्तव ।
रामो जानकि जानाति जनवन्न पुमानसौ ॥ ४० ॥

तपस्विन्योरिति तयोः संवदन्त्योः परस्परम् ।
आसीत्पुरस्तात्परिषत्सविशेषं विभीषणः ॥ ४१ ॥

किमन्यत्पण्डितम्मन्ये जाते रघुपतौ तदा ।
धिगिति स्वयमुद्दीप्तं साऽविशद्दहनं सती ॥ ४२ ॥

तामरुन्धन्त कपयस्तस्याः प्रतिहतास्त्विषा ।
किमन्यत्सोऽपि काकुत्स्थः प्रेक्ष्य तां चकितोऽभवत् ॥ ४३ ॥

पृष्टो न जाम्बवानेष पृष्टो नैव विभीषणः ।
सुग्रीवोऽपि न पृष्टोऽयं न पृष्टो हनुमानयम् ॥ ४४ ॥

अनुष्ठितं घोरमिदं त्वया राघव लाघवात् ।
यद्गुरुक्तैः प्रतीष्टेयं पुरस्तादेव मानिनी ॥ ४५ ॥

केन केनाहृतं दारु केन केनाहृतः शिखी ।
केन केन कृतो द्रोहश्चपलेन वनौकसा ॥ ४६ ॥

केन त्वमाहृतो वह्ने केन चैषा हुता त्वयि ।
राजस्त्वं कथमादत्से तीक्ष्णदण्डः कपीश्वरः ॥ ४७ ॥

आकृष्यतां द्रुतं देवी कृशानुः किं करिष्यति ।
ध्रियतामात्मतनुभिः सतीयं वानरेश्वरैः ॥ ४८ ॥

हा मुखं मुग्धबिम्बोष्ठं हा नेत्रे पक्ष्मलायते ।
हन्त हेमतरोर्वल्लीं दग्धां धिगिति वह्निना ॥ ४९ ॥

तेनाक्रन्दनिनादेन कपीनां गगनस्पृशा ।
अष्टादशमरुत्कोट्यः समानीता भुवस्तलम् ॥ ५० ॥

ऊचुस्तास्तात काकुत्स्थ कोऽयमद्य मनीषिणः ।
तव त्र्यम्बकचूडेन्दुलेखायां लाञ्छनभ्रमः ॥ ५१ ॥

तात नान्यगृहस्थाऽपि चलत्येवंविधा वधूः ।
सा योषिज्जातिरन्यैव या स्वगेहेऽपि चञ्चला ॥ ५२ ॥

शीलं नाम तदेतस्याः परं जानीमहे वयम् ।
पृच्छ नः सत्यमितरो दोषमेवेक्षते जनः ॥ ५३ ॥

पश्य रामकलत्रस्य चारित्रं ज्वलतोऽनलात् ।
उदेति शुद्ध्याऽधिकया शिखिशौचमिवांशुकम् ॥ ५४ ॥

प्रमाणमनुधावन्ति पण्डिता भवदादयः ।
प्रमाणाभासमासाद्य किमस्यां व्यतितिष्ठसे ॥ ५५ ॥

आर्य पूर्वस्तवेक्ष्वाकुः सूर्यसायुज्यमीयिवान् ।
कृत्स्नं पश्यति काकुत्स्थ नृणां सुकृतदुष्कृते ॥ ५६ ॥

अयमाह विशेषेण विशुद्धेयं वधूस्तव ।
माभूः शङ्कुशुकी तात गृहाणोमिति गेहिनीम् ॥ ५७ ॥

वैवस्वतो मनुरयं त्वामाह गृहिणीमनु ।
मा गच्छ वत्स सन्देहमसन्दिग्धगिरो वयम् ॥ ५८ ॥

अयं दिलीपो भूपालः पौलस्त्योन्मूलनात्तव ।
दूरं राघव तुष्टोऽपि रुष्टो वाम्यपरिग्रहात् ॥ ५९ ॥

रघुर्लघुतरं प्राह त्वामयं कुपिताननः ।
यदहासीर्विना दोषान् कुशध्वजसमुद्भवाम् ॥ ६० ॥

हे देवा मम दुर्बुद्धेस्तनयः सदृगीदृशः ।
इत्यवादीद्दशरथो विनिश्वस्य मितं वचः ॥ ६१ ॥

अहो बालस्य कौलीनभयमस्येत्यजोऽब्रवीत् ।
यदर्धमात्मदेहस्य छित्वायं दूरमाक्षिपत् ॥ ६२ ॥

किं बद्धः सरितां नाथः क्लेशिताः किं वनौकसः ।
त्यक्तव्या यदि वैदेही किं हतो दशकन्धरः ॥ ६३ ॥

इति रामं समुद्दिश्य चिन्तयत्सु परस्परम् ।
गतेषु हर्षादित्युक्त्वा सूर्यवंश्येषु राजसु ॥ ६४ ॥

जज्वाल परमत्युच्चैरर्चिष्मान् सुरसंसदि।
नादहत्तां सतीत्यग्निः कोऽप्ययं तत्र कः शिखी ॥ ६५ ॥

मरुद्गणानां सर्वेषां पूर्वेषां च रघूद्वहः।
प्रामाण्यात् परिजग्राह प्रियामग्निसमर्पिताम् ॥ ६६ ॥

ययुर्दत्वाऽऽशिषं देवाः कपयो ननृतुर्मुदा।
रक्षांसि भेजुर्लङ्कायामभिषिक्तं विभीषणम् ॥ ६७ ॥

---

( असंपूर्णः )।



# परिशिष्टम् । २ ।

# सप्तत्रिंशः सर्गः ।



तत्राथ तं हनुमता निहतं निकुम्भं वीक्ष्य प्लवङ्गपतयो जयघोषणाभिः ।
उद्यत्प्रमोदरससम्भृतमानसास्ते व्यालोलकुण्डलितवालधयो ववल्गुः ॥ १ ॥

तेषां स कोपि रणमूर्द्धनि वानराणां तद्धेतुरुद्धतजयध्वनिरुच्चचार ।
श्रोत्राध्वना दशमुखस्य मनः प्रविश्य शोकेन यः सपदि सङ्गमयांबभूव ॥ २ ॥

पुत्रेषु बन्धुषु सुहृत्सु सुहृज्जनेषु भृत्येषु तेषु न तथा युधि निष्ठितेषु ।
विश्वत्रयस्य जयिनः स यथाऽनुजस्य प्रीत्या शुशोच किल कुम्भनिकुम्भनाशे ॥ ३ ॥

तूर्णं रणादपगतक्षणदाचरेभ्यो विज्ञाय तन्निधनमाधिकरं दशास्यः ।
नेत्रावलीविगलदश्रुपरम्पराया व्याजाज्जलाञ्जलिमिवैष ददौ जयाय ॥ ४ ॥

मानैकगेहमपि दूरमभूतपूर्वां सम्प्राप योषिदिव कातरतामकस्मात् ।
आसन्नवर्तिनिरतस्य विनाशकाले सञ्जायते विननयः प्रकृते न कस्य(?) ॥ ५ ॥

धैर्यं विहाय स जगत्त्रयधैर्यहारी शोकातिरेकविकलीकृतचित्तवृत्तिः ।
वक्त्रैस्तदा दशभिरश्रुजलाभिषिक्तैरित्थं सगद्गदपदं व्यलपद्दशास्यः ॥ ६ ॥

आगच्छ वत्स मम यच्छ वचो निकुम्भ प्राप्ता त्वया विमुखता पितुरग्रजे किम् ।
आवालकेलि विनयैकनिकेतनेन मच्चित्तवृत्तिपदवी न कदाऽप्यलङ्घि ॥ ७ ॥

दुःखाकुलं हृदयमेहि परिष्वजस्व सम्प्रत्यदो मम निवारय दीर्यमाणम् ।
हा हन्त तातगुरुमेनमनिष्टकष्टं कष्टामिमामनुभवन्तमुपेक्षसे किम् ॥ ८ ॥

उत्तिष्ठ विष्टपजयी त्वमिति प्रतीमः कोसौ प्लवङ्गपशुना भवतोऽवसादः ।
एह्येहि वीरवर नन्दय नन्दयैनं शोकात्समुद्धर समुद्धर को विलम्बः ॥ ९ ॥

कुत्र व्रजामि हृदयं क्व विनोदयामि कस्याग्रतो निजमिदं कथयामि दुःखम् ।
सूनुः सखा सहचरः सचिवो रहस्यरक्षैकतत्परमना हि भवान्ममाभूत् ॥ १० ॥

धिग्दुर्विधेर्विलसितं विपयेन बुद्धेः त्वं येन संस्मरणमात्रमनायि वत्स ।
किंवाऽथ तस्य मदभाग्यमहानिलेन निर्धूतपादप इवासि परं निरस्तः ॥ ११ ॥

बालोऽप्यसि प्रचुरवीररसाम्बुराशिरग्रेसरः समरकर्मणि वाहिनीषु ।
वीरेषु वासवजिदादिषु सत्सु वत्स नाहं जयं प्रति न सम्प्रति संशयालुः ॥ १२ ॥

उन्मील्य शोकविकले मयि मुञ्च चक्षुः सम्प्रत्यहो न समयश्चिरशायितायाः ।
निद्रायितं समिति चेद्भवता प्रसिद्धधाम्नोऽपि राक्षसपतेर्मम का जयाशा ॥ १३ ॥

हेलाविहारितपुरन्दरकुम्भिकुम्भ कुम्भानुज त्वमपि वानरकीटकेन ।
तेन प्रसह्य समरे विनिपातितोऽसि लीलायितं जयति केवलमीश्वरस्य ॥ १४ ॥

बाष्पाम्बुपूरलहरीपरिरुद्धकण्ठः सोऽलं विलप्य सहसा किल जोषमास ।
शोकस्य हन्त विषमः प्रसरः स कोऽपि येनात्मसाद्दशमुखोऽपि बलादकारि ॥ १५ ॥

तस्मिन्नपापशुचिमौलिकिरीटकोटिरत्नद्युतिव्यतिकरस्तिमितैर्बभासे (?) ।
सा राक्षसैः परिषदिन्द्रधनुर्विराजिनिर्वातनिश्चलतमैर्जलदैरिव द्यौः ॥ १६ ॥

पाकोन्मुखं दशमुखस्य पुराकृतानां दुष्कर्मणां मनसिकृत्य फलं तदानीम् ।
संसत्सदः परिगलन्नयनाम्बुसिक्तां केऽप्यासनान्तभुवमुल्लिलिखुर्नखाग्रैः ॥ १७ ॥

केऽप्यस्मरन् गिरमृषेर्हृदि नारदस्य केऽपि स्फुटं भवमनित्यतया निनिन्दुः ।
केचिज्जगुर्नियतिरेव बलीयसीति दीर्घां विकल्पपटलीं चिरमीयुरन्ये ॥ १८ ॥

सौहित्यमस्ति न जगद्ग्रसतां परं नस्तेषां कियत् कवलनं नरवानराणाम् ।
दोर्विक्रमादगणिताखिलविश्वसाराः केऽप्युत्कटा इति हृदा घटयांबभूवुः ॥ १९ ॥

अस्तोकशोकविकलं तमवेक्ष्य चण्डदोर्दण्डदर्पदलितामरवीरवीर्यम् ।
इत्यूर्जिताक्षरमुवाच वचः खराङ्गजन्माथ संसदि तदा मकराक्षरक्षः ॥ २० ॥

लीलाप्रचालितमहेशनिवासशैल स्वामिन् शुचाऽन्यजनवत् परितप्यसे किम् ।
निःशेषिताखिलवनान्तमहाद्रुमोऽपि पाथोनिधिं दहति न प्रबलो दवाग्निः ॥ २१ ॥

प्रायो द्विषत्यभिभवेन स शोकपात्रं जायेत तत्प्रतिविधान अनीश्वरो यः ।
सीदेत्तटद्रुभिरपां हि रयो न तेषामुन्मूलनक्षमतमो विटपाहतोर्मिः ॥ २२ ॥

स्फूर्जद्बलात्मविषयीकृतविश्व विश्वश्रीसारिकाश्रितमहाभुजपञ्जरस्य ।
कस्ते रिपुस्त्रिभुवनस्य भवान् विजेता सम्भावना मनसि का व्यतिरेकपक्षे ॥ २३ ॥

भास्वत्किरीटमणिराजिविराजिमौलिमन्दारचारुकुसुमप्रकरं किरन्तः ।
इन्द्रादयोऽपि ककुभां पतयः पदाग्रे येन प्रसह्य विजितास्तव लोलुठन्ति ॥ २४ ॥

पूर्वं विचीर्णतपसा परितोषिताद्यः सम्प्राप सर्वपरमास्त्रशतानि धातुः ।
तेजस्विनं तनुभुवं तव मेघनादं कस्तं सहेत समरे रजनीचरेन्द्र ॥ २५ ॥

आस्तां महेन्द्रविजयी स हि वीरवर्यः किं तेन नीचनरयोः कपिकीटकेषु ।
त्वच्छासनादहमपि क्षणदाचरेन्द्र क्रुद्धो रणे त्रिभुवनं कवलीकरोमि ॥ २६ ॥

क्रोधोद्धुरभ्रुकुटिधिक्कृतधूमकेतुर्निर्घातघोरघनघर्घरसिंहघोषः ।
स्वामिन्नहं जगदुपप्लवदानशौण्डः कुर्वन् प्लवङ्गमकुलप्रलयं विलज्जे ॥ २७ ॥

वेगान्निपातिविशिखप्रकरेण कण्ठात् सञ्छेदितैर्वनसदां स्रवदश्रुमिश्रैः ।
अद्यान्त्रनालवलयग्रथितैः शिरोभिर्लङ्कापथेषु तनवै वद तोरणानि ॥ २८ ॥

को विक्रमो विनिहतैर्भुजशालिनो मे तैर्भूरिभीतिभवनैः कपिभिर्वराकैः ।
गम्भीरवारिनिधिबन्धनगर्वितौ तौ द्वावेव हन्मि दशकण्ठ रणे मनुष्यौ ॥ २९ ॥

सन्तर्प्य रक्तसुरया कपियूथपानां तेषां शिरांस्युपनयन् प्रयतः फलानि ।
उत्कृत्तकण्ठपरिक्लृप्तनरोपहारैः कुर्यां बलिं पलभुजां रणचत्वरेऽस्मिन् ॥ ३० ॥

कीलालकल्पितनदे रणदीक्षितोऽस्मि स्नातः समुच्चलितदुष्कृतिमन्त्रगर्भम् ।
क्लृप्तप्लवङ्गसमिधो जठराग्निकुण्डे रामं जुहोमि रचयन्नरमेधयज्ञम् ॥ ३१ ॥

स्थामैकधामभुजनिर्जितविश्वसारो न प्रापयामि युधि दाशरथी रथी चेत् ।
अद्याहमन्तकपुरं क्षणदाचरेन्द्र तत्का भवेत्सुभटसंसदि मे प्रशंसा ॥ ३२ ॥

प्रत्यक् विचारय निवारय मोहमन्तः पौलस्त्य कोऽहमिति चिन्तय मा विषीद ।
स्मेराशयो निजशिरांसि भवानिवान्यः कश्चच्छदर्चिषि निकृत्य जुहाव वह्नौ ॥ ३३ ॥

इत्युत्कटस्फुटवचांसि निशम्य तस्य मूढः परां मुदमवाप निशाचरेन्द्रः ।
स्थाम्नामिहास्ति भुजयोस्तव किं न साध्यमित्थं प्रशस्य समराय तमादिदेश ॥ ३४ ॥

उद्गर्जता प्रियवचोभिरधीश्वरस्य प्रोत्साहितेन रजनीचरकुञ्जरेण ।
चित्रं मदान्धमनसा हरयोऽपि तेन सङ्ख्याधिका न गणिताः स्फुटकेसरास्ते ॥ ३५ ॥

शक्तित्रिशूलहलमुद्गरभिण्डमालप्रासासिपट्टिशगदाङ्कुशपाशगर्भम् ।
हैमं रथं ध्वजविराजितमेत्य वाजियुक्तं स सारथिसमाहृतमारुरोह ॥ ३६ ॥

दृप्यद्भिरायुधधरैर्निशितासिरोमसंस्पर्शनोदितपरस्पररोषवाष्पैः ।
क्रूरैः स्थलप्रधनविद्भिरुदग्रवीर्यैर्वक्षःस्थलप्रतिहतेन्द्रपविप्रहारैः ॥ ३७ ॥

पिङ्गप्रदीप्तनयनैर्नवनीरदाभैर्दीर्घास्यकोटरलसद्रसनाकरालैः ।
अत्युन्नतायतरदोल्लिखितान्तरिक्षै रक्षोभटैरनुगतः स ययौ रणाय ॥ ३८ ॥ युग्मम् ॥

दानोद्धुरद्विरदबृंहितवाजिहेषासंमूर्च्छितप्रतिदिशं पिदधे पयोधेः ।
स्फारं प्रघोषमपि राक्षसवाहिनीनां तत्कालनिर्गमनतूर्यमहानिनादः ॥ ३९ ॥

मूर्च्छन् सुवेलगिरिकन्दरकोटरेषु मन्द्रायुधध्वनितसंमिलितं समन्तात् ।
खं व्यानशे तरलयन् द्युसदां समाजं प्रस्थानडिंडिमरवः पलभुक्चमूनाम् ॥ ४० ॥

मध्ये स्खलत्करितुरङ्गरथैः प्रतीपवातोद्धुतध्वजपटायुधचामराद्यैः ।
बाह्यात्मनामशकुनैर्विदितोऽप्यपायः सेनाचरैर्न ददृशेऽतिमदावलेपात् ॥ ४१ ॥

भ्रान्तास्तदा शिरसि मांसभुजो न गृध्राः सेनादिभिस्तदशुभं विविदुः पुनस्तैः(?) ।
अत्युन्नबोधि(?)पतगा अपि नः स्वपक्षच्छायाभिरुद्गतभयाः प्रियमाचरन्ति ॥ ४२ ॥

तैर्दुर्निमित्तशतशंसितसन्निपातैरप्याहवोत्कलिकयाऽऽकुलितैः पलादैः ।
आत्यन्तिकान्वयपरिच्युतशेमुषीकै(?)रैक्षि प्लवङ्गमबलं तुमुलं पुरस्तात् ॥ ४३ ॥

ग्राहोग्रराक्षसगणामनणुप्रमाणां घोरारवां करितुरङ्गतरङ्गमालाम् ।
सेनां रुरोध सहसा प्रबलः प्लवङ्गव्यूहो महान् विधिनियोग इवाब्धिवेलाम् ॥ ४४ ॥

प्रावर्तत प्लवगराक्षसवाहिनीनामन्योन्यमर्दनरसातिशयो रणोऽथ ।
मुष्टिद्रुमाद्रिनखरप्रतिरुद्धवेगनिस्त्रिंशमुद्गरगदापरिघप्रहारैः ॥ ४५ ॥

अम्भोजनालवदलं कपिभिः प्रणुन्ना निन्युः शरैः शिखरिणः शतखण्डशस्ते ।
तैर्मुक्तशैलशिखरैः पिशिताशनानामग्रान्त आशु शमिताः शितशक्तयोऽपि ॥ ४६ ॥

ग्राहग्रहा वलयिताः ततपुच्छदण्डैरावेष्ट्य रोषरभसद्विगुणारुणास्यैः ।
उर्व्यां प्रकम्पितफणीन्द्रफणासहस्रमाजघ्निरे प्रसभमस्रभुजः कपीन्द्रैः ॥ ४७ ॥

गाढप्रहारपतिता रजनीचराणां वान्तो मुखेन रुधिरं हरयो मुमूर्च्छुः ।
प्राणाः परं रुरुधिरे नियमेन तेषां रामाभिधानहरिकार्यरसामृतेन ॥ ४८ ॥

अङ्गेषु वज्रकठिनेषु निपत्य तेषां मुक्ताः शिलाः कपिभिरापुरणुत्वमुच्चैः ।
हस्तोद्धृतानि हतये पलभुग्भिरेव ते चायुधानि रभसोत्प्लवनेन जहुः ॥ ४९ ॥

तेषां वलीमुखबलेरितशैलसानुसंघट्टजं कुलिशकर्कशविग्रहाणाम् ।
शङ्कामगुः शिखिनमुग्रशिखं निरीक्ष्य सिद्धा दिवि प्रलयकालमहानलस्य ॥ ५० ॥

नक्तश्चरैर्विनिहताः परिघप्रहारैः सम्मूर्छिता रणभुवि प्लवगा निपेतुः ।
ये न्यस्य पादमुरसि द्रुतलब्धसंज्ञास्तेषां शिरांसि रुषिताश्चकृषुर्नखाग्रैः ॥ ५१ ॥

आत्मानमप्यगणयंश्च रणानुरोधी स्वीयांत्रपात्रमवभिद्य नखैः प्लवङ्गः ।
कश्चिन्निजास्थिशकलायुधभृन्निहन्तुं यान्तं प्रहृत्य रजनीचरमभ्यधावत् ॥ ५२ ॥

कश्चिद्विपन्नकरिदन्तविवल्गदङ्गस्तस्थौ गतासुरपि शोणितभुक् तथैव ।
मद्गाढमुष्टिनिहतोऽपि पपात नासौ धिङ्मां मुहुः स्वमिति तु प्लवगो निनिन्द ॥ ५३ ॥

भग्नोद्यमाः सकलजर्जरितास्थिबन्धवक्षस्युदग्रतलमुष्टिहताः कपीन्द्रैः ।
हस्तान्निजानि विविदुः श्लथमुष्टिबन्धात् शस्त्राणि ते न निपतन्त्यपि नष्टसंज्ञाः ॥ ५४ ॥

तेषाममन्दमदमेदुरमत्सराणां सेनामुदग्रतरसां प्लवगप्रवीराः ।
निन्युर्जयं रणरसोद्धुरकेसरास्ते पञ्चानना इव घटा युधि सिंधुराणाम् ॥ ५५ ॥

मस्तिष्ककीकसयकृद्रसमज्जमेदोमांसास्थिशोणितवसाकुलितप्रदेशम् ।
गृध्रादिपक्षिनिकरस्य च जम्बुकानां सौहित्यहेतुरभवत्समरांगणं तत् ॥ ५६ ॥

निघ्नां प्लवङ्गमबलैर्बलशालिनोऽपि ते निन्यिरे पलभुजो बहुशः समीके ।
उद्यद्भयोत्तरलतारदृशः कियन्तः सेनापतिं च शरणं मकराक्षमीयुः ॥ ५७ ॥

मा भैष्ट तिष्ठत विमुञ्चत मा मृधं वो भीतिभ्रमो मनसि कोऽयमभूतपूर्वः ।
तत्कोऽस्मि संयति न चेज्जगदद्य बाणैः कुर्यामराघवमलक्ष्मणमप्लवङ्गम् ॥ ५८ ॥

रक्षांसि तेन गिरमित्यभिधाय तानि दोर्गर्वखर्विताधिया रजनीचरेण ।
वैरं पितुर्मनसि संस्मरता कपीन्द्रान्मुक्त्वा रणाय चकमे रघुनाथ एव ॥ ५९ ॥

सुग्रीवनीलरभरम्भनलाञ्जनेयताराङ्गदद्विविदमैन्ददरीमुखाद्याः ।
तं न प्लवङ्गपतयो रुरुधुर्वृतैकवीरे भटे न हि घटेत मृधेऽन्यरोधः ॥ ६० ॥

सार्द्धं चतुर्दशसहस्रनिशाचरैर्यं पूर्वं भवान् खरमुदग्रबलं जघान ।
स्वामिन् विलोकय पलाशवरूथिनीनां नेता तवाभिमुखमेति तदङ्गजोऽयम् ॥ ६१ ॥

प्रत्यग्रकूटकुशलेषु रणोत्कटेषु योधेषु सत्स्वपि निशाचरचक्रवर्ती ।
सेनापुरःसरममुं मकराक्षमेकं कृत्वा जिगाय भुवनानि चतुर्दशापि ॥ ६२ ॥

सर्वान्सुराञ्जयति संयति लीलयैव मर्त्यानसौ न गणयत्यभिमानदोषात् ।
आशीविषभ्रुकुटिमीक्षितुमप्यशक्तो लोकोत्तरः प्रतिभटः पुरुषः पुरोऽस्य ॥ ६३ ॥

युक्तस्य दोर्भिरपि विंशतिभिः प्रसिद्धैः द्वावेव पङ्क्तिवदनस्य तु मुख्यदोषौ ।
एकः पिबन्निव जगत्त्रयमग्रतोऽसावन्यो न कस्य विदितो युधि मेघनादः ॥ ६४ ॥

अस्तप्रहस्तमुखमुख्यमहाभटोऽपि लङ्कापतिर्यदमुनैव दधाति दर्पम् ।
तस्मादमुं यमपुरीपथिकं कुरुष्व तत्तादृशां हि महसां तव किं न साध्यम् ॥ ६५ ॥

देव प्रसह्य भवता भुजगेन्द्ररौद्रैर्निष्ठापितस्य रणमूर्ध्नि पुरा पृषत्कैः ।
पन्थानमेष गत एव पितुर्निजस्य कार्यं हि कारणगुणै(र्व्य)तिरिच्यते(न) ॥ ६६ ॥

इत्थं विभीषणवचांसि धृतावधानः श्रुत्वा स मानवतनुः पुरुषः पुराणः ।
देवैः प्लवङ्गमशरीरधरैः परीतः तं लीलयैव भगवानवलोकते स्म ॥ ६७ ॥

काकुत्स्थ वेद्मि बलवानसि मानवेषु मा गर्वमुद्वह कृतं तव विक्रमेण ।
साङ्ग्रामिकत्वमथवा यदि किञ्चिदस्ति तत्तिष्ठ रे तव विलोकयिताऽस्मि सारम् ॥ ६८ ॥

कोदण्डदण्डगुणसंहितबाणपुङ्खवेल्लत्करं तमिति वादिनमापतन्तम् ।
तद्योद्धुकाममनुजं विनिवार्य रामः प्रापत्तमस्त्रपमनर्गलमात्मनैव ॥ ६९ ॥

अन्योन्यसायकबलाहतिजातवन्हिज्वालाकरालितसमस्तनभोन्तरालः ।
पश्यत्सु मत्सरभृता दिवि निर्जरेषु तेनाहवः प्रववृते रघुनन्दनस्य ॥ ७० ॥

आकर्णकुण्डलितकार्मुकमुक्तबाणः क्ष्वेडारवैर्मुखरयन् ककुभां मुखानि ।
सूर्यान्वयस्य पुरतः स पिधाय सूर्यं तत्कालरात्रिमिव रात्रिचरश्चकार ॥ ७१ ॥

दिग्व्यापिभिः प्रचुरवीर्यभराभिरामो रामोऽपि तस्य विशिखान् विशिखैर्विभिद्य ।
तद्यानकेतुमलुनात्सहसा सुराणां दोलायमानमनसां सह साध्वसेन ॥ ७२ ॥

यावच्च रोषपरुषः प्रधनाय धन्वी भूयोऽपि पौरुषधनः स धनुर्धुनाति ।
तावत्पपात धनुषा सह तस्य बाहुर्बाणेन बालहरिणाङ्कमुखेन लूनः ॥ ७३ ॥

अत्रान्तरेऽथ तुरगेषु च सारथौ च चक्रद्वयभ्रमदरेषु च कूबरे च ।
बाणास्तथा रघुपतेर्निशिता निपेतुः सर्वात्मनैव स यथा विरथो बभूव ॥ ७४ ॥

तत्कालमुज्झितरथः प्रतिगृह्य कुन्तं हन्तुं स गाधिसुतशिष्यमगाधवीर्यम् ।
अभ्युत्पपात समुदञ्चितबाहुदण्डः क्रुद्धः क्षितिध्रविवरादिव पुण्डरीकः ॥ ७५ ॥

कुन्तभ्रमश्रमचमत्कृतसिद्धसङ्घं तं वीतसाध्वसमथार्द्धपथप्रपन्नम् ।
छित्वा शिरः क्षुरमुखेन शिलीमुखेन सम्प्रापयद्रघुपतिः पुरमन्तकस्य ॥ ७६ ॥

पौलस्त्यस्य त्रिभुवनरिपोर्मुख्यरक्षःप्रवीरे नीते नाशं दशरथभुवा तत्र पुत्रे खरस्य ।
अङ्गैरुद्यद्बहलपुलकैः पद्मनालायमानैः वीरध्यानं किमपि कपयः प्रीतिभाजो ववल्गुः॥७७

इत्यभिनन्दकृतौ रामचरिते महाकाव्ये महंभीमकृतौ सप्तत्रिंशः सर्गः ॥

---

न मधुरं मधु फल्गु च फाणितं रसपरा न सिताऽपि सुधा मुधा ।
अधर एव नवप्रमदाधरो लसति भीमकवेः कवितारसे ॥



# अष्टत्रिंशः सर्गः ॥



अथ क्षुरप्रेण रघूद्वहस्य तं छिन्नशीर्षं समवेक्ष्य खारिम् ।
प्रापुर्भयभ्रान्तविलोचनानि रक्षांसि शेषाणि कियन्ति लङ्काम् ॥ १ ॥

समन्ततो दृष्टरघूद्वहस्य शस्त्रान्धकारादिव दिग्विमूढैः ।
स्वनाशशङ्काकुलमानसैस्तैः कथञ्चिदापे दशकण्ठसंसत् ॥ २ ॥

दशाननायेति मलीमसाभा नाशं शशंसुः खरनन्दनस्य ।
ते यातुधाना इव सम्परायभङ्गोद्भवाकीर्तिमषीविलिप्ताः ॥ ३ ॥

तत्स्थैर्यमौज्झत्तदपायवात्याबलाद्धुतो यद्दशकण्ठशाखी ।
तदेन्द्रजिद्बाहुविकत्थनैव लता ग्रहोऽभूदवलम्बनाय ॥ ४ ॥

आकुञ्चितं सव्यम(व)ग्रकर्मा निवेश्य पादं मणिरत्नपीठे ।
दुर्वारदोर्दर्पमसौ जगाद दशाननः संसदि मेघनादम् ॥ ५ ॥

वदन्त्यमी सङ्गरकान्दिशीकाः प्रत्येषि कच्चिन्मकराक्षनाशम् ।
तस्मिंस्तु मायापिहितस्वरूपे मन्येऽत्ययभ्रान्तिरमीभिरापे ॥ ६ ॥

ऋक्षप्लवङ्गैकपरिच्छदेन निरोजसा विक्रमवर्जितेन ।
न जीयते तेन स तापसेन गोमायुनेव द्विरदोऽतिमत्तः ॥ ७ ॥

क्वासौ तरस्वी मकराक्षवीरः क्षुद्रस्तपस्वी क्व स रामनामा ।
कस्तर्कयेन्नाशममुष्य शावात्पञ्चाननस्येव कुरङ्गपुत्रात् ॥ ८ ॥

स तेन चेत्संयति शौर्यशाली छलेन केनापि हतो महौजाः ।
न जातु पुंसां हि बलं बलीयः कालो बलीयानिति मे वितर्कः ॥ ९ ॥

त्रैलोक्य(?)लोकोत्तरविक्रमस्त्वं रणाय वत्सोत्सहसे न यावत् ।
चेतश्चमत्कारकराणि तावत् मनुष्यडिम्भस्य विजृम्भितानि ॥ १० ॥

समन्ततस्त्वच्छरजालवृष्ट्या सान्द्रान्धकारे सति मेघनाद ।
बभूव नालं युधि दर्शनेऽपि सहस्रनेत्रस्य सहस्रनेत्री ॥ ११ ॥

नेन्द्रादयः संयति लोकपाला न च ग्रहा नो वसवो न रुद्राः ।
न सिद्धविद्याधरकिन्नराश्च तवाभिमुख्यं बलिनोऽपि जग्मुः ॥ १२ ॥

पितामहाराधनदृष्टसर्वमहास्त्रपारस्य जगत्त्रयेऽपि ।
कः संयुगे वत्स तवोर्जितस्य सोढुं शरासारमलंभविष्णुः ॥ १३ ॥

भीरुस्वभावाच्चपला कपीनां जातिर्न सा तेऽभिमुखी भवित्री ।
तौ तिष्ठतश्चेदुरगेन्द्रभीमैः शरैः समाप्तिं मनुजौ नयस्व ॥ १४ ॥

तावद्य मिथ्याजटिलौ मनुष्यौ सुग्रीवमात्माग्रजघातिनं तम् ।
कुलद्रुहं वत्स विभीषणञ्च त्वमन्तकस्यान्तिकमापयाशु ॥ १५ ॥

तन्न्यस्तसर्वप्रधनातिभारः स सन्निगद्येति तदा व्यरंसीत् ।
वृत्रद्विषद्वैर्यपि वीरवर्यस्तां वाचमोमित्युररीचकार ॥ १६ ॥

अथारिनिर्मूलनबद्धकक्षो विक्षोभयन्नाकसदां मनांसि ।
ययौ प्रणम्य क्षणदाचरेन्द्रं स ब्रह्मरक्षोनुगतोऽग्न्यगारम् ॥ १७ ॥

स क्रूरकर्मा शरपत्रदर्भानास्तीर्य वह्नावभिचारमन्त्रैः ।
हविर्महाजाङ्गलमक्षवृक्षसमित्समिद्धे(?)जुहवांबभूव ॥ १८ ॥

निकृत्तकण्ठस्य शितिच्छगस्य निधाय शीर्षं स्रुचि लोहमय्याम् ।
अच्छिन्नधाराभिरसृङ्मयीभिः पूर्णाहुतिं शक्ररिपुश्चकार ॥ १९ ॥

अथो रथं न्यस्तसमस्तहेतिमारुह्य मायापिहितस्वरूपः ।
आधाय सन्धां रिपुनिर्जयाय ययौ स जन्याय भुजाभिमानी ॥ २० ॥

किमेतदित्यद्भुतमीक्षितासु दिक्षु प्लवङ्गैः स समाशशंस ।
विभीषणस्तं रवमाहवाय निर्गच्छदिन्द्रारिधनुर्गुणस्य ॥ २१ ॥

नभश्चराणामपि लोचनानामगोचरत्वं वियति प्रयातः ।
स ताडयामास बलेन बाणैर्वलीमुखान्राक्षसराजसूनुः ॥ २२ ॥

यतो यतः सम्पततः पृषत्कानद्राक्षुरक्षामरुषः कपीन्द्राः ।
दधाविरे ते द्रुमशैलहस्ता जिघांसया व्योमनि तत्र तत्र ॥ २३ ॥

मायाविनस्तस्य रणे न रूपं न कार्मुकं नापि रथो न यन्ता ।
परिस्फुरद्बाणपरम्पराभिर्विद्धं स्वमेवैक्ष्यत वानरेन्द्रैः ॥ २४ ॥

यान्येककालं शतशः समेत्य सानून्यमुञ्चन् दिवि वानरेन्द्राः ।
अलब्धलक्ष्याणि दिवः पतन्ति तानेव तानि व्यथयांबभूवुः ॥ २५ ॥

संपश्यतां वैरिदिदृक्षया द्यां केषाञ्चिदृक्षप्लवगेश्वराणाम् ।
स पूरयित्वा परितः पृषत्कैर्मुखानि भस्त्राकरणीचकार ॥ २६ ॥

स्फारस्फुरत्तद्विशिखाभिघातस्फुटत्कपीन्द्रोद्धृतशैलजन्मा ।
जगद्विसर्पी ध्वनिराविरासीत्संवर्तनिर्घातसहस्रघोरः ॥ २७ ॥

शरोत्करेण प्रहरत्यवश्यं मामेव नान्यं रुषितो हठेन ।
वलीमुखेन्द्रैरिति बाणभिन्नैः प्रत्येकमन्तर्बिभरांबभूवे ॥ २८ ॥

तदीयनाराचशताभिपातक्षतक्षरच्छोणितशोणशोभम् ।
मधूदये पुष्पितकिंशुकानां तद्वानरानीकमवाप लक्ष्मीम् ॥ २९ ॥

प्रत्यङ्गमृक्षप्लवगप्रवीरास्तद्बाणभिन्नाः शतशो मुमूर्च्छुः ।
करोद्धृतान्नो विविदुर्द्रुमाद्रींस्ते नष्टसंज्ञाः पततः पृथिव्याम् ॥ ३० ॥

रे रे प्रकाशीभव मुञ्च मायां त्वमाद्यवीरो दशकन्धरस्य ।
वीरव्रतं क्व स्थलयोधिता चेत्त्वया विजिग्ये कथमित्थमिन्द्रः (?) ॥ ३१ ॥

मुहुः समास्फोटितपुच्छदण्डं नर्दन्तमुच्चैस्तरमित्युदीर्य ।
विशिष्य सोऽक्षस्मरणेन बाणैर्वीरं समीराङ्गजमाजघान ॥ ३२ ॥ युग्मम् ॥

समुद्धृतक्षिप्तगिरीन्द्रशृङ्गैराच्छादयन्तं जलदैरिव द्याम् ।
शिलीमुखैः संयति सूर्यसूनुं विव्याध स व्याध इव द्विपेन्द्रम् ॥ ३३ ॥

अवार्यवीर्यस्य सुरेन्द्रशत्रोः पतत्पृषत्कैश्चितयुद्धमाप्तान् ।
हृदान्न सत्त्वामृतमुत्तरङ्गं चित्रं मनागभ्यगमन्नलस्य (?) ॥ ३४ ॥

चिक्षेप शृङ्गाणि तथा गिरीणां शालान्विशालानपि वालिसूनुः ।
तद्वर्जनव्यग्रतया कथञ्चित्स बाणसन्धानपरो यथाऽऽसीत् ॥ ३५ ॥

निरन्तरं व्योमनि शैलशालविक्षेपजातश्रमसालसाङ्गः ।
तन्मार्गणैर्मर्मसु विद्धमात्रो निपत्य नेत्रे निमिमील नीलः ॥ ३६ ॥

तारं त्रिलोकीविदितैकसारं भूभृत्कराग्रं नभसि स्फुरन्तम् ।
निशातशक्त्या हृदये निहत्य स लम्भयामास विसंज्ञमुर्वीम् ॥ ३७ ॥

गवो गवाक्षो गवयो गजश्च दरीमुखश्चन्दन इन्द्रजानुः ।
रम्भो रुमण्वान् विनतो नतश्च रभः सुबाहुः द्विविदोऽथ मैन्दः ॥ ३८ ॥

तन्नैकशस्त्राहतिभिः समन्तात् शरासनसंग्राहविशीर्णगात्राः ।
एते तथाऽन्येऽपि वलीमुखेन्द्राः सङ्ग्रामखिन्ना इव शेरते स्म ॥ ३९ ॥

तदाशुगावेगतयाभिरामबलैकशालाग्रविणी विशाला (?) ।
अह्नाय शाखामृगराजिशाखा प्रवेपमाना किल भङ्गमाप ॥ ४० ॥

वेलातटान्तांश्च दरीगिरीणां द्वीपानि वार्द्धेस्तरुकोटराणि ।
दृष्ट्वा निपातं युधि यूथिकानां भयादनीकानि ययुः कपीनाम् ॥ ४१ ॥

हरीश्वरो जाम्बवताऽङ्गदेन समं सुषेणेन हनूमता च ।
विभीषणः स्वैः सचिवैश्चतुर्भिस्तस्थौ प्रभू दाशरथी परीत्य ॥ ४२ ॥

किं कान्दिशीकैर्निहतैरमीभिर्मयेति मुक्तः( क्त्वा )प्लवगान्हतास्थः ।
अत्यादराद्दाशरथौ शरौघान् ववर्ष( तत्रैव )तथेन्द्रशत्रुः ॥ ४३ ॥

आकर्णकृष्टोत्कटचापदण्डे सुरेन्द्रशत्रौ क्षिपति क्षुरप्रान् ।
अहो महोवर्ष्म पुराणपुंसः तन्मर्मरक्षैकपरं बभूव ॥ ४४ ॥

किंकार्यतामोहमना विनाशे प्रत्येकमुत्सर्पति वानरेषु ।
स्वैरप्रचारं तमवेक्ष्य शत्रोः रामं तदा लक्ष्मण इत्युवाच ॥ ४५ ॥

क्षयाय सर्वक्षणदाचराणां वैरिञ्चमस्त्रं तदहं नियोक्ष्ये ।
क्षयाग्निरौद्रार्चिषि यस्य यास्यन्त्युत्खातपक्षाः शलभत्वमेते ॥ ४६ ॥

ततोऽध्वगानां कुशलोऽस्तु पन्थाः सुराः परं संमदमुद्वहन्तु ।
निर्विघ्नमुच्चैर्मुनयो जयन्ता(?)मनैकपेये विहितेऽद्य विश्वे ॥ ४७ ॥

रोषातिरेकात्कृतसर्वरक्षःक्षयाय( नु )सन्धानदृढप्रयत्नम् ।
प्रोवाच सुस्मेरमुखाम्बुजश्रीः रामः सुमित्रातनयं नयज्ञः ॥ ४८ ॥

किमेष रक्षोपसदेषु तेषु विजृम्भते ते प्रतिघान्धकारः ।
स्फुरद्विवेकांशुनतोऽपि रोचि(?)र्विलुप्यते येन निरङ्कुशेन ॥ ४९ ॥

अयुध्यमानान् पृथुकान् प्रमत्तानन्तःसतः साध्वसिनोऽतिवृद्धान् ।
तव घ्नतो मांसभुजोऽपि भानोः कुलावलेपी भविता कलङ्कः ॥ ५० ॥

रोषान्निवर्तस्व न युक्तमेतत् न धर्ममुज्झन्ति रणेऽपि शूराः ।
विमुक्तधर्मस्य कदाऽपि पुंसः किं वत्स सिध्यन्ति मनीषितानि ॥ ५१ ॥

उदारगम्भीरगुणाभिराममुक्त्वेति वाक्यं विरराम रामः ।
निवर्तयामास निजं क्रियायास्तस्याः सुमित्रातनयोऽपि चेतः ॥ ५२ ॥

बलं विलुप्तं सकलं कपीनां रोमाग्र एकापि मम क्षतिर्न ।
एतावजित्वा बत तातपादान् पश्यामि न श्यामिकया कयाऽपि ॥ ५३ ॥

विदारितेन्द्रद्विरदेन्द्रकुम्भा अप्येतयोर्मे विशिखास्स्खलन्ति ।
तातेन दिष्टोऽस्म्यनयोर्जयार्थमलङ्घनीयो हि गुरोर्नियोगः ॥ ५४ ॥

यमः सुरेन्द्रो धनदः प्रचेता जिता मयाऽमी युधि लोकपालाः ।
मनुष्यमात्रावपि तावदेतौ मनो विजेतुं मम संशयालु ॥ ५५ ॥

तन्मायया मोहयितुं यतिष्ये मूढाविमौ मे भवतः सुजेयौ ।
इत्यादि चित्ते सुचिरं विचिन्त्य जगाम लङ्कां दशकण्ठसूनुः ॥ ५६ ॥

तस्मिन्गते जाम्बवतो निदेशात् महौषधीनामुचितक्रियाभिः ।
क्षणात् शरीरैर्विशदान् कपीन्द्रान् चक्रे चिकित्सां चतुरः सुषेणः ॥ ५७ ॥ चिकित्सा-चतुर इति पाठः ।

मुखाम्बुजानि व्यकसन्सुराणां गतेऽन्तरिक्षादथ मेघनादे ।
ये वाऽभवन् नष्टचराः प्लवङ्गास्तेपांजकीटा (खञ्जरीटा) इव शीघ्रमीयुः ॥५८॥

प्राप्तप्रबोधैः प्रसभं परस्य पुरी परीये परितः प्लवङ्गैः ।
तदा सुरेन्द्रारिकृतस्तु तेषां दुःस्वप्नतुल्यः स बभूव डिम्बः ॥ ५९ ॥

आक्रान्तकान्तनगरीनिलयाग्ररथ्याप्राकारचैत्यशिखरोपवनद्रुमाणाम् ।
कोलाहलेन मुदमुद्वहतां कपीनां चक्रे पदं हृदि सुरेन्द्ररिपोरमर्षः ॥ ६० ॥

इत्यभिनन्दकृतौ रामचरिते महाकाव्ये अष्टत्रिंशः सर्गः ।

---

न मधुरं मधु फल्गु च फाणितं रसपरा न सिताऽपि सुधा मुधा ।
अधर एव नवप्रमदाधरो लसति भमिकवेः कवितारसे ॥  भीम



# एकोनचत्वारिंशः सर्गः ।

अथो निदेशात्त्रिदशेन्द्रशत्रुर्निगूढमन्त्रस्य दशाननस्य ।
मायामयीं रामवधूं विधाय स पश्चिमं द्वारमवाप पापः ॥ १ ॥

म्लानां कृशां शोकनदीनिमग्नां दीनां कृपार्हामकृपेन तेन ।
करावकृष्टामिव वारणेन तां पद्मिनीमैक्षत गान्धवाहिः ॥ २ ॥

तां वीक्ष्य निस्त्रिंशकरेण तेन साध्वीं पुरस्ताद्धृतवेणिमूलाम् ।
दुःखस्य रोषस्य कृपारसस्य जगाम कोटिं परमां हनूमान् ॥ ३ ॥

उल्लङ्घितो वारिनिधिर्यदर्थं भ्रान्तं त्वयाऽस्मिन्नगरे यदर्थम् ।
प्रभुप्रभुस्ते व्यथते यदर्थं तां रक्ष रे वानर हन्यमानाम् ॥ ४ ॥

आबालकालादपि संचितं यत् संदर्शयास्मासु बलं तदद्य ।
स सान्त्वनेनैव निषेद्धुकामं हसन्नुवाचेति पुनः पुनस्तम् ॥ ५ ॥

त्रायस्व मां राम जगच्छरण्य युक्ता न ते लक्ष्मण मय्युपेक्षा ।
तदक्षनिर्वाणपरं हनूमन् गतं बलं तेऽद्य यतः श्लथोऽसि ॥ ६ ॥

पापाऽस्मि तात प्रियदुःखदेति स्थाने तवाशीर्मयि निष्फलाऽऽसीत् ।
तवापि हा गोत्रगुरो वसिष्ठ रामेऽनघे किं फलिता न वाचः ॥ ७ ॥

तामातुरां गद्गदिकार्तकण्ठीमिति ब्रुवाणामतिदीनवाचम् ।
हत्वाऽसिना तस्य पुरो दुरात्मा यथागतं रात्रिचरश्चचार ॥ ८ ॥

स कोऽपि हा हेति रवस्तदानीं वनौकसां तत्र समुल्ललास ।
पप्रच्छ येनान्तरनिष्टशङ्की रामः शुचां कारणमागतांस्तान् ॥ ९ ॥

शनैरशंसन्नतिमात्रपृष्टास्तदिन्द्रजिद्दारुणकर्म तेऽस्मै ।
तद्वाक्यतीव्राशनिना हतोऽसौ पपात शाखीव विभिन्नमूलः ॥ १० ॥

कैकेयिमातः फलितस्तवैव सहस्रशाखः खलु कामशाखी ।
इति ब्रुवाणेन च लक्ष्मणेन पादारविन्दोपरि तस्य पेते ॥ ११ ॥

ययुः परां निर्गतचेतनास्ते काष्ठां शुचः कामपि वानरेन्द्राः ।
विभीषणस्तत्त्वविदेक एव न शोकपङ्केन पुनर्विलिप्तः ॥ १२ ॥

पयोऽभिषेकेन पदाम्बुजाग्रे संवाहनेन व्यजनानिलेन ।
मूर्च्छा तयोर्दुर्द्धरशोकवेगसमुद्भवा शान्तिमनायि तेन ॥ १३ ॥

क्षणं मुमूर्च्छ श्लथगात्रयष्टिः क्षणं स चैतन्यमिव प्रपेदे ।
क्षणं पुरस्थामिव वीक्षमाणः प्रियां प्रसीदेति जगाद रामः ॥ १४ ॥

मृगाक्षि मामानतमौलिमेनं मुक्त्वा (मत्वा) मुखे मोचय मौनमुद्राम् ।
मनो मुहुर्मानिनि मथ्यमानमुपेक्षसे किं मम मन्मथेन ॥ १५ ॥

मृषा किमित्थं रसने ब्रवीषि गतैव साऽत्यन्तमदर्शनं मे ।
विभीषणस्तं प्रलपन्तमेवं कर्णामृतप्रायमुवाच वाक्यम् ॥ १६ ॥

अद्यैव देवी न विपर्ययोऽत्र साक्षात्कृता नाथ चरैर्मदीयैः ।
निकुम्भिलाहोमपरेण तेन मायाविनाऽसौ निरमायि माया ॥ १७ ॥

न कारयेत्तादृगनिष्टमस्या जयाशया रुद्धमतिर्दशास्यः ।
विधातुमीशो न विना तदाज्ञां भृशं नृशंसोऽपि च मेघनादः ॥ १८ ॥

तस्य प्रसन्नस्तपसा विरिञ्चिः पुरा वराणां शतमुत्ससर्ज ।
स साम्प्रतं निश्चितमस्ततन्द्रो जुहोति हव्यं विजयाय वन्हौ ॥ १९ ॥

समूतवर्मायुधवाजिकेतुः संजुह्वतस्तस्य रथोऽग्निकुण्डात् ।
आविर्भविष्यत्यपि तं न तस्मिन्नारूढमीशोऽपि विजेतुमीशः ॥ २० ॥

निकुम्भिलाहोमसमुत्सुकत्वान्मोहात्मिकीमित्यकरोत्स मायाम् ।
किमन्यथा वानरयूथपेभ्यो निरत्ययं पूर्णमनोरथः स्यात् ॥ २१ ॥

तस्यैकतानत्वमुपागतस्य सम्पूर्यते होमविधिर्न यावत् ।
असंशयं सम्प्रति नाथ तावदाक्रम्यते नेतरथा स जेयः ॥ २२ ॥

तस्येति वाक्यामृतशीकरौघैर्निर्वापिताशेषमनोऽभितापः ।
रामः कियद्भिः कपियूथनाथैः सहादिशल्लक्ष्मणमाहवाय ॥ २३ ॥

नीलानिली दक्षिणवामपक्षे विधाय पश्चात् नलदुर्मुखादीन् ।
पुरस्सरीभूतविभीषणेन सौमित्रिरादिष्टपथश्चचाल ॥ २४ ॥

सुरर्षयो हर्षविकासिवक्त्रा जयाशिषोऽस्मै ददुरम्बरस्थाः ।
स्वर्योषितश्चाक्षतपात्रहस्ताः प्रास्थानिकं मङ्गलमस्य चक्रुः ॥ २५ ॥

अपि स्वयं स्वात्मजनायकस्य तस्यैव तन्वन्ननुजीविधर्मम् ।
सुरेन्द्रशत्रुं तरसा जिगीषोः समीरणः पृष्ठचरः सुखोऽभूत् ॥ २६ ॥

छन्नान्तरिक्षक्षितिदिग्वितानां तामापतन्तीं पृतनां कपीनाम् ।
कुम्भंनिला(निकुंभिला)यामिकयातुधानाः पौलस्त्यपुत्राय समाशशंसुः ॥२७॥

तत्कालमुत्सृज्य कृतार्धहोमं स निर्ययौ रोषवशंवदात्मा ।
अग्रेसरं वानरवाहिनीनां विभीषणं चाथ हसन्नवादीत् ॥ २८ ॥

भ्रातुस्तनूजः प्रणमत्ययं त्वां दिष्ट्याऽद्य दृष्टोऽसि चिरात्पितृव्य ।
अस्मद्वधार्थं सह मानवेन भवान्कपीनां बलमानिनाय ॥ २९ ॥

धातुः कुलेऽभूद्दशकन्धरस्य वीराधिवीरस्य च सोदरोऽसि ।
मुक्त्वा तमत्रावसरे परेषां किं कारणं किङ्करतां करोषि ॥ ३० ॥

यस्य प्रसादाद्भवताऽग्रजस्य त्रैलोक्यसाम्राज्यमिहोपभुक्तम् ।
विमुञ्चतस्ते व्यसनोदये तं लज्जाभरेण स्फुटितं न वक्षः ॥ ३१ ॥

अस्मत्कुले प्रोद्यतवीरपुंसि क्षुद्रस्वभावो मलिनस्त्वमीदृक् ।
कल्पद्रुचिन्तामणिरत्नयोनौ जातः पयोधाविव कालकूटः ॥ ३२ ॥

स्वबन्धुवैरं रिपुभृत्यता च केनोपदिष्टस्तव धर्म एषः ।
अमी भविष्यन्त्यतिदुष्प्रवृत्तिनिवृत्तिशि(क्षा)गुरवः शरा मे ॥ ३३ ॥

स्फारप्रणादैर्मुखरीकृताशं करेण मौर्वीं मुहुरामृशन्तम् ।
साटोपमित्थं विरतं निगद्य तं प्रत्युवाचाथ विभीषणोऽपि ॥ ३४ ॥

वीरः पिता ते यदि मेघनाद छलेन किं रामवधूमनैषीत् ।
सुपार्श्वचञ्चूपुटगोचरस्थः कथं स वाणीं कृपणामभाणि ॥ ३५ ॥ णीत्

अहर्निशं तीर्णकुकर्मकोटिः स्फायन्महापातकपङ्कलिप्तः ।
पिताऽपि तावत् न विमुच्यते किमहो कथा का वद सोदरस्य ॥ ३६ ॥

बन्दीकृतानेकमहर्षिकन्यानिःश्वासधूमोर्मिनिलीनशक्तिः ।
निष्ठामसत्कर्मफलैः स यन्ता रामेषवस्सन्तु निमित्तमात्रम् ॥ ३७ ॥

तथाऽपराद्धं भुवनैः किमस्य तान्येव मथ्नाति निरन्तरं यत् ।
तद्रक्षणार्थं वसुधावतीर्णं न वेत्ति रामं पुरुषं पुराणम् ॥ ३८ ॥

उपासते यं सनकादयोऽपि पश्यन्ति यं चेतसि योगिनश्च ।
रे राक्षसानामुदितं क्षयाय परं पुमांसं तमवेहि रामम् ॥ ३९ ॥

तस्यानुजं लक्ष्मणमाजिभाजं म(न)त्वा भज त्वं यदि जीवितेच्छा ।
असंशयं नो रघुवंशजानां पतन्ति पादप्रणते पृषत्काः ॥ ४० ॥

नो चेदमुष्येषुपरम्पराभिर्विलूनमूर्द्धा भविता परासुः ।
त्वच्छोणितास्वादनितान्तलोला न कालजिह्वा सहते न(हि)कालम् ॥ ४१ ॥

सौमित्रिरिन्द्रारिमवेक्ष्य तद्गीर्वृद्धक्रुधं रोपितरोपचापम् ।
बिभीषणं तत्क्षणमादरेण स्वविग्रहेणान्तरयाञ्चकार ॥ ४२ ॥

प्रावर्ततान्योन्यविमुक्तबाणपरम्पराच्छन्नवियद्वितानः ।
चेतश्चमत्कारकरः सुराणां शक्रारिरामानुजयोर्महाजिः ॥ ४३ ॥ आजिः स्त्रियाम् । क्वचित्त्वनेकत्र पुंसि दृष्टः ।

उभौ महोदग्रबलाभिमानौ नभस्स्थले पश्यति सिद्धसङ्घे ।
अशेषशस्त्रास्त्रविशारदौ तावयुध्यतां लक्ष्मणमेघनादौ ॥ ४४ ॥

एकत्र धातुर्वरलब्धमोजः सद्वैष्णवं धाम परं परेऽस्मिन् ।
जयैषिणोरेकतमं तयोस्तन्नातर्कि देवैरधिकं बलीयः ॥ ४५ ॥

विदार्य रक्षोधिपसूनुवक्षो वज्राकरक्ष्माधरभूकठोरम् ।
ययौ प्रियं ख्यातुमिवोरगेभ्यो रसातलं लक्ष्मणकङ्कपत्रः ॥ ४६ ॥

भीत्या श्रितानि त्रिदशैः पुरा यैः कुलाद्रिसानून्यपि भेदितानि ।
तैर्मेघनादस्य शरैः कथञ्चित्तच्छोणितास्वादरसोऽनुभूतः ॥ ४७ ॥

परिस्रवच्छोणितपङ्कदिग्धे वक्षस्स्थले राक्षसराजसूनोः ।
आपुङ्खमग्नेष्वपि तच्छरेषु मनागपि क्षाममभून्न धैर्यम् ॥ ४८ ॥

प्रत्यङ्गमिन्द्रारिशरावलीभिः परिक्षतस्यापि च लक्ष्मणस्य ।
निर्भर्त्सितारखण्डशरच्छशाङ्का रेजे मुखश्रीर्मधुरैव तस्य ॥ ४९ ॥

अनेकरक्षःप्लवगप्रवीरैः प्रोत्साहिताभ्यां बलगर्विताभ्यां ।
इत्थं न संग्रामरसेन ताभ्यां त्रयं दिनानां गतमप्यवेदि ॥ ५० ॥

शश्राम जग्लौ विषसाद मम्लौ तयोर्महामत्सरयोर्न कोऽपि ।
विमुक्तशस्त्रप्रतिशस्त्रजालैः परस्परं प्राहरतां पुनस्तौ ॥ ५१ ॥

इयच्चिरं तिष्ठति विष्टपान्तकर्तापि रुद्रो न रणे पुरो मे ।
शस्त्राणि तान्येव स एव चाहमिहाद्य यातः कथमन्यथात्वम् ॥ ५२ ॥

धिक्कार्मुकं मे धिगिषूनिमांस्तान् यैः सह्यते सम्प्रहरन् मनुष्यः ।
इतीन्द्रजिच्चेतासि सम्प्रधार्य दिव्यास्त्रमोक्षेषु बभार बुद्धिम् ॥ ५३ ॥

ज्वलज्जगद्व्यापिशिखावलानामन्तर्गतो यस्य बभूव भानुः ।
स्फुरत्स्फुलिङ्गाकृतिरन्तरिक्षे सोऽमुञ्चदस्त्रं शिखिदैवतं तत् ॥ ५४ ॥

तदस्त्रजातस्य तदा समन्ताद्विस्तारिणीभिः शिखिनः शिखाभिः ।
ज्वलत्सु पुच्छेषु वलीमुखानां चकम्पिरे चेतसि सिद्धसङ्घाः ॥ ५५ ॥

सौमित्रिरभ्राजत पावकस्य ज्वालावलीभिः परिवेपिताङ्गः ।
करालनेत्रानलदीप्यमानो दाहक्षणे रुद्र इव स्मरस्य ॥ ५६ ॥

क्रतुक्रियारक्षणदक्षिणेन यत्कौशिकात्तेन मुनेरवाप्तम् ।
अमोघमस्त्रं मुमुचे तदस्त्रनिवारणं वारुणसंज्ञकं तत् ॥ ५७ ॥

तदा तदस्त्राहतवारिदालीकालीकृताशेषनभोविभागः ।
धारावलीभिः पयसां समन्तान्निर्वापयामास हुताशनं सः ॥ ५८ ॥

यद्यत्सुरेन्द्रारिरमुञ्चदस्त्रं तत्तन्निजास्त्रेण वृथा स चक्रे ।
सौमित्रिणा निष्फलसर्वयत्नो वैलक्ष्यविच्छायवपुर्व्यलोकि ॥ ५९ ॥

अत्रान्तरे विस्फुरदुग्रतेजा जयेति देवैरभिनन्द्यमानः ।
शरं पुरेव त्रिपुरे पुरारिः स सन्दधे सायकमर्द्धचन्द्रम् ॥ ६० ॥

तमग्रजं चेतसि सन्निधाप्य सीतापदाम्भोजरजःकणांश्च ।
आकर्णमाकृष्य शरासनान्तं वीरस्तमस्मिन्विससर्ज बाणम् ॥ ६१ ॥

स्फुरच्छिखो व्योमनि सिद्धसङ्घैर्दृष्टः क्षणं लक्ष्मणकङ्कपत्रः ।
अपातयत्तस्य शिरः क्षणाद्धात्तच्छृङ्गमद्रेरिव वज्रपातः ॥ ६२ ॥

प्रकम्पयन् संहननातिभारात्साम्भोनिधिद्वीपवनाद्रिमुर्वीम् ।
आनन्दशोकप्रभवाश्रुपूरैः पपात सार्द्धं स सुरासुराणाम् ॥ ६३ ॥

रणाङ्गणे क्ष्मातलतूलतल्पे तस्मिन् प्रसुप्ते क्षयकालरात्रौ ।
परःशता वानरदीपकेषु रक्षःप्रवीराः शलभत्वमापुः ॥ ६४ ॥

अथान्तरिक्षात्सुरलोकमुक्तप्रभूतमालाञ्चितकण्ठपीठः । पूजितः
सौमित्रिराजिश्रमवारिबिन्दुसन्दोहमुक्ताफलभूषिताङ्गः ॥ ६५ ॥

वल्गद्भिरुच्चैः प्रमदप्रकर्षाद्वलीमुखेन्द्रैरनुगम्यमानः ।
संस्तूयमानः सुरचारणौघैस्त्रपानमन्मौलिरियाय रामम् ॥ ६६ ॥ युग्मम् ॥

गाढप्रहारव्रणजर्जराङ्गमुद्धृत्य दूरादवनौ लुठन्तम् ।
तं वक्षसा स्नेहभराभिरामो रामोऽग्रहीद्बाष्पपरिप्लुताक्षः ॥ ६७ ॥

न चन्दनैर्नेन्दुकरैः प्रशान्तो न पद्मिनीपल्लवमारुतैर्यः ।
क्षणं स सीताविरहाग्नितापस्तदङ्गसङ्गेन शशाम तस्य ॥ ६८ ॥

जयावदानं युधि लक्ष्मणस्य तस्मै तदानन्दपराः शशंसुः ।
वलीमुखेन्द्रा जयनादभङ्गीसङ्गीतकैस्तत्र ववल्गुरन्ये ॥ ६९ ॥

कर्णाटवीदारुणदाववन्हिर्मनोविनोदार्णवकुम्भयोनिः ।
जयारवः कोऽपि कपीश्वराणामभूद्विसर्पन्दशकन्धरस्य ॥ ७० ॥

संशोषिते संयति मेघनादमहानदे लक्ष्मणभास्करेण ।
तदाश्रयैस्तत्पुरवासिलोकैरत्याकुलैर्मीनकुलायितं तैः ॥ ७१ ॥

प्रत्यङ्गणञ्च प्रतिमण्डपञ्च प्रत्यालयञ्च प्रतिचत्वरञ्च ।
विलुप्तसर्वान्यकथाविशेषं हाहेति सर्वत्र महाविरावम् ॥ ७२ ॥

प्रियप्रणाशोद्भवशोकदीर्णचक्षुःपुरन्ध्रीपृथुकार्तनादम् ।
विलापकोलाहलमूर्च्छनाभिरपास्तपाथोनिधिघोरघोषम् ॥ ७३ ॥

निश्वासधूमोर्मिभिरङ्गनानां शीर्णाङ्गणाशोकनवप्रवालम् ।
विलोचनेभ्यः स्रवदश्रुपूरैः प्लुतालयप्रान्तविहारभूमि ॥ ७४ ॥

प्रत्यालयं शान्तिनिशान्तशंसिभेरीमृदङ्गानकशङ्खनादम् ।
निवृत्तनानाविधनृत्तभिन्नमूर्च्छामिलन्मङ्गलमङ्गुगानम् ॥ ७५ ॥

उत्तालशैवालजटालवापीजलस्खलद्बालमरालमालम् ।
लीलावतीलालनलाभलोभविनिश्वसत्केलिकुरङ्गशावम् ॥ ७६ ॥

अनल्पतूर्यत्रयनादभङ्गीसङ्गीतकैरुज्झितरङ्गशालम् ।
दिनावसाने कुसुमापणान्तर्विमुक्तसञ्चारविलासिलोकम् ॥ ७७ ॥

वैधव्यविध्वस्तवधूविलासं विमुक्तवाद्यव्रतवेणुवीणम् ।
वियुक्तवैतालिकवर्गदाहं (?) विस्तीर्णविश्वव्यसनावतारम् ॥ ७८ ॥

सर्वत्र वक्रान्तरचञ्चदग्निज्वालावलीघोरशिवाविरावम् ।
सर्वत्र मत्तश्वरणानुषङ्गिकङ्कालकीर्णाखिलराजमार्गम् (?) ॥ ७९ ॥

निरञ्जनाक्षिस्रवदश्रुविन्दुमुक्ताफलालिङ्गिघनस्तनीभिः ।
परिस्फुरत्कङ्कणराजिरिक्तकराग्रसुप्ताननपङ्कजाभिः ॥ ८० ॥

विष्वग्विलोलालकवल्लरीभिर्धृतैकलावण्यविभूषणाभिः ।
अगाधदुःखाम्बुधिमध्यमग्नमनोभिरध्यासितमङ्गनाभिः ॥ ८१ ॥

उत्पातवातान्वितवानघात्तं(?)सञ्जातवातायनजालपातम् ।
कटुक्वणत्काककदम्बकेन समन्ततः संश्रितसौधशृङ्गम् ॥ ८२ ॥

तत्पूर्वजाताद्भुतवैशसेन लङ्कापुरं संश्रितशोकलोकम् ।
अगण्यकारुण्यरसाम्बुराशौ निमज्जयामास न कस्य चेतः ॥ ८३ ॥ कुलकम् ॥

इत्थं कथञ्चिद्विनिरुद्धवाष्पपूरैर्जनानां पुरसुन्दरीणां (?) ।
तदा परं शुश्रुविरे समन्तात् कारुण्यगर्भाणि वचांसि तत्र ॥ ८४ ॥

भ्राता मदीयो निहतः सुतो मे सहे न चाहं प्रियशोकदाहम् ।
ममास्ति शेषः शिशुरेक एव हताऽस्मि हा हाऽस्तमितं कुलं मे ॥ ८५ ॥

हा तात हा बान्धव हा तनूज प्राणेश हा हा बत बन्धुवर्गाः ।
किं कारणं प्रेमपरा परास्ता समेत्य सर्वैरहमेककालम् ॥ ८६ ॥

यद्वीक्षणक्षोभकरीक्षमाणां मामक्षिणोदक्षिनिमेषमुद्रा ।
प्रियस्य तस्यापि चिरप्रवासे जीवामि पापा प्रियजीविताऽस्मि ॥ ८७ ॥

रामः श्रुतो मन्मथमुग्धमूर्तिर्दुष्टासि दौर्भाग्यनिकेतने त्वम् ।
हा तेन ते शूर्पणखे मनोभूकेलीरसेच्छा कथमाविरासीत् ॥ ८८ ॥

गर्भस्थितैवासि न किं विलीना जाता कथं चेदथ जीविता किम् ।
येनाधुना रावणराजधान्याः संवर्तहेतुर्भवती बभूव ॥ ८९ ॥

कृतापराधाऽपि रघूद्वहेन न तेन कारुण्यवता हताऽसि ।
अशेषलङ्कापुरघस्मरेण हुताशनेनापि कथं न दग्धा ॥ ९० ॥

एतस्य जाता रघुनन्दनेन मूलं महावैरमहीरुहस्य ।
अक्षादिरक्षःकुलकालरात्रेर्दोषैकगेहं भवती प्रदोषः ॥ ९१ ॥

रौद्रं शिशुत्वेऽपि बभञ्ज चापं यो हैहयारिं तरसा जिगाय ।
एकः खरादीन् शतशो जघान पौलस्त्य किं ते वितथे न (न तथापि) वैरम्(?) ९२

त्वयाऽनुभूतं बलमिन्द्रसूनोः कर्पेन तस्मिन्निहते भवांश्चेत् ।
रामेण वैराद्विरराम कस्मादम्भोधिबन्धे न महाद्भुतेऽपि ॥ ९३ ॥

अखर्वगर्वादवमानिताश्चेत्त्वया पुलस्त्यप्रमुखा ह्यवाचः ।
मज्जन्तमज्ञानमहाम्बुराशौ निजं निजेनैव न किं निषिद्धः ॥ ९४ ॥

अद्यापि संविन्मयलोचनेन सम्यङ्निरीक्ष्यान्तमुपैहि रामम् ।
प्रसीद शेषानपि पाहि बन्धून् ममात्मजांश्चापि विभूषणानि ॥ ९५ ॥

अत्यर्थं प्रादुरासन् प्रसभमरतयो नैकरक्षःक्षयाद्या-
स्तेनात्यर्थैर्विनोदैर्वितथविहसितैर्गोपयाञ्चक्रिरे ताः ।
तस्याशेषप्रणाशप्रगुणमलिनताधूमराजिः समन्ता-
दिन्द्रारातिप्रणाशप्रभवमकथयत्किंतु शोकाग्निमन्तः ॥ ९६ ॥

इत्यभिनन्दकृतौ रामचरिते महाकाव्ये एकोनचत्वारिंशः सर्गः ।

---

न मधुरं मधु फल्गु च फाणितं रसपरा न सिताऽपि सुधा मुधा ।
अधर एव नवप्रमदाधरो लसति भीमकवेः कवितारसे ॥



# चत्वारिंशः सर्गः ।

शक्रवैरिणि गते शलभत्वं लक्ष्मणौजसि महोदरवीरः ।
आदरादभिदधे दशकण्ठे सङ्गरोत्कलिकयाऽऽकुलितं स्वम् ॥ १ ॥

शक्तिपट्टिशगदाङ्कुशहस्तैः स्यन्दनाश्वमयवारणयानैः ।
सोऽनुगैस्सह निदेशमवाप्य स्वामिनः समरभूमिमगच्छत् ॥ २ ॥

उद्धतोद्धुरधुरैर्हरिवीरैरङ्गदद्विविदमैन्दनलाद्यैः ।
तत्र मौलरजनीचरयोधाः सङ्गिसङ्गररसैः समगच्छन् ॥ ३ ॥

मेघनीलवपुरायतदन्तो मत्तवारण इव प्रतिगर्जन् ।
सोऽपि पर्वतशयेन हरीणां नायकेन रुरुधे रुधिराशी ॥ ४ ॥

वञ्चनाय रणशृङ्खलचारीरीतिभिस्तदुभयोरजनिष्ट ।
बाहुयुद्धमतिदारुणमुच्चैः शस्त्रशैलशरचापगतेन ॥ ५ ॥

निष्ठुरं हृदि निपात्य स मुष्टिं चेतनां कपिपतेरपनिन्ये ।
पिष्टवांश्च विधिलम्भितसंज्ञो यातुधानमुरसा तरसा सः ॥ ६ ॥

घ्राणकर्णनयनाननरन्ध्रैरुद्वमन् रुधिरमाप स नाशम् ।
पारिजातकुसुमानि किरद्भिस्तुष्टुवे कपिवरः सुरसार्थैः ॥ ७ ॥

तद्विनाशमवगम्य समीकाद्भग्नराक्षसमुखैर्दशकण्ठः ।
तत्प्रियत्वरिपुमत्सरभावाद्दुःखरोषपरमावधिमाप ॥ ८ ॥

निर्ययावथ विमृश्य युयुत्साकेलिकौतुकसमुत्सुकबाहुः ।
सोऽधिरुह्य रथमुत्तरलङ्कागोपुरेण सह सर्वचमूभिः ॥ ९ ॥

उत्सृजन्तमभितः शरजालं रावणं भ्रुकुटिभीषणभालम् ।
अभ्यवेक्षितुमहो युधि नालं वानरास्तमभवन्निव कालम् ॥ १० ॥

उत्कटभ्रुकुटिकोटिविटङ्कस्पष्टसङ्कटललाटतटान्तः ।
उच्चलन् विकटनिष्ठुरमुष्टीन् कोटिशः कपिभटान् स्म पिनष्टि ॥ ११ ॥

लीलया नलिननालदलानां निर्ममन्थ परितः प्लवगेन्द्रान् ।
सञ्चरन् समरभूमिसरस्यामुन्मदः स गजराज इवोच्चैः ॥ १२ ॥

काँश्चिदक्षिपदपान्निधिनीरे कानपि क्षितितलेन ममर्द ।
निष्पिपेष परिरभ्य च कांश्चिद्वक्षसा स तरसा हरिवीरान् ॥ १३ ॥

पार्श्वयोर्न पुरतोऽथ न पश्चात्स्थातुमक्षमतया युधि तस्य ।
दूरगाः श्रुतधनुर्गुणनादैः सेदुरुग्रमहसोऽपि कपीन्द्राः ॥ १४ ॥

तेन रोषरभसेन जिघांसावेशवश्यहृदयेन मुहूर्तात् ।
सङ्गराजिरमकारि विनाशत्रासविद्रुतहरीन्द्रदरिद्रम् ॥ १५ ॥

विद्रवद्बलमवेक्ष्य कपीनां तन्निपेद्धुमनुयोज्य तदीशम् ।
द्यां दिशश्च पिदधन् शरजालैर्लक्ष्मणो रणरसेन तमाप ॥ १६ ॥ २६२°

एष शक्रजयिनो युधि हन्ता निश्चितं मम रिपोरसवश्च ।
इत्यवेत्य स विरिञ्चिवितीर्णां लक्ष्मणस्य हृदि शक्तिममुञ्चत् ॥ १७ ॥

शक्तिभिन्नहृदयो निपपात क्ष्मातले रघुपतेरनुजन्मा ।
स्वःसदां गगनवर्त्मनि हाहेत्युच्चचार करुणध्वनिरुच्चैः ॥ १८ ॥

शक्तिभिर्विटपिभिर्गिरिकूटैस्तं निजघ्नुरभितो हरिवीराः ।
तस्य वज्रवपुषो न पुनस्तै रोममात्रमपि भेदमवाप ॥ १९ ॥

राघवोऽनुजनिपातसमुत्थं शोकवेगमविचिन्त्य कथञ्चित् ।
दुर्दिनं किमपि वैरिणि वीरो बाणसंहतिमयं विततान ॥ २० ॥

शत्रुसान्द्रशरसंहतिसिन्धुं तं मनागपि तरीतुमशक्तः ।
अप्यनल्परणखेलनखिन्नः स्वां पुरीं प्रतिजगाम दशास्यः ॥ २१ ॥

नेतुमौषधवरं हिमशैलप्रस्थसंस्थमथ वीक्ष्य तमित्थम् ।
मारुतिः श्वशुरबोधितसौरिप्रेरितो दिशमगच्छदुदीचीम् ॥ २२ ॥

यच्छयानमनुजं रणभूमौ वीक्ष्य तस्य हृदयं न विदद्रे ।
तर्कयामि तदभूत्परमेकं कारणं परमपूरुषधाम ॥ २३ ॥

तं निधाय गतचेतनमङ्के भ्रातरं रघुपतिः क्षितिपीठात् ।
अश्रुपूरपरिपूरितनेत्रो भूरि शोकविकलो विललाप ॥ २४ ॥

वत्स यच्छ गुरुवत्सल वाचं त्वं ममाशयशयार्थविधाता ।
अद्य ते मयि पराङ्मुखवृत्तिः कथ्यतां कथमभूस्त्वमकस्मात् (?) ॥ २५ ॥

वीक्ष्यसे वदसि किं न पुरस्तादार्तमग्रजममुं विलपन्तम् ।
मोहमीलितविलोचनपद्मं मञ्जुलं वदनमुन्नमयैतत् ॥ २६ ॥

अङ्कगस्तव कृतो वनयाते बाष्पगद्गदगिराऽस्मि जनन्या ।
वत्स मां परिसरेऽरिनगर्या हा विहाय कथमद्य गतोऽसि ॥ २७ ॥

तादृशः सहचरस्तव राम प्रोज्झितः स भवता कथमेकः ।
आर्ययेति करुणं वद पृष्टः का भविष्यति मुखे मम वाणी ॥ २८ ॥

जीवितं मदनुजस्य गृहीत्वा नष्टवान्प्रसभमन्तकचौरः ।
आदिशाशु रविपुत्र हरींस्तन्निग्रहाय च तदानयनाय ॥ २९ ॥

अङ्गद प्रहिणु वानरवीरान् यान्त्वमी स्वविषयेषु यथेच्छम् ।
जीवितेऽपि हृदयं निरपेक्षं किं जयेन जनकात्मजया किम् ॥ ३० ॥

आततायिनमरातिमहत्वा नाभिषिच्य च विभीषणमेनम् ।
सत्यसन्ध समरे वद कस्मादादृताऽद्य भवता चिरनिद्रा ॥ ३१ ॥

त्वद्भुजौ मनसिकृत्य मयाऽसावादृतोऽतिविषमो रणभारः ।
एतयोस्समुचिता चिरनिद्रा साम्प्रतं किमसमाप्य विपक्षम् ॥ ३२ ॥

मुक्तकण्ठमतिशोकरयार्तो धैर्यमौज्झ्य (?) विलपन् रघुनाथः ।
सौषधीकगिरिशृङ्गकराग्रं वीरमैक्षत पुरो हनुमन्तम् ॥ ३३ ॥

शक्तिशल्यमपनीय सुषेणस्तत्समाहृतवरौषधियोगात् ।
लक्ष्मणस्य च सचेतनभावं स्वप्नवृत्तिसममाशु चकार ॥ ३४ ॥

तत्क्षणं वनसदां जयघोषः कोऽपि स प्रतिदिशं विजजृम्भे ।
येन यातुपतिर्विंशतिनेत्री चिन्तयाऽजनि विनिश्चलतारा ॥ ३५ ॥

क्रुद्धकेसरिकठोरकराग्रक्रान्तकुञ्जर इवोज्झितदर्पः ।
निःश्वसन्नतितरां स जुघूर्णे तार्क्ष्यपक्षतिभयादिव सर्पः ॥ ३६ ॥

केलिवेश्मसु विनोदयुतेषु प्राप राक्षसपतिर्न विनोदम् ।
वीरमेकमपि राममनेकं पश्यति स्म पुरतः प्रहरन्तम् ॥ ३७ ॥

मा मुधा क्षिप मृगाक्षि कटाक्षान् स्निग्धमुग्धहसितैरलमेतैः ।
विश्वविश्वमपि पश्यति चित्तं रामपत्रिमयमेव ममाद्य ॥ ३८ ॥

सन्तु सुन्दरि मनोभवभावाः किं वृथैव विदधासि विलासान् ।
क्वापि निर्वृतिमुपैति न चेतो रामचापचकितं चपलाक्षि ॥ ३९ ॥

पुष्पकं विविधविस्तृतपुष्पं नैव केलिसदनञ्च सुखाय ।
भोगिभोगसदृशा मम भोगा राममेव पुरतोऽद्य निरीक्षे ॥ ४० ॥

न्यक्कृतानि च वचांसि गुरूणां पुण्यधीर्यदनुजोऽपि निरस्तः ।
यज्जगन्ति मथितान्यभिमानात्तत्फलं प्रियतमेऽनुभवामि ॥ ४१ ॥

भ्रातृमित्रसुतबन्धुविनाशादप्यदस्तुदति मामतिमात्रम् ।
सोऽनुजो यदनिशं हितवादी मानितो नहि मया मयपुत्रि ॥ ४२ ॥

हा विभीषण न मे कथमेकं सोढवानसि गुरोरविवेकम् ।
यातु यातु रसना शतधा सा त्वं यया कटुवचोभिरपास्तः ॥ ४३ ॥

रामरोषविधुरः शरणार्थं यामि तस्य यदि विश्रवसोऽङ्कम् ।
साम्प्रतं तदवधीरितपूर्वो लज्जयिष्यति स मामुपहासैः ॥ ४४ ॥

क्व व्रजामि मम धीरतिमूढा शाधि सुन्दरि करोमि किमद्य ।
कोऽपि मां न परिरक्षितुमीशस्तं विहाय गिरिजापतिमेकम् ॥ ४५ ॥

किं ब्रवीमि कृपणोचितमेतद्रावणोऽस्मि विजिताखिलविश्वः ।
साऽस्ति होममतिरीश्वरदत्ता येन मे करगतैव जयश्रीः ॥ ४६ ॥

इत्युदीर्य महिषीं कुशपाणिः स्नानपूतवपुरीश्वरमन्त्रैः ।
संजुहाव विधिवद्विजयार्थी यातुधानपतिरग्निषु हव्यम् ॥ ४७ ॥

चारुबोधितविभीषणवाक्यैः( क्यः )तत्क्षणं रविसुतोऽङ्गदमुख्यान् ।
तस्य होमविधिनाशनहेतोरादिदेश दश वानरवीरान् ॥ ४८ ॥

ते मिथः कथितदोरभिमानास्तुङ्गशृङ्गमपि दुर्गमतीत्य ।
होमधामनि गता यमिनं तं वीक्ष्य विस्मयमनल्पमवापुः ॥ ४९ ॥

तन्नितान्तपरुषाद्भुतवाक्यैर्नोदतिष्ठदपहाय स होमम् ।
प्राकृतप्लवगबालकलीला तेन तेषु विदधे त्व(भि)मानात् ॥ ५० ॥

तत्र ते मयसुतामथ नीत्वा गाढमाचकृषुरुल्लिलिखुश्च ।
तामवेक्ष्य कृपणं विलपन्तीमुज्झिताहुतिविधिः स उदस्थात् ॥ ५१ ॥

पात्रपङ्क्तिमवभिद्य च पिष्ट्वा वेदिकाञ्च शिखिनं शमयित्वा ।
रावणस्य रुषितस्य समक्षं ते यथागतमगुः क्षणमात्रात् ॥ ५२ ॥

साम्प्रतं प्रमथशङ्करमूर्त्तेरर्हणां रणरसेन विधास्ये ।
चन्द्रहासदलितैर्गलमालाद्रामलक्ष्मणकपीन्द्रशिरोब्जैः ॥ ५३ ॥

इत्थमादरधृतोद्धतसन्धो निर्जगाम च रणाय मदान्धः ।
श्वेतगृध्रशतपक्षनिवातप्रोद्धुतध्वजपटेन रथेन ॥ ५४ ॥

ध्वानयन्दशशरासनमौर्वीनिस्वनैर्दशदिशावदनानि ।
अभ्यगाद्दशरथात्मजमाजिप्रीतिवर्द्धितरसो दशकण्ठः ॥ ५५ ॥

मातलिर्दशरथात्मजहेतोरायुधानि विविधानि च वर्म ।
आनिनाय रथमिन्द्रनिदेशात् तारहारिमणिरत्नवरूथम् ॥ ५६ ॥

स्यन्दने दशमुखः पदचारी राम इत्यनुचितं हृदि मत्वा ।
अम्बरे रणनिरीक्षणरागादागतेन हरिणा न विषेहे ॥ ५७ ॥

भानुनन्दनविभीषणवाचा स्वीचकार कथमप्युपरोधात् ।
प्राभृतं मघवतस्तदुपेतं रामनामपिहितो दनुजारिः ॥ ५८ ॥

वज्रवर्म परिधाय तदेष प्रस्फुरत्परमधामनिधानम् ।
भानुमानुदयशैलमिवोच्चैराररोह तमथो रथमैन्द्रम् ॥ ५९ ॥

स्यन्दनेन जविना गरुडेन प्रोह्यमान इव काञ्चनभासा ।
तेन घोररिपुणा रणरागी संययौ स भगवान्मनुजाङ्गः ॥ ६० ॥

वाडवो भृगुपतिर्भवता यो निर्जितः सुभट तावदकाण्डे ।
साधु रावण कथं वद सत्यं तादृगेव सच हैहयहन्ता ॥ ६१ ॥

अप्यकम्पयमुमासहितं तं पर्वतोद्धरणपर्वणि शर्वम् ।
विश्व( पश्य )विश्वजयिनोऽपि तदाद्यं नाम रावण इति प्रथितं ते ॥ ६२ ॥

राम यो मम रणेऽभिमुखोऽभूदेक एव बलवान् स जटायुः ।
सोऽपि किं न दशकण्ठ सुपार्श्वो योऽर्द्धवर्त्मनि ततो मिलितस्ते ॥ ६३ ॥

यद्बलेन भवतो विजयेच्छा तेतु काननसदः पशवो मे ।
केऽपि केऽपि पुनरेष सवार्यां ( माना ) वालिनस्तदनुजात्मजमुख्याः ॥६४॥

उत्तरोत्तरपदै रघुनाथस्येत्थमुत्तरवशाद्दशकण्ठः।
म्लायमानवदनावलिलक्ष्यो गूढमर्महतिदून इवाभूत्॥ ६५॥

भूय एव स विहस्य विशेषात् रावणेन परुषाक्षरमूचे।
डिम्भमेवमनुजाधमवस्त्रामन्त्रशाद्वचनपाटनमेवम् (?)॥ ६६॥

मुग्धमन्दमुख सम्प्रहरन्तः सायकास्त्वयि घृणां दधते नः।
केदमक्षमतमं भवदङ्गं क्वामरेन्द्रकरिकुम्भभिदोऽमी॥ ६७॥

बालचापलतया प्रतिकूलं क्षान्तमक्षमतया तव सर्वम्।
गच्छ मानव न जीवसि तिष्ठन् किं हतेन बत दैवहतेन॥ ६८॥

कुम्भकर्णमवधीश्चिरनिद्राघूर्णमानमलसेन्द्रियमाजौ।
गर्वमुद्वहसि किं विधिदोषः केवलं स खलु नो भवदोजः॥ ६९॥

पौरुषं तदिह किं यदि बद्धो भूरिभिः कपिभिरश्मभिरब्धिः।
संहतानि हि तृणान्यपि सान्द्राण्यद्रिभेदि सलिलं स्खलयन्ति॥ ७०॥

नान्तको न वरुणो न कुबेरो न त्रिविष्टपसदामपि भर्ता।
आभिमुख्यमभजन्मम युद्धे राम कस्त्वमसि मानवमात्रम्॥ ७१॥

नायकं वनसदां रणतीर्थे सानुजं च विनिहत्य भवन्तम्।
अद्य सर्वमशिताऽस्मि परेतांस्तर्पयामि रुधिराञ्जलिदानैः॥ ७२॥

सन्तु शूलपरिघासिभुशुण्डीपट्टिशप्रहतयस्तव हत्यै।
एकमेव मम चापविमुक्तं सायकं परममुं विषहस्व॥ ७३॥

त्वं निशाचर विकत्थनमेतत् किङ्करो (ङ्कृतं) युधि निदर्शय कर्म।
इत्युदीरितवति स्मयमाने राघवे स विशिखं विससर्ज॥ ७४॥

तं निकृत्य शरमम्बरमार्गे मूर्तदर्पमिव तस्य किरीटम्।
पाटयन्नविशदाशु धरित्रीं राघवेषुरसमग्रमृगाङ्कः॥ ७५॥

आश्रुतिश्रयितकार्मुकमौर्वीनादसंमिलितसिंहनिनादैः।
भेदयन्निव दिशः स समन्तादावृणोद्रघुपतिं शरजालैः॥ ७६॥

मुक्तमार्गणमरीचिसमूहैस्तामरातिशरसंहतिमुच्चैः ।
वारिवाहपटलीमिव भित्वा विस्फुरन् रविरिवैक्ष्यत रामः ॥ ७७ ॥

नोपमानमथ नाप्युपमेयं भूतभाविभवदाजिभिराप ।
यस्य यत्तदुभयं स्वयमासीत्कृत्ययोरनिजमन्युजजन्यम् (?) ॥ ७८ ॥

विस्फुरन्वियति तद्रथचक्रोत्खातभूतलभवो युधि रेणुः ।
तत्परस्परशिलीमुखलोहच्छेदजातशिखिधूम इवासीत् ॥ ७९ ॥

निर्विकल्पममलं परमेकं ब्रह्म मानवतनुस्थगितं यत् ।
तन्महःप्रसरतो युधि धैर्यं रक्षसः किमपि पश्यत तस्य ॥ ८० ॥

राघवस्य शरधोरणिधारारुद्धसर्वनयनप्रसरेण ।
केवलं स्वशरसंहतिरुग्रज्यानिनादमनु तेन वितेने ॥ ८१ ॥

एष विंशतिभुजस्य शरान्मे सम्प्रतीच्छति शरैर्द्विभुजोऽपि ।
सोऽतिविस्मयमियाय न यस्मात् स्वाधिकं कमपि वेत्ति न मानी ॥ ८२ ॥

तत्तनुच्छदपरिस्खलनोत्थं वीक्ष्य पावकमुदर्चिषमाजौ ।
व्योम्नि सिद्धपरिषद्दहनास्त्रभ्रान्तिमाप दशकण्ठशरेषु ॥ ८३ ॥

सर्वतः कृततनुच्छदभेदैर्भेदितेऽपि हृदि राघवबाणैः ।
मौलिरत्नमपि(भि)मानधनानां नो मनागपि ययौ स विकारम् ॥ ८४ ॥

तौ परस्परशरौघनिपातप्रस्फुरद्रुधिरशोणशरीरौ ।
प्रापतुः समरकाननभूमौ स्मेरशाल्मलिपलाशविलासम् ॥ ८५ ॥

भूरिभीतिजननं भुवनानां दारुणं प्रबलमौरगमस्त्रम् ।
रावणेन मुमुचेऽथ जयश्रीवाञ्छया रघुपतौ रुषितेन ॥ ८६ ॥

उत्फणैश्च विषमैर्विषमास्यैरुद्वमद्भिरुरगैरुरुभोगैः ।
व्यानशे जगदपि क्षयकालक्षुब्धवारिनिधिवीचिचयाभैः ॥ ८७ ॥

मथ्यमानमहिभिः कपिसैन्यं वीक्ष्य चात्मनि निबन्धनमुग्रम् ।
स द्रुतं तदपनोदनहेतोर्गारुडं ललवदस्त्रममुञ्चत ॥ ८८ ॥

उच्चलत्कनकशैलतटाभाः पक्षतिक्षुभितदिग्गजराजाः ।
चञ्चुकोटिदलिताभ्रनिकाया दारुणा ददृशिरे दिवि तार्क्ष्याः ॥ ८९ ॥

तानवेक्ष्य विलसद्वपुराभापिञ्जरीकृतसमस्तदिगन्तान् ।
तानि भीतितरलानि समन्तादद्रवन् सपदि नागकुलानि ॥ ९० ॥

आददेऽथ रजनीचरभर्ता यत्किल ज्वलनदैवतमस्त्रम् ।
वारुणेन विशिखेन तदानीमापतत्तदपि शान्तिमनैषीत् ॥ ९१ ॥

अक्षिपत्क्षयदिवाकरदीप्तां शक्तिमस्तपपतिर्निशितां याम् ।
अन्तरा क्षुरमुखेन शरेण व्याच्छिनत्सपदि तामपि रामः ॥ ९२ ॥

संरुष्टस्त्रिनयनदत्तमुग्रसारं सांवर्तातुदशशतकोटिकान्ति (?) ।
पौलस्त्यस्त्वमलममोघपातमुच्चैः शस्त्रास्त्रव्ययरुषितोऽग्रहीत्त्रिशूलम् ॥ ९३ ॥

स्फूर्जच्छौर्यातिरिक्तोच्छ्वसितसमुदितस्फाररोमाञ्चगात्रः
त्रुट्यत्सन्धानसन्धिः समररसवशावेशविभ्रान्तनेत्रः ।
क्रूरः क्रोधाद्ब्रुवाणो दशभिरपि मुखैस्तिष्ठ तिष्ठेति रामं
यानात्सोऽभ्युत्पपात द्रुतममरजनक्षोभकृच्छूलहस्तः ॥ ९४ ॥

विश्वत्रयव्यसनवारणकारणाय स्वस्त्यस्तु ते दशरथात्मज नस्तपोभिः ।
शूलस्य तस्य बलमद्भुतमीक्षमाणा दिव्यास्तदा मुनिगणाः सममित्यवोचन् ॥ ९५ ॥

अद्यानिष्टं भवति जगतामाः किमेतत् किमेतत्
पापस्यैतद्विफलय विधे प्रोद्धृतं शूलमुग्रम् ।
यावद्गीः स्यादिति दिविषदां राघवस्तावदाशु
ब्रह्मास्त्रेण त्रिभुवनरिपोराच्छिनच्छीर्षराजिम् ॥ ९६ ॥

उद्भूतधूलिपटलैः परिधूसराणि संसक्तसङ्गररसोद्धुरितालकानि (?) ।
स्पर्द्धावशादिव परस्परमेककालं पेतुः शिरांसि विशदानि दशाननस्य ॥ ९७ ॥

क्षणं भ्रमित्वा स्खलदाकुलक्रमं सपृष्ठलास्पालितपिच्छलच्छवि (?) ।
पपात निर्घातसहस्रनिस्वनप्रकम्पितोर्वीवलयश्च तद्वपुः ॥ ९८ ॥

अलभत गतभारा भूमिरुच्छ्वासमुच्चैः रविरपि निजवंशस्योदयात्संदिदीपे ।
प्रमदमधिकमीयुर्नाकिनो वीतशङ्का धृतवति जयलक्ष्मीमुद्यते रामनाम्नि ॥ ९९ ॥

जगुरथ सुरमार्गे चारु गन्धर्ववर्या ननृतुरमरनार्यो दिव्यतूर्याणि नेदुः ।
दशमुखरिपुमौलौ लोलरोलम्बमाला सुरवरकरमुक्ता पुष्पवृष्टिः पपात ॥ १०० ॥

चिन्ताकुले रघुपतौ स्फुटमुल्लसन्ती गीर्देवता भगवती स्फुटमन्तरिक्षात् ।
क्रव्यादमन्दिरचिरोषितराजपुत्रीस्वीकारसंशयविकारमपाचकार ॥ १०१ ॥

नीतं विजित्य धनदं दशकन्धरेण हत्वा परं रघुपतिः स्वयमग्रहीद्यत् ।
संशुद्धया हुतभुजि प्रियया विमानं तच्चानुजेन सह पुष्पकमारुरोह ॥ १०२ ॥

प्रह्वं प्रहित्य सरथं दिवि शक्रदूतं सार्द्धं ससैन्यकपिराजविभीषणाभ्याम् ।
सिद्धाङ्गनाभिरभिगीतजयावदानो देवो जगाम नगरीं निजराजधानीम् ॥१०३॥

रामस्यासीद्वसिष्ठप्रमुखमुनिवरैरेत्य सम्यक्प्रणीतः
सुग्रीवादिष्टहृष्टप्लवगशतसमानीततीर्थोदकेन ।
मूर्च्छन्माङ्गल्यतूर्यध्वनिमिलितमनोहारिगेयप्रपञ्च–
स्फीतो राज्याभिषेकः त्रिभुवनजनतानन्दकृत्सुन्दरेऽन्हि ॥ १०४ ॥

इति श्रीमदभिनन्दकाव्ये कायस्थज्ञातिकुलतिलकेन महंश्रीदेवपालतनयेन
महंश्रीभीमकृतौ सर्गचतुष्टय्यां चत्वारिंशत्तमः सर्गः ॥



# रामचरितान्तर्गतपद्याना-मकाराद्यनुक्रमणिका ।

५३

# परिशिष्टद्वयगतपद्यानामकाराद्यनुक्रमणिका।

# GAEKWAD'S ORIENTAL SERIES.

Critical editions of unprinted and original works of Oriental Literature, edited by competent scholars, and published by the Oriental Institute, Baroda.

## I. BOOKS PUBLISHED.

Rs. A.

1. **Kāvyamīmāṁsā**: a work on poetics, by Rājaśekhara (880–920 A.D.): edited by C. D. Dalal, and R. Anantakrishna Sastry, 1916. Re-issue. 1924 .. .. 2-4

   *This book has been set as a text-book by the Bombay and Patna Universities.*

2. **Naranārāyaṇānanda**: a poem on the Paurāṇic story of Arjuna and Kṛṣṇa's rambles on Mount Girnar, by Vastupāla, Minister of King Vīradhavala of Dholka, composed between Samvat 1277 and 1287, *i.e.*, A.D. 1221 and 1231: edited by C. D. Dalal and R. Anantakrishna Sastry, 1916 .. .. .. *out of print.*

3. **Tarkasaṅgraha**: a work on Philosophy (refutation of Vaiśeṣika theory of atomic creation) by Ānandajñāna or Ānandagiri, the famous commentators on S'aṅkarācārya's Bhāṣyas, who flourished in the latter half of the 13th century: edited by T. M. Tripathi, 1917 .. 2-0

4. **Pārthaparākrama**: a drama describing Arjuna's recovery of the cows of King Virāṭa, by Prahlādanadeva, the founder of Pālanpur and the younger brother of the Paramāra king of Chandrāvatī (a state in Mārwār), and a feudatory of the kings of Guzerat, who was a Yuvarāja in Samvat 1220 or A.D. 1164: edited by C. D. Dalal, 1917 .. .. .. .. 0-6

5. **Rāṣṭrauḍhavaṁśa**: an historical poem (Mahākāvya) describing the history of the Bāgulas of Mayūragiri, from Rāṣṭrauḍha, king of Kanauj and the originator of the dynasty, to Nārāyana Shāh of Mayūragiri by Rudra Kavi, composed in S'aka 1518 or A.D. 1596: edited by Pandit Embar Krishnamacharya with Introduction by C. D. Dalal, 1917 .. .. .. 1-12

6. **Liṅgānuśāsana**: on Grammar, by Vāmana, who lived between the last quarter of the 8th century and the first quarter of the 9th century: edited by C. D. Dalal, 1918 .. .. .. .. 0-8

7. **Vasantavilāsa**: an historical poem (Mahākāvya) describing the life of Vastupāla and the history of

Rs. A.

Guzerat, by Bālachandrasūri (from Modheraka or Modhera in Kaḍi Prant, Baroda State), contemporary of Vastupāla, composed after his death for his son in Samvat 1296 (A.D. 1240): edited by C. D. Dalal, 1917 1–8

8. **Rūpakaṣaṭkam:** six dramas by Vatsarāja, minister of Paramardideva of Kalinjara, who lived between the 2nd half of the 12th and the 1st quarter of 13th century: edited by C. D. Dalal, 1918 .. .. 2–4

9. **Mohaparājaya:** an allegorical drama describing the overcoming of King Moha (Temptation), or the conversion of Kumārapāla, the Chalukya King of Guzerat, to Jainism, by Yaśaḥpāla, an officer of King Ajayadeva, son of Kumārapāla, who reigned from A.D. 1229 to 1232: edited by Muni Chaturvijayaji with Introduction and Appendices by C. D. Dalal, 1918 .. 2–0

10. **Hammīramadamardana:** a drama glorifying the two brothers Vastupāla and Tejaḥpāla and their King Vīradhavala of Dholka, by Jayasiṁhasūri, pupil of Vīrasūri, and an Ācārya of the temple of Munisuvrata at Broach, composed between Samvat 1276 and 1286 or A.D. 1220 and 1239: edited by C. D. Dalal, 1920. 2–0

11. **Udayasundarīkathā:** a romance (Campū, in prose and poetry) by Soḍḍhala, a contemporary of and patronised by the three brothers Chchittarāja, Nāgārjuna, and Mummuṇirāja, successive rulers of Konkan, composed between A.D. 1026 and 1050: edited by C. D. Dalal and Pandit Embar Krishnamacharya, 1920 .. 2–4

12. **Mahāvidyāviḍambana:** a work on Nyāya Philosophy, by Bhaṭṭa Vādīndra who lived about A.D. 1210 to 1274: edited by M. R. Telang, 1920 .. .. 2–8

13. **Prācīnagurjarakāvysaṅgraha:** a collection of old Guzerati poems dating from 12th to 15th centuries A.D.: edited by C. D. Dalal, 1920 .. .. 2–4

14. **Kumārapālapratibodha:** a biographical work in Prākṛta, by Somaprabhāchārya, composed in Saṁvat 1241 or A.D. 1195: edited by Muni Jinavijayaji, 1920 7–8

15 **Gaṇakārikā:** a work on Philosophy (Pāśupata School) by Bhāsarvajña who lived in the 2nd half of the 10th century: edited by C. D. Dalal, 1921 .. .. 1–4

16. **Saṅgītamakaranda:** a work on Music by Nārada: edited by M. R. Telang, 1920 .. .. .. 2–0

17. **Kavīndrācārya List:** list of Sanskrit works in the collection of Kavīndrācārya, a Benares Pandit (1656 A.D.): edited by R. Anantakrishna Shastry, with a foreword by Dr. Ganganatha Jha, 1921 .. .. 0–12

18. **Vārāhagṛhyasūtra:** Vedic ritual (domestic) of the Yajurveda: edited by Dr. R. Shamasastry, 1920 .. 0–10

19. **Lekhapaddhati:** a collection of models of state and private documents, dating from 8th to 15th centuries

Rs. A.

A.D.: edited by C. D. Dalal and G. K. Shrigondekar, 1925 .. .. .. .. .. 2–0

20. **Bhavişayattakahā or Pañcamīkahā**: a romance in Apabhraṁśa language by Dhanapāla (*circa* 12th century): edited by C. D. Dalal, and Dr. P. D. Gune, 1923 6–0

21. **A Descriptive Catalogue of the Palm-leaf and Important Paper MSS. in the Bhandars at Jessalmere**, compiled by C. D. Dalal, and edited by Pandit L. B. Gandhi, 1923 .. .. .. 3–4

22. **Paraśurāmakalpsūtra**: a work on Tantra, with commentary by Rāmeśvara: edited by A. Mahadeva Sastry, B.A., 1923 .. .. .. *out of print.*

23. **Nityotsava**: a supplement to the Paraśurāmakalpasūtra by Umānandanātha: edited by A. Mahadeva Sastry, B.A., 1923 .. .. .. *out of print.*

24. **Tantrarahasya**: a work on the Prābhākara School of Pūrvamīmāṁsā, by Rāmānujācārya: edited by Dr. R. Shamasastry, 1923 .. .. .. 1–8

25, 32. **Samarāṅgaṇa**: a work on architecture, town-planning and engineering, by king Bhoja of Dhara (11th century): edited by Mahamahopadhyaya T. Gaṇapati Shastri, Ph.D., 2 vols., 1924-1925 .. 10–0

26, 41. **Sādhanamālā**: a Buddhist Tāntric text of rituals, dated 1165 A.D. consisting of 312 small works, composed by distinguished writers: edited by Benoytosh Bhattacharyya, M.A., Ph.D., 2 vols., 1925–1928 .. 14–0

27. **A Descriptive Catalogue of MSS. in the Central Library, Baroda**: Vol. 1 (Veda, Vedalakṣaṇa and Upaniṣads), compiled by G. K. Shrigondekar, M.A. and K. S. Ramaswāmi Shastri, with a Preface by B. Bhattacharyya, Ph.D., 1925 .. .. 6–0

28. **Mānasollāsa or Abhilaṣitārthacintāmaṇi**: an encyclopædic work divided into one hundred chapters, treating of one hundred different topics by Someśvaradeva, a Chalukya king of the 12th century: edited by G. K. Shrigondekar, M.A., 3 vols., vol. I. 1925 .. 2–12

29. **Nalavilāsa**: a drama by Rāmchandrasūri, pupil of Hemachandrasūri, describing the Paurāṇika story of Nala and Damayantī: edited by G. K. Shrigondekar and L. B. Gandhi, 1926 .. .. .. 2–4

30, 31. **Tattvasaṅgraha**: a Buddhist philosophical work of the 8th century by S'āntarakṣita, a Professor at Nālandā with Pañjikā (commentary) by his disciple Kamalaśīla, also a Professor at Nālandā: edited by Pandit Embar Krishnamāchārya with a Foreword in English by B. Bhattacharyya, M.A., Ph.D., 2 vols. 1926 .. .. .. .. .. 24–0

Rs. A.

33, 34. **Mirat-i-Ahmadi:** By Ali Mahammad Khan, the last Moghul Dewan of Gujarat: edited in the original Persian by Syed Nawabali, Professor of Persian, Baroda College, 2 vols., 1926–1928 .. .. 19–8

35. **Mānavagṛhyasūtra:** a work on Vedic ritual (domestic) of the Yajurveda with the Bhāṣya of Aṣṭāvakra: edited with an introduction in Sanskrit by Pandit Rāmakrishna Harshaji S'āstrī, with a Preface by Prof. B. C. Lele, 1926 .. .. .. .. 5–0

36. **Nāṭyaśāstra:** of Bharata with the commentary of Abhinavagupta of Kashmir: edited by M. Ramakrishna Kavi, M.A., 4 vols, vol. I, illustrated, 1926 .. 6–0

37. **Apabhraṁs'akāvyatrayī:** consisting of three works, the Carcarī, Upadeśarasāyana and Kālasvarūpakulaka, by Jinadatta Sūri (12th century) with commentaries: edited with an elaborate introduction in Sanskrit by L. B. Gandhi, 1927 .. .. .. 4–0

38. **Nyāyapraveśa,** Part I (Sanskrit Text): on Buddhist Logic of Diṅnāga, with commentaries of Haribhadra Sūri and Pārśvadeva: edited by Principal A. B. Dhruva, M.A., LL.B., Pro-Vice-Chancellor, Hindu University, Benares .. .. .. *Shortly.*

39. **Nyāyapraveśa,** Part II (Tibetan Text): edited with introduction, notes, appendices, etc., by Pandit Vidhusekhara Bhattacharyya, Principal, Vidyabhavana, Visvabharati, 1927 .. .. .. .. 1–8

40. **Advayavajrasaṅgraha:** consisting of twenty short works on Buddhist philosophy by Advayavajra, a Buddhist savant belonging to the 11th century A.D., edited by Mahāmahopādhyāya Dr. Haraprasad Sastri, M.A., C.I.E., Hon. D. Litt., 1927 .. .. 2–0

42. **Kalpadrukośa:** standard work on Sanskrit Lexicography by Keśava: edited with an elaborate introduction and indexes by Pandit Ramavatara Sarma, M.A., Sahityacharya of Patna. In two volumes, vol. I, 1928 10–0

43. **Mirat-i-Ahmadi Supplement:** by Ali Muhammad Khan. Translated into English from the original Persian by Mr. C. N. Seddon, I.C.S. (retired) and Prof. Syed Nawab Ali, M.A. Corrected Re-issue 1928 .. 6–8

44. **Two Vajrayāna Works:** comprising Prajñopāyaviniścayasiddhi of Anaṅgavajra and Jñānasiddhi of Indrabhūti: two important works belonging to the little known Tantra school of Buddhism (8th century A.D.): edited by B. Bhattacharyya, Ph.D. 1929 .. 3–0

45. **Bhāvaprakāśana:** of S'āradātanaya, a comprehensive work on Dramaturgy and Rasa, belonging to A.D. 1175–50; edited by His Holiness Yadugiri Yatiraja Swami, Melkot and K. S. Ramaswami Sastri, Oriental Institute, Baroda 1929 .. .. .. 7–0

Rs. A.

46. Rāmacarita: of Abhinanda, Court poet of Hāravarṣa (cir. 9th century A.D.): edited by K. S. Ramaswami Sastri 1929 .. .. .. .. 7-8

47. Nañjarājayaśobhūṣaṇa: by Nṛsiṁhakavi *alias* Abhinava Kalidāsa, a work on Sanskrit Poetics and relates to the glorification of Nañjarāja, son of Vīrabhūpa of Mysore: edited by Pandit E. Krishnamacharya 1929.. 5-0

48. Nāṭyadarpaṇa: on dramaturgy by Rāmacandra Sūri with his own commentary: edited by Pandit L. B. Gandhi and G. K. Shrigondekar, M.A. 1929 .. 5-0

## II. BOOKS IN THE PRESS.

1. Nāṭyaśāstra: Vol. II. edited by M. Ramakrishna Kavi.

2. Jayākhyasaṁhitā: an authoritative Pāñcharātra work: edited by Pandit E. Krishnamacharyya of Vadtal.

3. Buddhist works on Logic: containing reconstructed texts from Chinese, Tibetan texts and English translation of Chinese texts of ancient authors like Nāgārjuna Vasubandhu, etc., by Prof. Giuseppe Tucci.

4. Mānasollāsa or Abhilaṣitārthacintāmaṇi, vol. II. edited by G. K. Shrigondekar, M.A.

5. A Descriptive Catalogue of MSS. in the Oriental Institute, Baroda, vol. II (S'rauta, Dharma and Gṛhya Sūtras) compiled by the Library staff.

6. A Descriptive Catalogue of MSS. in the Jain Bhandars at Pattan: edited from the notes of the late Mr. C. D. Dalal, by L. B. Gandhi, 2 vols.

7. Siddhāntabindu: on Vedānta philosophy by Madhusūdana Sarasvatī with commentary of Puruṣottama: edited by P. C. Divanji, M.A., LL.M.

8. Tathāgataguhyaka or Guhyasamāja: the earliest and the most authoritative work of the Tantra School of the Buddhists: edited by B. Bhattacharya, Ph.D.

9. Portuguese Vocables in the Asiatic Languages: Translated into English from Portuguese by Prof. A. X. Soares, M.A., Baroda College, Baroda.

10. Ahsan-ul-Tawarikh: history of the Safvi Period of Persian History, 15th and 16th centuries, by Ahsan Ramlu: edited by C. N. Seddon, I.C.S. (*retired*), Reader in Persian and Marathi, University of Oxford.

11. Abhisamayālaṅkārāloka: a lucid commentary on the Prajñāpāramitā, a Buddhist philosophical work, by Siṁhabhadra: edited by Prof. Giuseppe Tucci.

12. Mirat-i-Ahmadi Supplement of Ali Muhammad Khan: Persian text giving a history of Guzerat: edited by Syed Nawab Ali, M A., Principal, Bahauddin College, Junagadh

Rs. A.

13 **Kalpadrukośa**, Vol. II: indexes and vocabulary: edited by the late Mahamahopadhyaya Pandit Ramavatara Sarma Sahityācārya of Patna.

14 **Padmānanda Mahākāvya**: giving the life history of Risabhadeva, the first Tīrthaṅkara of the Jainas by Amarachandra Kavi of the 13th century: edited by H. R Kapadia, M.A.

15. **Daṇḍaviveka**; a comprehensive Penal Code of the ancient Hindus by Vardhamāna of the 12th century A.D.: edited by Mahamahopadhyaya Kamala Krishna Smrititīrtha.

16. **Nityotsava**: a supplement to the Paraśurāmakalpasūtra by Umānandanātha: second edition by Swami Trivikrama Tirtha.

17. **Śaktisaṅgama Tantra**: a voluminous compendium of the Hindu Tantra comprising four books on Tārā, Kāli, Sundarī and Chhinnamastā: edited by B. Bhattacharyya, Ph.D.

18. **Pārānanda Sūtra**: an ancient Tantric work of the Hindus in Sutra form giving details of many practices and rites: edited by Swami Trivikrama Tirtha.

19. **Udbhaṭālaṅkāravivṛti**: an ancient commentary on Udbhaṭa's Kavyalaṅkārasārasangraha generally attributed to Mukula Bhatta (10th century A.D.): edited by K. S. Ramaswami Sastri.

---

Write to—

THE DIRECTOR,

*Oriental Institute,*

*Baroda*